कविमहमुशनसमिव तं तातं नीलाम्बरं वन्दे ॥३८॥

यमिति नीलाम्बरं नीलाम्बरनामानं तातं जनकं वन्दे अहमित्यन्वयः कविं पण्डितमुशनसः साद‍ृश्येनैव काव्यसामर्थ्यलाभात् सङ्ख्यावान् पण्डितः कविरिति कोषाच्च कविवरमिति पाठे पण्डितश्रेष्ठमित्यर्थः तं कं गुरोरनु गणयन्ति मीमांसकाः प्रभाकरसद‍ृशं गणयन्ति, अनुकरोति इत्यत्रानुशब्दस्य सदृशवाचकत्वादित्यर्थः । यस्यास्तेमरणे धर्मकर्म श्रौतस्मार्त्तकर्मकाण्डम् सङ्कुचितं तत्सदृशकर्मकाण्डतत्वज्ञाभावादितिभावः कमिव उशनसमिव शुक्रमिव कविं कविनामानमुशना भार्गवः कविरित्यमरात् यं शुक्रं गुरोरनु बृहस्पतेः पश्चात् लोकाः दिवसगणनायां गणयन्ति यस्यशुक्रस्यास्ते अस्तकालेधर्म्मकर्म्म-शुक्रास्तकालाविहतं कर्म सङ्कुचितं निषिद्धमित्यर्थः ॥३८॥

सकलकलाः कल्पयितुं प्रभुः प्रबन्धस्य कुमुदबन्धोश्च ॥
सेनकुलतिलकभूपतिरेको राकाप्रदोषश्च ॥३९॥

स्वसेव्यं राजानं स्तौति सकलेति, प्रबन्धस्य ग्रन्थस्य सकलकलाः चतुःषष्ठि-कलाः कल्पयितुं ग्रन्थनिबन्धुं कर्त्तुञ्च कुमुदबन्धोः चन्द्रस्य सकलकलाः कल्पयितुं प्रकाशयितुं प्रभु समर्थः सेनकुलतिलकभूपतिः सेननामा स्ववंशोभ्वादिराजः तत्कुलतिलकः तत्कुलसम्भूतसकलराजश्रेष्ठः सेतुनामकग्रन्थकर्त्ता कविसेव्यः प्रवरसेननामा नरवरः तद्देशीयो भूपतिरित्यर्थः राकाप्रदोषः पूर्णिमासन्ध्याकालः एकः केवलः मुख्यो वा तथाच पूर्णचन्द्रसद‍ृशचतुःषष्टिकलाचतुरग्रन्थकरणसमर्थ-महाराजाधिराजप्रवरसेनपण्डितस्य मम ग्रन्थस्यच गौरवमितिध्वनिः ॥३९॥

काव्यस्याक्षरमैत्रीभाजो नच कर्कशा नच ग्राम्याः ॥
शब्दा अपि पुरुषा अपि साधव एवार्थबोधाय ॥४०॥

काव्येति काव्यस्य शब्दार्थयुगलस्यार्थबोधाय शब्दपक्षेऽर्थबोधजननाय पुरुषपक्षेऽर्थबोधवत्वाय शब्दा अपि पुरुषा अपि अर्थभेदात्समुच्चयेऽपिद्वयम् पुष्णन्ती विशेषः साधव एव व्याकरणनिष्पाद्या एव साधुत्वज्ञानं विना न बोध इत्याशयः पक्षे काव्यनिष्णातबुद्धयः अक्षराणां वर्णानां या मैत्री यद्वर्गमादा-योत्थानं तमादायैव विश्रामरूपा अक्षरमादायैववार्तां भजन्ति ते शब्दास्तथा काव्यविशेषणत्वेप्ययमेवार्थः पुरुषपक्षे न क्षरति नश्यतीति व्युत्पत्त्या अक्षरा अविनाशिनी या मैत्री मित्रतातां भजन्ति ये ते तथा अक्षरेणाक्षरसंबन्धेनान्यत्

पूर्ववत् इतिकश्चित् नच कर्क्कशाः रसापकर्षका यथा शृङ्गाररसे टवर्गादयः वीररसे तद्भिन्नाः शब्दाः यद्वा कर्क्कशादुर्ग्योऽग्यास्तद्भिन्नाः पक्षे कर्क्कशाः क्रूरमतयः व्याकरणमीमांसाविचारकारकानवग्राम्याः चपेटाकटिशब्दादयः तेषां बोधकत्वेऽपि अवैदग्ध्यसूचकत्वेन रसापकर्षकत्वात् पक्षे ग्राममगामिनः नगरपत्तनादर्शिनइत्यर्थः, तथाच वैदग्ध्यरहिता इतिभावः कर्क्कशग्राम्यादीनामबोधेऽपि सहृदयनागरिककाव्यनिपुणवृद्धीनां मत्काव्यबोधो भविष्यत्येव तानेवोद्दिश्य कृतत्वादिति ध्वनिः ॥४०॥

वंशे घुण इव न विशति दोषो रसभाविते सतां मनसि ॥
रसमपि तु न प्रतीच्छाति बहुदोषः सन्निपातीव ॥४१॥

वंश इति सतां सहृदयानां प्राचीनरसबोधे प्रतिरोधिदोषरहितानां मनसि हृदये रसभाविते द्रवीभूतशृङ्गारादिरसपूरिते दोषः काव्यरसप्रत्यक्षप्रतिरोधिदोषः न विशति रसपूरितत्वेन स्थानाभावादिति भावः क इव वंशे वेणौ घुण इव कीटविशेष इव वंशे रसेन तैलेन भाविते वारं वारं प्रथमं लेपिते पश्चात् घुणो न विशतीत्यर्थः, तर्हि सर्वे कुतो न मनांसि रसेन भावयन्तीत्यत आह रसमपि पातुं नेच्छति बहुदोष इति बहुदोषः प्रथमसञ्जातावैदग्ध्यादिबहुदोषः रसं शृङ्गारादि पातुं सम्यगनुभवितुमिच्छत्यपि न किं वक्तव्यमनुभवतीत्यर्थः क इव सन्निपाती युगपत्प्रकुपितकफवातपित्तः पुमानिवं बहुदोषः मूर्च्छाशीतदाहप्रलापादिमान् रसमपि मृगाङ्कादिकमपि पातुं नेच्छतीत्यर्थः तथाच रसिकानां मम ग्रन्थे दोषस्फुरणमेव नसदोषाणां सरसे मम ग्रन्थे प्रवृत्त्यभावेपि मम हानिर्न्नेति ध्वनिः ॥४१॥

विगुणोऽपिकाव्यबन्धः साधूनामाननङ्गतः स्वदते ॥
फूत्कारोऽपि सुवंशैरनूद्यमानः श्रुतिं हरति ॥४२॥

विगुणोऽपीति काव्यबन्धः काव्यप्रबन्धः रचनामात्रं वा विगुणोऽपि, ओजःप्रसादादिगुणरहितोऽपीत्यर्थः साधूनां सहृदयानामाननं गतः मुखोच्चारितः स्वदते उत्तमकाव्यवत् सुखसम्पादको भवतीत्यर्थः सामान्यकाव्यस्योत्तमकाव्यवत्सुखजनकत्वं दृष्टान्तयति, फुत्कारोऽपि गुणसामान्यरहितशब्दोऽपि सुवंशैः समीचीनवंशिकाभिः अनूद्यमानः उत्पादकभिन्नैः उद्घाटितः श्रुतिं श्रवणं हरति अन्येभ्यः श्रवणीयेभ्यो व्यावर्त्तयतीत्यर्थः यद्वाश्रुतिं वेदं हरति परिहारयतीत्यर्थः

तथाच मम काव्यस्य विगुणत्वेऽपि साधुपरिग्रहे सत्युत्कर्षः साधुप्रसादाद्भविष्यतीति कविविज्ञप्तिः ॥४२॥

**स्वयमपि भूरिच्छिद्रश्चापलमपि सर्वतोमुखं तन्वन् ॥**
**तितउस्तुषस्य पिशुनो दोषस्य विवेचनेऽधिकृतः ॥४३॥**

स्वयमिति तितउः चालनी पिशुनः खलः स्वयमपि भूरिच्छिद्रः प्रचुररन्ध्रः प्रचुरकलङ्कश्च सर्वतोमुखं सर्वदिक्सञ्चारि सर्वाध्यक्षञ्च चापलं मण्डलीकरण चाञ्चल्यञ्च तन्वन् विस्तारयन् तुषस्य चूर्णं सारभूतं परित्यज्य तुषस्य दोषस्य गुणं सारं विहाय परापवादमात्रस्य विवेचने पृथक् करणे विविच्यकथने चाधिकृतः तदेकाधिकारः कृतः तथाच दोषमात्रस्य ग्राहिणां मम भीर्नैतिध्वन्यते, तनोतेर्डउः सन्वच्चेत्यनेन डउप्रत्यये रूपम् उच्चारणसाधर्म्याद्कारोकारयोर्गुणो न भवतीति चालनी तितउः पुमान् इत्यमरः ॥४३॥

**अन्तर्गूढानर्थानव्यञ्जयतः प्रसादरहितस्य ॥**
**सन्दर्भस्य नदस्य च न रसः प्रीत्यै रसज्ञानाम् ॥४४॥**

अन्तरिति सन्दर्भस्य ग्रन्थस्य नदस्य शोणादेश्च रसः शृङ्गारादिरसः जलञ्च रसज्ञानां शृङ्गारादिरसतत्त्वज्ञानां सम्यक्परीक्ष्यजलंपिवतीञ्च प्रीत्यै स्वादनसुखाय न भवतीत्यर्थः किं भूतस्य अन्तर्गूढान् अर्थान् अव्यञ्जयतः व्यञ्जनावृत्याऽबोधयतः पक्षे अन्तर्निलीनान् अर्थान् शैवालकीटादीन् अदर्शयतः प्रसादरहितस्य सुबोधत्वरूपकाव्यमुख्यगुणरहितस्य पक्षे प्रसादो नैर्मल्यं तद्रहितस्येत्यर्थः ॥४४॥

**यदसेव्यनीयमसतामममृतप्रायं सुवर्णविन्यासम् ॥**
**सुरसार्थमयं काव्यं त्रिविष्टपं वा समं विद्मः ॥४५॥**

यदिति तत् काव्यं त्रिविष्टपंस्वर्गलोकं वा समुच्चये समं सदृशं विद्मः जानीमः तथाच यथा स्वर्गलोकचारिणां सुखं तथैव काव्यकारकतत्त्वज्ञानां मर्त्येऽपि स्वर्गसुखं काव्यकरणजन्यपुण्यं चातो देवाः सुखभागिन एव कवयः सुखपुण्योभयभागित्वेन देवाधिका इति व्यज्यते,यत् काव्यं त्रिविष्टपञ्च असतां पापिनामविदग्धानाञ्चासेवनीयं सेवाया अयोग्यं निष्फलत्वात् पक्षे गन्तुमशक्यत्वात् अमृतप्रायममृततुल्यञ्च पक्षेऽमृतबहुलं सुवर्णविन्यासं सुवर्णानां समीचीनलकारादिवर्णानां पक्षे सुवर्णानां हेम्नां सुन्दररूपाणां विन्यासो योजनं पक्षे सम्बन्धो यस्मिन् तदित्यर्थः

सुरसार्थमयं समीचीना रसाः अर्थाश्च यस्यकाव्यस्य तत् पक्षे सुराणां देवानां सार्थः समूहस्तन्मयमित्यर्थः ॥४५॥

सत्कविरसनासूर्पीनिस्तुषतरशब्दशालिपाकेन ॥
तृप्तो दयिताधरमपि नाद्रियते का सुधा दासी ॥४६॥

सत्कवीति समीचीनस्य कवेः एवञ्च काव्यसामान्थं न तथेति ध्वन्यते रसना रससाक्षात्कर्त्री जिह्वा सैव सूर्पी स्वल्पसूर्पं प्रस्फोटनं सूर्पमस्त्रीत्यमरः तया निस्तुषतरः निर्बुसः शब्दशालिः शब्दधान्यं तस्य पाकेन पाचितेन तेनेत्यर्थः तृप्तः भोजनद्वारा तृप्तो जनः दयिताधरं प्रेयस्या अधरमपि नाद्रियते नादरविषयं करोति सर्वा पेक्षयाधिकत्वेन लोकप्रसिद्धमपि नाद्रियते इति सुधा पीयूषरूपा का तेषामादरविषयः कथं स्यादधरस्य दासी यतः अधरादत्यन्ताल्पगुणा तथाच काव्यरसज्ञस्य सत्काव्यरसेन यथा तृप्तिः न तथान्येन केनापि पदार्थान्तरेणेति भ.वः ॥४६॥

अकलितशब्दालङ्कृतिरनुज्ज्वला स्खलितपदनिवेशापि ॥
अभिसारिकेव रमयति सूक्तिः सोत्कर्षशृङ्गारा ॥४७॥

अकलितेति सूक्तिः यस्याः श्रवणेन सुखविशेषो भवति ईदृशी कविवाक् इत्यर्थः अतएवोक्तिविशेषः काव्यं मिति, मञ्जरीकृता निरुक्तमेव काव्यसामान्यलक्षणमनुमतं ग्रन्थान्तरे तु काव्यविशेषस्येति न विरोधः अतएव स्खलितपदत्त्वेऽपि न काव्यत्वहानिरिति हृदयम् अभिसारिकेव कृष्णाभिसारिकेव रमयति श्रोतारं नायकञ्च सुखयतीत्यर्थः सोत्कर्षशृङ्गारा शृङ्गाररसप्रत्यक्षोपयोगिसकलपदार्थसहितशृङ्गाररसप्रतिपादिका पक्षे उत्कर्षः निरुपधिदृढस्नेहः तत्सहितः शृङ्गाररसो यस्याः सेत्यर्थः किंभूता सूक्तिः अभिसारिका चअकलिता अवर्त्तमानाः शब्दालङ्कृतयोऽनुप्रासपद्मबन्धादयो यस्यां सा पक्षे अकलिता अज्ञाताः शब्दाः यासामेतादृश्यः अलङ्कृतयः भूषणानि यस्याः सा श्रवणयोः शब्दायमानालङ्करणशून्येति भावः अपिः सर्वत्र सम्बध्यते, तेन रमणसामग्र्यभावेऽपि रमयतीतिविरोधेऽपिः अनुज्ज्वलापि औज्ज्वल्यं नाम काव्यगुणास्तद्रहितापि पक्षे औज्ज्वल्यं शुभ्रवस्त्रभूषादि तद्रहिताकृष्णाभिसारिकत्वात् स्खलितपदनिवेशापि स्खलि तानि व्याकरणासिद्धानि यानि पदानि तेषां निवेशो ग्रन्थनं यस्यां सा पक्षे स्खलितः अन्धकारे निम्नोन्नते त्वरावशात् पतितानां चरणानां निवेशः प्रचारो

यस्याः सा तथा च यथा सद्वाराधिष्ठिता सभा एकद्वित्रिपार्षदरहिताऽपि शोभते एवमेव रसराजेन सोत्कर्षशृङ्गारेणाधिष्ठितं काव्यं शब्दालङ्कारशून्यमनुज्ज्वलं स्खलितपदनिवेशमपि शोभते विदग्धंरसयतीति समुदायार्थः प्राञ्चस्तु अकलितशब्दालङ्कृतिरपि शब्दालङ्कारशून्यापीत्यर्थः अनेनार्थालङ्कारस्यावश्यापेक्षणीयस्य काव्ये सत्त्वमावेदितमभिसारिकापक्षे पूर्ववत् अनुज्ज्वलेति विशेषणमनुभवत् अभिसारिकापक्षे शुक्लवस्तुभूषादिमती शुक्लाभिसारिका अस्खलितानि व्याकरणसिद्धानि यानि पदानि धातुप्रातिपदिकानि तेषां निवेशो योजनं यस्यां सेत्यर्थः पक्षे त्वरा लोकदर्शनात् स्खलितपदनिवेशेत्यर्थः सूक्तिः काव्यं वाग्विदग्धाच यद्वा काव्यपक्षे स्खलितः झटितिभग्नः पदनिवेशः पदसमासो यस्यामल्पसमासेत्यर्थः सोत्कर्षशृङ्गारेतिपूर्ववत् तथाच सत्काव्ये शब्दालङ्कारदीर्घसमासादिविरहेऽपि सोत्कर्षशृङ्गाररसराजशालित्वेन विदग्धमनो रञ्जनस्य सार्व्वत्रिकत्वात् ॥४७॥

अध्वनि पदग्रहपरं मदयति हृदयं नवा नवा श्रवणम् ॥
काव्यमभिज्ञसभायां मञ्जीरं केलिवेलायाम् ॥४८॥

अध्वनीति अध्वनि व्यङ्ग्यशून्यं ननूत्तमभिन्नम् उत्तमभिन्नस्यापि गुणीभूतव्यङ्ग्यस्य सहृदयहृदयाह्लादजनकत्वेन काव्यत्वात् मञ्जीरपक्षे शिञ्जितशून्यं पदग्रहपरं सुललितपदग्रहणमात्रतात्पर्य्यकमनुप्रासानुरोधेनाधिकपदं वा पक्षेऽत्यन्तसङ्कुलतयाचरणलग्नं हृदयंमदयति नवा हृदयं सहर्षं न करोती त्यर्थः पक्षे समदनं न करोती त्यर्थः नवा श्रवणं मदयतीतिसमानमेतादृशं काव्यमभिज्ञ सभायां विदग्धसमाजे एतादृशं मञ्जीरं नूपुरे केलिवेलायां सुरत समये नवेतिद्वयं देशकालभेदेन प्रयोजनभेदवाक्यभेदसूचनार्थं तथाहिकाव्य प्रयोजनमभिज्ञहृदय श्रवणसुखं मञ्जीर प्रयोजनंसुरतकामोद्दीपनं श्रवणसुखञ्च तत्प्रयोजनरहितमिदं द्वयमपि निष्फलमेवेति भावः मञ्जीरो नूपुरोऽस्त्रियामित्यमरकोषेऽस्त्रियामिति मञ्जीरेप्यन्वेतीति मञ्जीरमपि साधु ॥४८॥

आस्वादितदयिताधर सुधारसस्यैव सूक्तयो मधुराः ॥
अकलितरसालमुकुलो न कोकिलः कलमुदञ्चयति ॥४९॥

आस्वादितेति आस्वादितः निपीयतत्त्वतो ज्ञातः दयिताधरस्यामृतरसो येन तस्य महाकवेरित्यर्थः अत्र दयितायदेन बाल्यमारभ्य सर्वासु यौवनावस्थासु नाना

विधसुखजनकानां दयिताधरपानानां तत्त्वपरिज्ञानं तेन सकलनायिकावर्णन सामर्थ्यं सूचितं, सूक्तयः काव्यानि, मधुराः देवताप्रसादशालिकविकाव्यतोऽधिका भवन्तीत्यर्थः । दृष्टान्तमाह अकलितरसालमुकुलः अकलितः अभुक्तः रसालस्याम्रस्य मुकुलः कोरकः मुकुलपदेन बाल्यमारभ्यास्वादनमुच्यते अदलितेतिपाठेऽप्ययमेवार्थः कोकिलः कलं पञ्चमस्वरविशेषं नोदीरयति उच्चारयतीत्यर्थः, अथवा आस्वादितौ दयिताधरसुधारसौ येन तस्येत्यर्थः तथाच प्रथमं मनुष्यदेहेन दयिताधरपानं कृत्वा देवदेहेनामृतरसपानं करोति ततः दयिताधररससुधारसयोरधिकं किञ्चिन्निर्मातव्यमित्याशयेन मर्त्त्यमण्डलमागत्य महाकवयो ब्रह्मानन्दतुल्यानन्दजनकोत्तमकाव्यं कुर्वन्तीति कवयः काव्यञ्च सर्वाधिक मितिध्वनिः॥४९॥

बालाकटाक्षसूत्रितमसतीनेत्रत्रिभागकृतभाष्यम् ॥
कविमाणवकाः दूतीव्याख्यातमधीयते भावम् ॥५०

बालेति कविमाणवकाः कवयः माणवका वटवः शिष्या इति यावत् अध्ययन कर्त्तृत्वात् भावं गूढमर्थम् अधीयते तस्याध्ययनं कुर्वन्तीत्यर्थः किंभूतं भावं दूतीव्याख्यातं सञ्चारिणीविवृतं कस्य ग्रन्थस्य भावमित्याह असत्याश्चपलाया नेत्रत्रिभागेन कामशास्त्रोक्तनानाप्रभेदभिन्ननेत्रविकारेण कृतं भाष्यं सूत्रार्थस्यातिसूक्ष्मस्य परिभाषणं किञ्चिद्विविच्य कथनं यस्य तमित्यर्थः कुत्रत्यं भाष्यमित्याह बालयोः मुग्धयोः स्वकीयायाः परकीयाया वेत्यन्यदेतत् कटाक्षेणरक्ततामात्रशालिनानेत्रेण सूत्रितं सूचितं तदुक्तं सूचनात्सूत्रमित्युक्तमिति तथाच कामिनीचेष्टितं दूतीं विना न ज्ञायत इति दूतीपरिचयोऽवश्यं विधातव्यो यद्वक्ष्यति दुतीरहिता इत्यादि सबलः पन्थाः सर्वस्य, यद्वा दूतीव्याख्यातमेवाधीयते निरुक्तं भावं तेतावन्तमेव जानन्ति नाधिकम् अतएव ते कविमाणवकाः कविबालाः अल्पज्ञा इत्यर्थः तथाच बालानेत्रसूचितमसतीनेत्रत्रिभागकृतभाष्यं दूतीव्याख्यातमखिलं जानन्तः ताभिर सूचितान् सर्वान् शृङ्गारोपयुक्तान् जानन्ति त एव शृङ्गाररसाभिज्ञाः कवयः अन्ये शृङ्गाररसज्ञानरहिता एव कवयः, अतएवोक्तम् जयदेवेन शृङ्गारोत्तरसत्प्रमेयरचनेत्यादि यद्वा ये कवयः भावमधीयते लब्धर्थस्तु विवक्षितः ते कविमाणवकाः देवताप्रसादादिना प्रथमं कवयो भूत्वा पश्चान्माणवकाः परमप्रयासेन गुरुक्रमात्रग्राहका इत्यर्थश्छिन्नप्ररूढो वृक्ष इत्यादौ तथा दर्शनात् तथाच तेषामविदग्धत्वान्नकाव्यचारुता नवा प्रतिष्ठापि भवती

ति यौवनारम्भेबालासतीदूतीभ्योऽधीत्य देवताप्रसादशास्त्रादिज्ञानं सम्पाद्य सम्प्रति बालासतीदूतीनामप्यध्यापकाः कवयो मादृशाएव अतएव तत्काव्यं चार्वितियद्वा कवीनां भाणकाः शिष्याः दूतीव्याख्यातं भावमधीयत एव तथाच कविभ्योऽधीत्यापि दूतीतोऽध्ययनं रसराजपरिज्ञानाय भवतीति दूतीजनः कर्त्तव्य इत्युपदेशः ॥५०॥

**मसृणपदरीतिगतयः सज्जनहृदयाभिसारिकाः सुरसाः ॥**
**मदनाद्वयोपनिषदो विशदा गोवर्धनस्यार्याः ॥५१॥**

मसृणेति गोवर्धनस्य गोवर्धननाम्नः पक्षे गवां वर्द्धनस्य आर्य्याः छन्दो विशेषरूपाः श्रेष्ठाभिसारिकाश्च जयन्तीतिशेषः किंभूताः मसृणानि स्निग्धानि मधुराणि कोमलानीति यावत् यानि पदानि विभक्त्यन्तनितेषां रीतयो वैदर्भ्याद यस्तासां गतिर्ज्ञानं यासु ता इत्यर्थः अभिसारिकापक्षे मसृणानां कोमलानां रीत्यागजहंसादिरीत्या गमनं यासां ता इत्यर्थः यद्वा मसृणा शोभना पदरीतिः पादविन्यासप्रकारो यत्र तादृशी गतिर्गमनं यासां ता इत्यर्थः सज्जनानां काव्य परिपक्वबुद्धीनां हृदयानि मनांसि अभिसारयन्ति द्रावयन्ति वशी कुर्वन्तीत्यर्थः पक्षे सज्जनानां विदग्धानां हृदयानि अभिसारयन्तीत्यर्थः सुरसाः नवरसबोधिकाः पक्षे शृङ्गारिण्यः मदनेन द्वयमद्वैतमानन्दविशेषः कारणेन कार्य्यलक्षणात् तस्यो पनिषदः अन्यानर्थानपहाय मदनाद्वैतानन्दमात्रबोधिका इत्यर्थः अन्या अपि उपनिषदः ब्रह्मानन्दमेव प्रतिपादयन्ति अन्यार्थान् विहाय यथेति समुदितार्थः पक्षे मदनेन मनोजेन द्वारेण यदद्वैतं स्त्रीपुरुषयोर्द्वैतसोरैक्यम् तदुपनिषदः शिरोलङ्करणरूपा इत्यर्थः गोवर्धनशब्दभेदेन व्यङ्ग्यानां भेदो विस्तरभिया न दर्शितः ॥५१॥

**वाणीप्राकृतसमुचितरसाबलेनैवसंस्कृतिंनीता ॥**
**निम्नानुरूपनीराकलिन्दकन्येवगगनतलम् ॥५२॥**

वाणीति वाणी सरस्वती प्राकृतानां भाषाविशेषरूपाणां समुचितः योग्यो रसो यस्याः सेत्यर्थः शालिवाहनेन गथासप्तशती कृता सैव तथेतिभावः अथच कलिकालदोषेण प्राकृतः पामरः कुलशीलादिहीनः तद्बोध्यरसेत्यर्थः तदुक्तं लक्ष्मीर्लक्षणहीने च कुलहीने सरस्वती कुपात्रे रमते रामा मेघो वर्षति पर्वते इत्यादि बलेनैव बलात्कारेणैव पक्षे बलभद्रेणैवेत्यर्थः संस्कृतिं साधुपदत्वं

सकलशास्त्राभिज्ञग्रहणयोग्यतामितियावत् नीता प्रापिता दृष्टान्तयति निम्नस्य गम्भीरस्य, अनुरूपं योग्यं नीरंयस्या सा कलिन्दगिरिकन्या यमुना गगनतल माकाशं बलभद्रेण यथा नीता तथेत्यर्थः तथाच निन्दितमर्त्यस्थलस्वर्गयोर्यावान् भेदस्ता वानेवप्राकृतसंस्कृतयोरितिममापि बलभद्रतुल्यता ॥५२॥

आर्य्यासप्तशतीयं प्रगल्भमनसामनादृता येषाम् ॥
दूतीरहिता इव ते न कामिनी मनसि निविशन्ते ॥५३॥

आर्येति इयं गोवर्धनकृता नत्वन्यकृतेतिभावः येषांप्रगल्भं साभिमानं सप्त शत्यानया किमधिकं ज्ञेयमिति सावहेलनमिति यावत् एतादृशं मनोयेषां तादृशांम् अनादृतार्यासप्तशतीयमित्यन्वयः अवहेलितेत्यर्थः ते अनादरकर्त्तारः कामिनीनां सकलकामकलाचतुराणां मनसि हृदये ननिविशन्ते न निविष्टाभव न्तीत्यर्थः यथा दूतीरहिताः दूतीशून्याः नायकाः स्वयं सम्पादितनायिकास्नेहा अपि नायिकाहृदये स्थिरा न भवन्ति दूतीशालिनायकेनान्येन प्रेमकरणात् दूती सत्त्वे कल्पितवार्त्तयापि तया प्रेमसंरक्षणात् एवमेवार्य्यासप्तशतीपरिज्ञानेन सकल कलापरिज्ञानेन दूत्यादि संरक्षणेन च नायिकाहृदयस्थैर्य्यंभवतीति श्लोकार्थः ॥५३

रतरीतिवीतवसना प्रियेव शुद्धापि वाङ्मुदे सरसा ॥
अरसालंकृतिरपि न रोचते शालभञ्जीव ॥५४॥

रतरीतीति वाक्कविता शुद्धापि अलङ्कारसामान्यशून्यापि मुदे हर्षाय यदि सरसा प्राचुर्य्येण रसप्रतिपादिनी तथाच रसवत्काव्यमित्येवकाव्यसामान्यलक्षणं नतु सालङ्कारत्वमपि विशेषणमित्यभिमानः केव प्रियेव किम्भूता रतरीतौ सुरतपरिपाट्यां वीतं नायकापहृतं वसनं परिधानीयं यस्याः सेत्यर्थः शुद्धापि सुरतभ्रष्टभूषणापि सरसा शृङ्गाररसे लोलुपा अरसा रसाबोधिका पक्षे शृङ्गार रस विमुखी सालंकृतिरपि अलङ्कारयुक्तापि पक्षे सकलभूषणसहितापि न रोचते अभिलषिता न भवतीत्यर्थः केव सालभञ्जीव दारुपुत्रीव तथाच सकलभूषण सहितापि अरसा काष्ठकृतदिव्यस्त्रीप्रतिमा यथा न रुचिविषयः एवमेव रसशून्या वाक्नायिकाच न रोचते यतः रसालंङ्कार योर्म्मध्ये रसस्यैव प्राधान्यमतोऽलंङ्कार शून्यमपि सरसंकाव्यमेव यद्वा वाक् शुद्धापि स्फुटालंङ्कार शून्यापि तथाचास्फुटा लङ्कारसत्त्वेऽपिरसाधिक्यादविरोधः । अतएवरतरीतिवीतवसनेत्यादिनाप्रथमवस्त्र सम्बन्धेऽविरसोत्कर्षसमासद्रहितत्वं ज्ञाप्यते नतु सामान्यत इति शालभञ्जी

दारुपुत्रीति द्वैमः ॥५४॥ नमामिभवभाविनीचरणचारुपङ्केरुहम् ॥ इति श्री भवानी ना थापरनामक श्री सचलविरचितगोवर्धनसप्तशतीविवरणे रसानन्दे ग्रन्थारम्भवज्या व्याख्या समाप्ता ॥

# ॥ अथाकार वृज्या ॥

अवधिदि नावधिजीवाः प्रसीद जीवन्तु पथिकजनजायाः ॥
दुर्ल्लङ्घ्यवर्त्मशैलौ स्तनौ पिधेहि प्रपापालि ॥ १ ॥

धर्म्मिष्ठः कश्चित्पुरुषो यौवनोद्धतां प्रपारक्षिकामालोक्याह । अवधीति हेप्रपापालि पानीयशालिकारक्षिके नतु स्वामिनि तेन विरुद्धाचरणे तव प्रभुः तवाधिकारं न स्थापयिष्यतीतितवैव हितं वच्मीति मदुक्तमवश्यं कर्त्तव्यमितिध्वन्यते, कुचावाच्छादय, किंभूतौ दुर्ल्लङ्घ्यं वर्त्म पन्था ययोस्तादृशौ यौ शैलौ पर्वतौ ताविवेत्यर्थः अनेनानानुपेक्षणीयत्वमुन्नतत्वं कठिनत्वंमार्गान्तराभावश्चोच्यते प्रसीद प्रसादं कुरु तथाच त्वत्प्रसादो बहुगुण इति व्यज्यते पिधानस्य किम्फलमित्यत आह पथिकजनानां वैदेशिकजनानामनेन कामातुरत्वेन तेषां धैर्य्याभाव इति व्यज्यते जाया वध्वः जीवन्तु बहुवचनेन बहुवधभागित्वं द्योत्यते प्रकारान्तरेण जीवनं न तासामित्याह अवधिदिनं विदेशगमनसमयेऽस्मिन् दिवसे आगमिष्यामीति पत्या यदुक्तं तद्दिनं तदवधि तदवध्येव जीवो जीवनं यासां ता इत्यर्थः तथाच पतिवृतायाः प्रकाराभावः वधेऽधिक पापजनकत्वञ्चेति व्यज्यते प्रपा पानीयशालिकेत्यमरः पथिकोक्तिरेवेति कश्चित् पूर्वमतिलम्पटस्य वृद्धस्य स्तनौ मयादृष्टाविति वक्तुमुक्तिरित्येके ॥ १ ॥

अतिवत्सला सुशीला सेवाचतुरा मनोऽनुकूलाच ॥
अजनि विनीता गृहिणी सपदि सपत्नीस्तनोद्भेदे ॥२॥

भार्य्यादुर्विनयखिन्नं प्रति विवाहान्तरकरणं सखोपदिशति, अतीति अतिवत्सला, अत्यन्त वात्सल्ययुक्ता पूर्वकान्तप्रेमापेक्षयाऽधिकप्रेमवतीत्यर्थः सुशीलाऽकुटिलस्वभावा स्वामिसेवापरा चातुर्य्यवती मनोऽभिलषितमात्रकर्त्री च गृहणी पृथक्परिणीता स्त्रीतिग्रन्थकारपरिभाषा सपदि झटिति अजनि सपत्नीस्तनोद्भेदे स्तनोद्गमे सति तथाच सपत्नीं दृष्ट्वैव तवाधीनेयं दुष्टा भविष्यतीति विवाहं कुर्वितिवाक्यार्थः, वस्तुतो मातृगृहस्थितां कृतपरिणयान्त-

रपतिसन्देशेन भर्त्सयन्तीं कन्यकामुपदिशति मातादृति मादृशां पन्थाः ॥२॥

अयिकूलनिचुलमूलच्छेदनदुःशीलवीचिवाचाले ॥
वकविघसपङ्कसारा न चिरात्कावेरि भवितासि ॥३॥

निजकुलजन द्वेषिणीं यौवनोन्मत्तां नवधनोन्मत्तांवा कश्चिदन्योत्तया वक्ति अयीति, अयि इति संबोधने नायिकेइत्यर्थः कूले तटे ये निचुला इज्जलास्तेषां यन्मूलछेदनमामूलादुत्पाटनं तेन दुश्शीला दुःस्वभावा या वीचयः लहर्य्यः स्ताभिः वाचाले बहुविधशब्दकारिणि अनेनानुचितकार्य्यकारित्वं कथ्यते कावेरि नचिरात् शीघ्रमेव भवितासि कीदृशी बकस्यातिनिन्द्य पक्षिविशेषस्यअने नसारसराजहं साद्यनु पयोगित्वं ध्वन्यते तेन नायिकाया अपि कुत्सित नायिकोपभोगो व्यज्यते विघसः भुक्तविशेषः पङ्कः कर्द्दमः सारः सारभूतो यस्या इत्यर्थः विगतः निवृत्तः घसः अदनं यस्मात्सविघसः भुक्तशेषइत्यर्थः अतएव नारदभोजनदानान्तरं बुभुजे विघसं धीमानिति हरिवंशे पारिजातहरणे अमृतं विघसे यज्ञशेषभोजनशेषयोरित्यमरः निचुलोम्बुजइज्जल इत्यपि तथाच यथा कावेरी नदी वर्षान्यसमये पङ्कमात्रावशेषा । चातुर्म्मास्ये जलाधिक्यदोषेण तटतरुन् वृक्षानिपातयति एवमेव त्वमपि चञ्चलां यौवनधनसमृद्धिं प्राप्य कुलजनान् म्लानान् कुरुषे बहुविधपापञ्चेति ॥ ३ ॥

अयिविविधवचनरचने ददासि चन्द्रं करे समानीय ॥
व्यसनदिवसेषु दूति क्वपुन स्त्वं दर्शनीयासि ॥ ४ ॥

परपुरुषसङ्गमाय प्रेरयन्तीं दूतीम्प्रति सती नायका वदति अयीति, दूतिदौत्यवृत्त्यैव धनग्राहिणि ननु सखि अनेन मम क्षत्या क्षतिर्न्नेति व्यज्यते विविधातथ्येऽपिअतथ्या वचनस्य वाक्यस्य रचना घटना यस्या इत्यर्थः अनेन तव वचनश्रवणेऽपि धर्म्महानिरिति सूच्यते, चन्द्रं करे हस्ते समानीय ददासि न दातुं कथयसि, तथाच ब्रह्मणोऽपि अशक्यं बचसा साधयामीति लोकोक्तिः व्यसनदिवसेषु परपुरुषभोगजनितपापविपाककृतनरकदिवसेषु कुलपितृकुलजसकलविरोध दिवसेष्वितिवा त्वं क दर्शनीया दर्शनयोग्या अपितु नेत्यर्थः का वर्त्ता प्रकारकरणस्येतिभावः अतीव व्यसनदिवसेषु प्रेमभङ्गजनितदुःखदिवसेषु यौवनापगमेषु वेत्यर्थः चन्द्रमत्याह्लादविषयं नायकं तथाच यदि व्यसनसमये तत्साध्यः प्रतीकारः स्यात् तदा स्वीकरोमि नान्यथेति तात्पर्येण दर्शनीया-

सीत्यन्तवाक्ये नायिकयोक्ते; अस्तुम्लानिरित्यग्रिमश्लोकेन दूत्युत्तरमिति युग्मकमिदमिति विदग्धसरणिः ॥ ४ ॥

अस्तुम्लानिर्लोको लाञ्छनमपदिशतु हीयतामोजः ॥
तदपि न मुञ्चति स त्वां वसुधाछायामिव सुधांशुः ॥५॥

प्रेमाभिव्यक्तथा निर्विग्नतया निवृत्तां नायिकां पुनर्दूती प्रेरयति, अस्त्विवति, म्लानिरस्तु रूपमालिन्यमस्तु, पक्षे म्लानिः मुखमालिन्यं सभायामस्त्वित्यर्थः गुरुजनस्य वा लोकः सर्वः लाञ्छनं कलङ्कमपदिशतु वदतु पक्षे लोकः खलः लांछनमपवादम् ओजःतेजः हीयतां हीनं भवतु पक्षे सशङ्कितत्वात् ओजः हृदयप्रकाशः तेजो वा यद्यपि एतत्सर्वं भवतु तथापि स नायकः त्वां न मुञ्चति वर्त्तमान सामीप्येइत्यादिस्वरसात्नत्यक्ष्यतीत्यर्थः कामिव वसुधा छायां पृथ्वीप्रतिबिम्बं सधांशुरमृतदीधितिरिवेत्येर्थः तथाचोत्तमनायकस्यायं स्वभावः यदङ्गीकृतेऽर्थे लक्षसङ्ख्यकदोषेऽपि न परित्यजति तमर्थं यथा पृथ्वी च्छायाकृतदोषसहिष्णुश्चन्द्रः दूरेऽपि च स पृथ्वीच्छायाग्राही पृथ्वीच्छायादानकर्त्तेति त्वयापि तथैव कर्त्तव्यमिति भावः ॥ ५ ॥

अतिचापलं वितन्वन्नन्तर्निवसन्निकामकाठिन्यः ॥
मुखरयसि स्वयमेतां सद्वृत्तां शङ्कुरिव घराटाम् ॥६॥

सर्व्वदेव भवत्यास्सखी मौखर्य्यं करोतीति वादिनं नायकं नायिकासख्याह अतीतिएतां मत्सखीं स्वयमेवात्मत्कथनं विनेत्यर्थः सद्वृत्तांसमीचीनवृत्तान्तां पातिव्रत्यादिगुणयुक्तामित्यर्थः पक्षे सत् समीचीनं वृत्तं मण्डलं यस्यास्तामित्यर्थः त्वं मुखरयसि अनुचितवक्त्रीं करोषि पक्षे सशब्दां करोषि स्वयमित्यस्याप्यत्रान्वयः अतिचापलं हास्यादिपरिग्रहं वितन्वन् कुर्वन् निवसन् उभ.गसामान्यरहितः यद्वा अन्तः करणे मम सख्यां निवसन् पक्षे अन्तर्म्मध्ये निवसन्लग्नः अतिचापलं सर्वपार्श्वसंयोगं विभागञ्च विस्तारयन्नित्यर्थः निकाममत्यर्थं काठिन्यं कटुभाषित्वं यस्य स इत्यर्थः पक्षे स्वाभाविककाठिन्ययुक्तः कठिनद्रव्यनिर्मितत्वात् कां क इव घंटां गरुडलाञ्छिततया सविशेषरूपां शङ्कुरिव लोहादिनिर्म्मितकीलविशेषइवेत्यर्थः तथाचमत्सखी सर्वोत्तमत्वा देकचित्ता त्वन्तु चपलोऽसीति शुद्धस्वभावत्वात्तया मौखर्य्यमात्रं क्रियते त्वयातु दुष्टा क्रियैव क्रियते तस्याः को दोष इति श्लोकार्थः ॥ ६ ॥

अङ्गेषु जीर्य्यति परं खञ्जनयूनोर्म्मनोभवप्रसरः ॥
न पुनरनन्तर्गर्भितनिधिनि धरामण्डपेकेलिः ॥७॥

असमीचीनस्थले सुरतं याचमानं नायकं नायिकाह, अङ्गेष्विति खञ्जनयूनोः खञ्जरीट स्त्रीपुंसयोः पक्षिणोरपीत्यर्थः, अनेन खञ्जनपदेन सङ्कोचाल्पत्वमत्यल्पकालशक्यसुरतसम्पादनं सुरतस्थाननियमे प्रयोजनाभावश्च युवपदेनैकशेषसिद्धेन द्वयोरपि सर्वदा कामातुरत्वं समस्नेहवत्त्वञ्च व्यज्यते मनोभवस्य मनोमात्रभवस्य कामस्य मनोभवपदेन मनसः सर्वदा सत्वेनानवरतत्वं कामप्रसरे प्रादुर्भावरुपे कथ्यते प्रशब्देन सर्वजनवेद्यत्वं व्यज्यते, अङ्गेषु सर्वाङ्गेषु जीर्य्यति जीर्णो भवति मनोभवप्रसरः खञ्जनयूनोरित्यन्वयः परं केवलमङ्गेष्विति बहुवचनेन सर्वाङ्गीणव्यापारस्य निष्फलत्वन्तेन चुम्बनालिङ्गनादिसकलभोगनिवृत्तिः जीर्य्यतीत्यनेन सूक्ष्मताबोधकेन क्षणं निलीय पुनस्तथैवाविर्भवतीति ध्वन्यते परमित्यनेन केचि ज्जीर्णाः केचिन्न जीर्णाः इति व्यवच्छिद्यते धरामण्डपे सकलपृथ्वीमण्डलरूपे मण्डपे सत्यपि पक्षिणः सर्वत्र तुल्यत्वादिति भावः पुनर्न केलिः नैव सुरतंपुनःशब्दस्यावधारणवाचकत्वात् धरामण्डपपदेन सर्वदास्थलसौलभ्यं पुनः पदेन रत्यभावो व्यञ्जीकृतः नतु यथातथास्थाने रतिारति केलिपदेन सुरतवाचकेन परिहासोऽपिनेति गम्यते कुतो न केलिरत्र हेतुगर्भविशेषणं धरामण्डपस्याह अनन्तर्गर्भितनिधिनि अन्तरभ्यन्तरे गर्भितः गर्भवन्निलीयस्थितः निधिः पद्मशङ्खादिर्य्यस्य मण्डपस्थलस्य तत् अन्तर्गर्भितनिधि न तत् अनन्तर्गर्भितनिधि नपुंसकं तस्मिन् अनन्तर्गर्भितनिधिनीत्यर्थः अन्तः पदेन दर्शनसेवाभावः गर्भितपदेनान्यत्रस्थापितत्वं निधिपदेन पक्षिण उपयोगाभावश्च सूच्यते खञ्जरीटरतस्थाने निधिः शयनस्थाने काचः मलोत्सर्गस्थाने दग्धकाष्ठमस्थिश्चतिष्ठतीतिप्रसिद्धम् एतदन्यत्र एतानि न करोतीतिच कामातुरयोर्य्यूनोर्वहुधा दुःखितयोः सर्वदा सुलभरतस्थानयोः संकोचसून्यययोरपि पक्षिणोर्नियमितस्थानं विना न भवति वरयोः समीचीनवृत्तयो पर्य्यङ्कादिकं विना कथं रतमिति नायिका नायकं प्रत्यवदृदिति वाक्यार्थः यद्यपि मण्डपपदस्य जनाश्रयस्थलवाचकस्य कथंरतयोग्यत्वं तथापि गृहविशेषवाचकत्वमेवमण्डपपदस्य जनाश्रयत्वस्योपलक्षणत्वमतएव मण्डपं प्रविश पश्येत्यादौ न जनाश्रयत्वबोधः मण्डपोऽस्त्री जनाश्रय इत्यनेन नपुंसकत्वं मण्डपपदस्यातोनन्तर्गर्भितनिधि

नीत्यपि वहुब्रीहौ स्युरेवन्तुपुनर्वैवेत्यवधारणवाचका इत्यमरः नायिका स्वकीया खञ्जनयूनोरित्यादिस्वरसात्, यद्वान्योन्यस्निग्धयोरनयोः किं वृत्तमिति पृच्छन्तं कञ्चिदाह कश्चित् समीचीनसङ्केतस्थलाभावादेवानयोर्न संगमः अन्यद्बाधकं नास्तीति, अथवानेकसञ्चारदूषिते स्थले रतकारिणीं सखीं सख्याह वस्तुतस्तु सर्वाधिकगुणश्रवणकदाचित्तथादर्शनलुब्धसर्वगुणशालिनागरिकनायक प्रेषितदूतीकथनानन्तरं तूष्णीं स्थिता बहुपरिवारा पूर्वञ्च तद्दृष्टसर्वोत्कर्षशालिनायकं लब्ध्वाऽपि चिरं विचार्य्याङ्गणस्थितखञ्जनयुगलकथामकथयत् तां कथां सानन्दा दूती नायक निकटे वदति मम भोर्गता तत्र कार्य्यञ्चभविष्यतीति समीचीनस्थलाभावमात्रं बाधकमिति परैरपरिशीलितःपन्थाः ॥७॥

अन्धत्वमन्धसमयेवधिरत्वं बधिरकाल आलम्ब्य ॥
श्रीकेशवयोः प्रणयी प्रजापतिर्नाभिवास्तव्यः ॥८॥

महान् दैवप्रसादादीनां पक्षपातः कस्याप्यपमान विना न भवतीति कश्चित्कञ्चिदुपदिशति अन्धत्वमिति नाभिवास्तव्यः केशवस्य नाभिपद्मस्थः अनेनान्तर्गूढतापीतियोग्यता श्री केशवयोरवैदग्धञ्च यद्यपितथापि तयोः प्रणयी प्रेमपात्रं पुनश्च प्रजापतिः प्रजोत्पादकः जात इतिशेषस्तथाच कोपयोग्यतायामपि श्री केशवयोः प्रणयं प्रजापालनसामर्थ्यञ्चालभत ब्रह्मा न काप्यप्रतिष्ठापि जातेति स्वमप्यपमानेनापि प्रभुपक्षपातं सम्पाद्यैवमेव भूया इतिशिक्षा अपमानमाह अन्धसमये लक्ष्मीकृतविपरीतरतेदर्शनानर्हत्वात् अन्धत्वमन्धभावम् वृद्धोहं वयो दोषान्न किञ्चिदपि पश्यामीति वदन् वास्तविकनेत्रनिमीलनमालम्ब्य प्रणयीवि श्वासार्हत्वेन नाभि वास्तव्यो जातः का गणनान्येषामिति, अथवाविश्वासार्हत्वेनैकाकिन्यानायिकाया रक्षार्थं विदेशगमनसमये वैदेशिकस्यापि तं वृद्धब्राह्मणं दृष्ट्वा भीतं प्रतिवेशिनायकं प्रति दूती वक्ति तथाचायमतीव सहिष्णुः परक्रीडादर्शनश्रवणं नानुपश्यतीति त्वया निःशङ्कं गन्तव्यमिति अथवा परस्सहचरं सर्वदा नायिकासन्निहितंदृष्ट्वा भीतां दूतीं प्रति नायिका वदति यथायं मम पत्युः सुरत सम्पादकत्वेन प्रियो भवति तथा ममापि प्रिय इति त्वयाऽभीतया नायकान्तरानयनं कर्त्तव्यमिति। अथवा प्रकृतिविशिष्टपुरुषत्वेनैवोपास्यं ननु पुरुषविशिष्टप्रकृतित्वेन निर्गुणत्वेनासंभवात् तदुक्तमुपासनार्थं लोकस्य ब्रह्मणो रूपकल्पनेत्यादि रूप्यते निरूप्यते ज्ञायतेऽनेनेतिरूपं धर्मः कर्त्तृत्वं मायाश्रित

स्थं वा तथाच सगुणस्यैवोपासना न निर्गुणस्येति सिद्धम् एकेन्द्रियापाटवेपि इन्द्रियान्तरेण सर्वदा प्रकृतिपुरुषोपासनमालम्ब्य न केवला प्रकृतिः सेव्या आर्च्चयेन्निर्विशेषिणामितिस्मरणात् निर्व्विशेषणां पुरुषशून्यामिति तद्व्याख्या तथाच प्रकृतिविशिष्टःपुरुषः पुरुषविशिष्टाप्रकृतिर्वोपास्येति सांख्यप्रसिद्धं कश्चिद्विद्वान् कञ्चिदुपदिशति अन्धसमये नेत्रापाटवकाले-अन्धत्वमन्धत्वमेव नतु बधिरत्वं बधिरकाले श्रोत्रापाटवसमये बधिरत्वमेव नत्वन्धत्वमित्यर्थः तथा चैकेन्द्रियापाटवेऽपि :इन्द्रियान्तरेण सर्वदाप्रकृतिपुरुषोपासनमालम्ब्य श्री केशव योः प्रकृतिपुरुषयोः प्रेमपात्रं प्रजोत्पादकः प्रणयी प्रजापतिः इतिविशेषणाभ्यां त्रिवर्गकथनं [illegible]स्थितत्वेनसायुज्यमोक्षत्वम् अनेन मोक्षकथनमिति-अथवा प्रजा पतिः असङ्कलितकाम्यकर्त्ताऽनेनासंकलितकाम्यकर्त्ता ब्रह्मणा सह मुच्यत इति श्रुतिबोधितमोक्षभागित्वं प्रणयीत्यनेन त्रिवर्गभागित्वं प्रणतस्यत तत्सम्पादकत्वात् नाभिवास्तव्य इत्यनेन पद्मसनाभिस्थितिकथनेन पद्मासनोपवेशनेन साधनावस्था कथितेति निरुक्तोपासनैव चतुर्वर्गदात्री नान्येति ध्वन्यते सर्वान्तध्याय भक्ति योगं स्तौतीत्येके ॥८॥

अयिकोषकार कुरुषे वनेचराणां पुरो गुणोद्गारम् ॥
यत्र विदार्य्य विचारितजठरस्त्वं स खलु ते लाभः ॥९॥

पामराग्रे प्रकाशितविद्यं तदनादरेण खिन्नं कञ्चन कश्चिदन्योक्त्याह अयीति कोषकार कीटविशेष वनेचराणां भिल्लानां पुरो गुणोद्गारं सूत्रनिस्सारणं कुरुषे तत्र स लाभस्तव निश्चयेनजातएव लाभं विना वृथा खिद्यसे इतिभावः स कः यत् विदार्य्य भागद्वयमुदरं कृत्वा अनेन पुनस्सन्धानानर्हत्वं ध्वन्यते विचा रितजठरःकुतस्ते गुणा निस्सरन्ति इतिज्ञानायतव जठरविदारणं नकृतमिति समा दरंलाभश्च जानीहितस्मात् पामराग्रे गुणप्रकाशेन लाभसमादरादेः का कथा-अन र्थोन जात इत्येवदैवात्तव जातं तवैवदोषो न तेषामिति भावः ॥९॥

अगणितमहिमा लङ्घितगुरुरधनेहः स्तनन्धयविरोधी ॥
इष्टाकीर्तिस्तस्यास्त्वयि रागः प्राणनिरपेक्षः ॥१०॥

नायिकासन्तानं दृष्टवा किञ्चिदुदासीनं नायकं दूती प्रोत्साहयति अगणि तेति तस्याः यौवनारम्भमारभ्य त्वदेकचित्ताया इत्यर्थः अनेन सर्वथा परित्य ज्यानेति गम्यते त्वयि त्वच्छब्दप्रयोगेणानादरसूचकेन तव भार्या अस्यास्त्व

दधिकोऽपि सुलभ एवेति ध्वन्यते-एकवचनेन स्वस्वामिन्यपि नेदृश इति ध्वन्यते राग: अनुराग: प्राणनिरपेक्ष: प्राणत्यागेनापि रक्षणीयः इष्टा इच्छाविषय-यीभूताऽकीर्त्तिप्रतिष्ठा यत्र स इत्यर्थ: अगणितमहिमा न गणित: कुलस्य महिमा महत्वं येन रागेण तथाच मम सख्या कुलहानिरपि कृता नतु तव रागभङ्ग इत्यर्थ: लङ्घितः निवारकत्वेनानङ्गीकृत: गुरुः श्वशुरपित्रादिर्य्येन स इत्यर्थ: तव रागार्थमुभयकुलगुरुपरित्यागोऽपि कृत इति भावः न विद्यते धनस्येहा इच्छा यत्र स इत्यर्थ: तथाच निरुपधि प्रेमातीवदुर्लभं भाग्यवशा-त्तवैव वर्त्तते नान्यस्येति भाव: स्तनन्धयस्य स्वल्पवयस्कस्य विरोधी सुरते न क्षीरनाशात् बालकापेक्षया त्वय्येवाधिकानुरागाच्च विरोध इति भावः तथाचैतादृशप्रेमोपेक्षया तवैवाव दग्ध्यं मम सख्या न किञ्चिदिति वाक्यार्थः ॥१०॥

**अपराधादधिकं मां व्यथयति तव कपटवचनरचनेयम् ॥**
**शस्त्राघातो न तथा सूचीव्यधवेदना यादृक् ॥११॥**

स्वकृतस्यान्यनायिकाद्युपभोगरूपस्यापराधस्य समाधनार्थं मृषावचनप्रवृत्तं नायकं नायिकाह अपराधादिति इयं प्रत्यक्षा नतु परोक्षा तव कपटवचनरचना मिथ्यावचनकल्पना, एतत्कार्य्यार्थं मया गतमित्यादिरूपा, मां तव पाणिगृहीती मपराधात् परनायिकाद्युपभोगात् अधिकं व्यथयति अपराधादप्यधिकमिति क्वचित्पाठः तत्र मामिति पूरणीयम् दृष्टान्तयति, शस्त्राघातःशस्त्रेण-क्षतंनतथानतादृशवेदनाजनकः यथा यादृशी सूचिव्यधवेदनाभवतिव्यधःसीवनम् तथाच पृथक्शय्यावरस्त्रीणामशस्त्रवधउच्यते इत्यादिक्रमेणाशस्त्रवध वचनकापट्यञ्च किङ्करोषीति भाव:स्वकीयोक्तिरियम् ॥११॥

**असतीलोचनमुकुरे किमपि प्रतिफलति यन्मनोवर्त्ति ॥**
**सारस्वतमपि चक्षुः सतिमिरमिव तन्न लक्षयति ॥१२॥**

कश्चित्कञ्चिदाह असतीति असत्या लोचनरूपे दर्पणे मनोवार्त्त यत् तत् किमपि प्रतिफलति प्रतिबिम्बितं भवति अपितु नेत्यर्थः यथा तत्पेन ज्ञा... इति भावः तत्प्रतिबिम्बितं सारस्वतमपि शास्त्राध्ययनज्ञानजनितत्वे... दिव्यमपि चक्षुः सतिमिरमिव दोषदूषितमिव न लक्षयतीत्यन्वय: तथाच पण्डितस्याप्यज्ञानमन्यमूर्खस्य का कथेति भावः यद्वा कश्चित्पण्डितं स्तौति यत्किमपि मनोवर्त्ति मनोगतं सर्वमित्यर्थः असतीलोचनमुकुरे प्रतिफलति सर्वं जानाति इति तदपि जानात्येव तथाच पण्डितः

सत् तिमिरदोषदूषितं चक्षुर्य्यया न लक्षयति तथा सारस्वतमपि चक्षुर्नलक्षयतीति काका सारस्वतं सर्वं जानातीति स्तुतिः सतिमिरं सान्धकारमिवेत्यन्वयो वा असतीकटाक्षपातमात्रेण मदनुरक्तेय मितिभ्रान्तं प्रति सुहृदुपदेशोऽयमिति वयम् अर्थः प्रथमवत् ॥१२॥

अन्यमुखे दुर्वादो यः प्रियवदने स एव परिहासः ॥
इतरेन्धनजन्मा यो धूमः सोऽगुरुभवो धूपः ॥१३॥

विदग्धपरिषदि स्वैरकथामाह अन्येति अन्यमुखे प्रियेतरमुखे यः दुर्वादः दुष्टपरिवादः प्रियमुखे स एव दुर्वादः परिहासः केलिः तथाचैकएवदुर्वादः व्यक्तिभेदेन भिन्नकार्य्यकारी तथा यथा इतरेन्धनेन साधारणकाष्ठेन जन्म यस्य स एव धूमः अगुरु काष्ठसंभूतः धूप इत्युच्यते आश्रयभेदाद्भेद इति भावः प्रियकृतनिर्भर्त्सनेन खिन्ननायिकां सख्याह इत्यपि कश्चित् सतीपतिकृतनिर्भर्त्सनश्रवणेनकृतोपहासामसतींसखींप्रतिसतीकृतसामान्याकारोक्तया समाधानवाक्यमिदमिति सारम् ॥१३॥

अयि सुभग कुतुकतरलाविचरन्तीसौरभानुसारेण ॥
त्वयि मोहाय वराकी पतिता मधुपीव विषकुसुमे ॥१४॥

दुष्टं नायकं प्रति परकीयासखी आह अयीति सुभग भाग्यशालिन्अनेन भाग्यमात्रकथनेन वैदग्ध्याभाव इति सूच्यते, सुभगे सुन्दरे यत्कुतुकं कौतूहलं तेन चञ्चलेत्यर्थकमेकं पदं वा सौरभं ख्यातिस्तदनुसारेण तदाकृष्टेत्यर्थः सञ्चरन्ती त्वयि रूपख्यातिमात्रसारे मोहाय वैचित्याय वराकी अनधीना पतिता न स्वगतेति भावः विषकुसुमे विषवृक्षपुष्पे मधुपी भ्रमरी विनोदचञ्चला गन्धानुसारेण सञ्चरन्ती मरणाय यथा निपतति तथेयमपीत्यर्थः तथात्र स्वच्छा स्वभावतरला मम सखी ; रूपख्यातिशालिनातिकुष्टेन त्वया वचनमात्रेण प्रतार्य्यते, तया न बुध्यते तत्र मया किं करणीयमिति भावः ॥१४॥

अयि मुग्धगन्धसिन्धुरशङ्कामात्रेणदन्तिनोदलिताः ॥
उपभुञ्जतेकरेणूःकेवलमिहमत्कुणाःकरिणः ॥१५॥

जातयौवनचिह्नान् पुरुषान् अन्तःपुरान्निवारयन्तं बालकाननिवारयन्तं महान्तं कञ्चन प्रभुमन्योक्त्या कश्चिदुपदिशति अयीति मत्तगन्धगजो यस्यगन्धमात्रेणान्यगजाः पलायन्तेस गन्धगजःअनेनातिप्रतापशालित्वं द्योत्यते दन्तिनः दन्तयुक्ता

गजाः शङ्कामात्रेण करेणूपभोगसङ्कामात्रेण दलिताः निष्कासिताः वृथा निवारिता इति यावत् दन्तिभिस्तु कामुकत्वेनशालैस्तव भीत्यैव नोपभोगः कर्त्तव्य इति भावः करेणूः हस्तिनीः मत्कुणाः यौवनेऽपि अव्यक्तदन्ताः गजजातिभेदाः गजाः इह यूथे केवलं दन्तगजरहिताः उपभुञ्जते तासां संभोगं कुर्वते इत्यर्थः दन्तिरक्षणे तत्तद्भयादेते निवृत्तास्त्वद्भयाद्दन्तिन इति सर्वथा संरक्षणं भविष्यति निष्कासने तु कर्त्तव्ये द्वयोरेवेति यथा गजे तथैव तवान्तःपुरे तवाज्ञातयौवनैर्दासैः वास्तवगुप्तयौवनैस्तव दारैरुपभोगः क्रियते इति तेऽपि निवारणीयाः इति प्रस्तुतार्थः नवीनास्तु कश्चिद्दारसंरक्षणार्थमन्तःपुरे दन्तशून्यं कञ्चनातिवृद्धं नियुज्य निशङ्के जाते तम्प्रति कश्चिदन्योक्त्या वक्ति दारसंरक्षणमतीव कठिनमिति कश्चित्कञ्चित्प्रतिवक्ति वेत्याहुस्तन्न मत्कुणा इति बहुवचनस्य मुग्धपदस्य च स्वरसानुपपत्तेः ॥१५॥

अतिविनयवामनतनुर्विलङ्घते गेहदेहलीं न वधूः ॥
अस्याः पुनरारभटीं कुसुम्भवाटी विजानाति ॥१६॥

स्वाभाविकलज्जावत्त्वमेव स्त्रीणां भूषणन्तु काल्पनिकमिति कश्चिद्वक्ति अतीति अथवा लज्जावत्वप्रकटनमात्रेण गुरुजनैःस्त्रीषु विश्वासो नकर्त्तव्य इत्याह अतिविनयेन सर्वाधिकविनीततया वामनतनुः कुब्जशरीरा गेहस्य देहलीं द्वारं न विलङ्घते लज्जावशात् पाकगृहद्वारलङ्घनमपि न करोति अन्तरेऽवतिष्ठते का वार्त्ता प्राङ्गणाद्बहिर्निःसारः स्त्रीजनोक्तिरक्षे पतिगृहे [illegible]मित्यर्थः वधूः नूतना अस्या वध्वाः आरभटीं [illegible] केवलं पुष्प[illegible] विजानाति इत्यर्थः सङ्केतस्थलपुष्पपत्तिसङ्गमक्षेत्र पुष्पवाटिकैवेति भावः ॥१६॥

अन्तर्गतैः गुणैः किं द्वित्रा अपि यत्र साक्षिणो विरलाः ॥
सगुणो गीती यदसौ वनेचरो हरिणमपि हरति ॥१७॥

बहुविधमपि गुणेन परपरितोपालमर्थं निन्दति अन्तरिति यत्र येषु गुणेषु द्वित्राः द्वौ वा त्रयो वा साक्षिणः तत्त्वज्ञाः सन्तः कथकाः विरलाः दुर्लभाः तैर्हृदयमात्रस्थितैः गुणैः विद्याविवेकादिभिः किंफलमपितु न किमपीत्यर्थः तस्माद्गीती गानकर्त्ता पुरुषः सगुणः प्रशस्तगुणवानित्यर्थः यस्मात् असौ गानकर्त्ता वनेचरो वने वर्त्तमानः अनेन नगरनिवासिनो वनरूपापरिचितस्थले रञ्जनसामर्थ्यमुक्तं हरिणमपि अन्येषां चित्तहरणसमर्थमपि मृगं हरति अधीनं करोति अयमर्थः मृगमाननामकरागमानुगत्वावनंहरिणंवशङ्करोति तथाच

गुणस्यैवं सामर्थ्यमन्तर्गतगुणस्य किम्प्रयोजनं परोपयोगाभावेन व्यर्थत्वमेवेतिहरपाठे स प्रसिद्धो गुणो गीतिरेवेत्यर्थः वनेचरमिति पाठे हरिणविशेषणं तथाच पशूनामपि चित्तहरणसामर्थ्यं गुणस्य किं वक्तव्यं विदग्धस्येतिभावः ॥१७॥

अलुलितसकलविभूषां प्रातर्बालां विलोक्य मुदिताभिः ॥
प्रियशिरसि वीक्ष्य यावकमथ निःश्वसितं सपत्नीभिः ॥१८॥

सपत्नीसखीम्प्रति बालासखी वदति अलुलितेति अलुलिताः अखण्डिताः सर्वा भूषा यस्यास्तां बालां विलोक्य प्रातरुषःकाले मुदिताभिः हर्षिताभिः अत्र बालापदेन चुम्बनालिङ्गनेऽपि चापल्यवशाद्भूषणच्युतिः स्यादेवातः परिहासमात्रव्यतिरेको गम्यते प्रातःपदेन प्रियानादरेण व्याकुलीभूय समागमनं द्योत्यते मुदिताभिरित्यनेन क्रीडास्या न जातेति नास्यां पतिः प्रीतः किन्तु असन्तुष्ट इति व्यज्यते अथानन्तरं यावकमलक्तकं बालापदे लग्नं प्रणामेनप्रियमस्तके निरीक्ष्य सपत्नीभिः समानपतिकाभिः निःश्वसितं निश्वासः कृत इत्यर्थः प्रियेण बालाप्रणामेऽपि, कृते बालया कोपवशान्नाङ्गीकृतं सुरतमिति भावः सर्वंकार्य्यं सहसा न कर्त्तव्यं करणे चोपहास एव भवति यथा सपत्न्या उपहासो जात स्तथैवाविचार्य्य कर्त्तुरपि स्यादिति कश्चित्कञ्चिदुपदिशतीत्येवं ॥१८॥

अयि लज्जावति निर्भरनिशीथरतिनिःसहाङ्गि सुखसुप्ते ॥
लोचनकोकनदच्छदमुन्मीलय सुप्रभातन्ते ॥१९॥

पतिगृहगमनसमये लज्जां नाटयन्तीं नायिकाम्प्रति सखी वदति अयीति लज्जावति विपरीतलक्षणया लज्जाशून्ये इत्यर्थः निर्भरमत्यर्थं निशीथे रात्रिमध्यभागे यद्रतं सुरतं तेन निस्सहानि विह्वलानि अङ्गानि यस्यास्तत्संबोधने सुखेन परिपूर्णरतसुखेनसुप्ते लोचनकोकनदयोः नयनरक्तोत्पलयोः छदं पत्रमुन्मीलय प्रकाशय सुप्रभातं सुन्दरप्रभातञ्चते अस्त्विति शेषः तथाच रात्रिश्च समीचीना तव यातैव दिनमपि एवमेव।तिवाह्यतेति परिहासोक्तिरिति व्यज्यते ॥ १९ ॥

अमिलितवदनमपीडित वक्षोरुहमतिदूरजघनोरु ॥
शपथशतेन भुजाभ्यांकेवल मालिङ्गितोऽस्मितया ॥२०॥

सर्वदा नायिकासंगमवृत्तान्तपृच्छकं सखायं प्रति सखा वक्ति अमिलितेति तया किञ्चित्परिशीलितया नायिकयेत्यर्थः अहं केवलमालिङ्गितः अस्मीत्यर्थः

केवलपदेनालिङ्गनोत्तरक्रीड़ादिव्यवच्छेदः भुजाभ्यां कराभ्यां शपथशतेन मम प्राणैः शपितासि मामालिङ्गयेत्यादिवचनशतेनेतिभावः आलिङ्गनक्रियाविशेषणान्याह अमिलितमसंयोजितं वदनं मुखं यथा स्यात्तथेत्यर्थः दन्तघातसिन्दूरकज्जलादिव्यसनभीत्येतिभावः न पीडितौ कुचौ यथा स्यात्कुङ्कुमादिच्युतिभियेतिभावः अतिविदूरजघनमतिविदूरोरुचेत्यियं अतिविदूरपदेन जघनोर्वादीनां सामीप्ये सुरतमवश्यं स्यात्तस्तेषामतिदूरस्थापनमितिभावः तथाच गुरुजनभीत्या चुम्बन सुरतादिकं न जातं मत्प्रेमशपथरक्षार्थं स्वयमालिङ्गनमात्रं कृतं तयाऽतोऽस्याः न दोषो ममैव चापल्यं यद्विवेवाभ्यर्थितेति ध्वन्यते कश्चित्किञ्चित् नवोढ़ायाः सखा सखायं प्रति वदतीत्याह तत्र अपीडितेत्यनेन मृदुस्पर्शसूचनद्वारेणोन्नतस्तनसूचकेन प्रौढ़ात्वावगमात् वस्तुतस्तु स्वकीयायाः धीरायाः परिज्ञातपतिदोषाया मानवत्याः सख्याग्रहेण पतिगृहं गत्वा झटित्यागतायाः सखीं किंवृत्तमिति नायकं पृच्छन्तीं प्रति नायक आह केवलं तयाऽलिङ्गितोऽस्मि ननु भीतेन सापराधेन मयापीत्यर्थः ममापराधो जातस्तथापि क्षमां कुरु शपितासीति चाटुशतेनेतिभावः सरसः ॥ २० ॥

**अतिपूजिततारेयं दृष्टिः श्रुतिलङ्घनक्षमा सुतनुः ॥**
**जिनसिद्धान्तस्थितिरिव सवासना कं न मोहयति ॥२१॥**

अलम्पटत्वेन प्रसिद्धधीरोदात्तं कञ्चन नायकं सस्नेहं पश्यन्तीं नायिकां प्रति सखीदूती वक्ति अतीति सुतनुस्तथाच यथा पूर्णनागरिकजनश्रेष्ठोयं नायकस्तथा त्वमपि समीचीनशरीरेत्यर्थः आवयोः प्रेमोचितमेवेति भावः इयं सस्नेहा तव दृष्टिरित्यर्थः निःस्नेहानर्थकारिण्येवेति भावः किंभूता दृष्टिः अतिपूजितातिप्रशस्ता तारा ताराकाक्षिकनीनिका यस्या सेत्यर्थः पक्षेत्यर्थं गुरुपरंपरयापूजिता उपासिता तारा उग्रतारा यस्यामित्यर्थः जिनस्य तारोपासकत्वादितिभावः श्रुत्योः श्रवणयोर्लङ्घनं समीपगमनं तत्समर्थातिदीर्घेति यावत् पक्षे श्रुतीनां वेदानां लङ्घने तदुदिताकरणे क्षमा समर्थेत्यर्थः जिनमते वेदस्य धुर्त्तीकृत्वा दितिभावः तथाच वदेविप्लवकरस्यास्तिकशास्त्रसमूहखण्डनं यथा सुकरं तथा श्रुतिलङ्घनक्षमायास्तव दृष्टेः एतन्नायकानयनं सुकरमिति भावः सवासना मुखसंभूतपद्मगन्धयुक्ता तव पद्मिनीत्वादितिभावः पक्षे वासना संस्कार विशेषस्तत्सहितेत्यर्थः जिनमते सर्वस्य पदार्थस्य क्षणिकत्वेन प्रत्यभिज्ञादिनियामकत्वेन वासनायाः स्वीकारात्पूर्वपूर्वक्षणिकविज्ञानसंक्रमादुत्तरोत्तरे व्यवहारः

यथा कस्तूरी वासितवस्त्रसंभ्रमे वस्त्रान्तरस्येति जिनस्य नास्तिकविशेषस्य सिद्धान्तस्य राद्धान्तस्य स्थितिः स्वरूपमिवेत्यर्थः कं न मोहयति कं नाधीनं करोति अपितु सर्वानितिभावः पक्षे सर्ववेदशास्त्रज्ञमपि मोहयति श्रवणेनस्व-शास्त्रे भ्रान्तं करोतीत्यर्थः तथाच तवैव गुणेनान्यसकलनायिका दुर्लभोपि अयं तवाज्ञामात्रेणाधीनः क्रियते पश्य मम सामर्थ्यमिति सखीदूती नायिकां प्रोत्साहितवतीति वाक्यार्थः नायको नायिकां वदतीत्येके सखी नायिकां वदतीत्यपरे ॥ २१ ॥

अलमविषयभयलज्जावञ्चितमात्मानमियमियत्समयम् ॥
नवपरिचितदयितगुणाशोचतिनालपतिशयनसखी ॥२२॥

काञ्चिन्नवोढ़ां भयलज्जाभ्यां पतिगृहगमनमनिच्छन्तीं प्रौढ़ासख्याह अलमिति इयं प्रतिवेशिनी आत्मानं शोचति आत्मनः शोकं करोतीत्यर्थः नवपरिचित-दयितगुणा अचिरानुभूतपतिसंगमसुखा शयनकारणीः सखीर्नालपति भवतीभिरपि नाहं बलात्कारेण पतिसमीपे शायितेतिकोपात् न वदतीत्यर्थः भवनिष्प्रकारि-त्वादतीतत्वेन कालस्य प्रयोजनाभावाच्चेति भावः इयत्समयमतिदीर्घकालं स्वल्पेऽपि कालेऽतिप्रीततया दैर्घ्यसूचने इयदितिअविषये अस्थाने निर्हेतुके इति यावत् ये भयलज्जे ताभ्यां वञ्चितः प्रतारितः सुखरहितः य आत्मा तमित्यर्थः अलमित्यस्यात्रैवान्वयः शोचनक्रियायां वा तथाच यथा तव प्रतिवेशिनीयं सखीभिर्बलात्कारेण पतिगृहं न नीता प्रथमं पश्चाज्जातसङ्गमा सख्यामौदास्य-मात्मशोचनञ्च करोति एवमेवास्मदुक्ताकरणे त्वमपि करिष्यसीति हठं विहाय निजसौख्यार्थं पतिगृहमभयया निर्लज्जया चावश्यं गन्तव्यमित्युपदेशो व्यज्यते पतिगृहादागतां विमनस्कां प्रौढ़ां वीक्ष्य काचित्काञ्चित्पृच्छति किमर्थमद्यापि विमनस्केयमत्रापराह न पतिदोषेणविमनस्करुका किन्तु सखीदोषेणेति ॥ २२ ॥

अनुरागवर्त्तिना तव विरहेणोर्म्मिणा सा गृहीताङ्गी ॥
त्रिपुररिपुणेव गौरी वरतनुरर्धा वशिष्टैव ॥ २३ ॥

नायिकाविरहाधिक्यं नायिकासखी नायकं प्रति वदति अनुरागेति सा मम सखी तव नायकस्य विरहेण गृहीतं युक्तमङ्गं पक्षे गृहीतं स्वाङ्गे स्थापितमङ्गं यस्या इत्यर्थः गृहीताङ्गी सती वरतनुः अर्धावसिष्टैवार्धशरीरापिजीवत्येवेति महदा-श्चर्यमित्यर्थः विरहेण किंभूतेनानुरागेणप्रेम्णा वर्त्तितं शीलमस्यानुरागकृतेने-

त्यर्थः विरहस्यानुरागाधीनत्वदिति भावः पक्षे अनु पश्चात् रागः प्रेमानन्तरं प्रेमेत्यर्थः तत्र वर्त्तितुं शीलमित्यर्थः सतीवियोगभीतः पार्वत्यर्धशरीरः शिव इति भावः उग्रेणोद्भटेन पक्षे उग्रनाम्ना उग्रः कपर्द्दीत्यादितः त्रिपुररिपुणा त्रिपुरान्तकेनशिवेन गौरीव पार्वतीव तथाच त्वमेवास्याः प्राणरक्षकः कोऽन्यः प्रकार इति भावः ॥ २३ ॥

अन्यप्रवणे प्रेयसि विपरीते स्रोतसीव विहितास्थाः ॥
तद्गतिमिच्छन्त्यः सखि भवन्ति विफलश्रमा हास्याः ॥२४॥

स्वाधीनपतीका सखीं प्रति वदति अन्येति हेसखि प्रेयसि प्रियतमे अन्यप्रवणे अन्यनायिकासक्ते तद्गतिंतन्मात्रैकतानत्वं पक्षेसंमुखोत्तरणमिच्छन्त्यः नतुला-धयन्त्यस्ताः वैदग्ध्याभिमानिन्यो नायिकाः नतु वास्तवविदग्धाः विफलाः श्रमाः दूतीप्रेषणाद्यो व्यापाराः यासां ताः पक्षे चरणपाणिचालनादयः हास्याः उपहास्याः भवन्ति विदग्धानां नदीतीरस्थितानाञ्चेत्यर्थः प्रेयसि विपरीते विलो-मेप्रवृत्ते स्त्रोतसि प्रवाहे इव विहिता लग्नाः पक्षे प्राप्ता इत्यर्थः तथाच यासा मन्यसक्तः प्रियो भवति पुनस्ताश्च तदनुनयकारिण्य इत्याश्चर्य्यम् अस्माकन्तु अन्यासक्तो भवत्येव न यदि तथा स्यात्तदोपेक्षैव कर्त्तव्येति ध्वन्यते यद्वा अन्यप्रवणं नायकं कुतो न निवारयसीति वादिनींदूतीं प्रति अधुना निवारणे उपहासो भविष्यति कार्य्यसिद्धिरपि नेत्याह अथवा सर्वात्मना प्रियतमस्य चित्तहरणमेव श्रेयोऽन्यथा दुःखमेव विशेषतस्तव प्रियः सर्वश्लाघ्यः पश्चात्तीव काठिन्यंभविष्यतीतिनायिकोसख्युक्तिः अतएव प्रेयसीत्येकवचनता ॥ २४ ॥

अधिकः सर्व्वेभ्योयः प्रियः प्रियेभ्यो हृदि स्थितः सततम् ॥
स लुठति विरहे जीवः कण्ठेऽस्यास्त्वमिव सम्भोगे ॥२५॥

नायिकाया विरहावस्थां सखी नायकं प्रति वदति अधिकेति अस्या मम सख्याः स जीवस्तव विरहकाले कण्ठदेशे हृदयं परित्यज्य लुण्ठति मूर्च्छितः पततीति लोकोक्तिः सर्वेभ्यः सर्वशरीरेभ्यः अधिकः सर्वशरीररक्षकत्वादितिभावः पक्षे गुरुजनादिभ्यः अधिकः सर्वसुखदायकत्वादितिभावः प्रियेभ्यः स्नेहपात्रेभ्यः सख्यादिभ्यः निरुपधिप्रेमास्पदत्वात् पक्षे हृदयान्यदेशस्थितान्यप्राणेभ्यः अधिक इत्यन्वयस्तव सहचरत्वादितिभावः हृदि स्थितः सततं भावनया स्थापितः पक्षे प्राणस्य हृदयं स्थानं हृदि प्राण इत्यादिना कथितं सुरते त्वं यथा तथेत्यर्थः तथाच शीघ्रमेव दर्शनं देयमितिभाव. ॥ २५ ॥

अनयनपथे प्रिये न व्यथा यथा दृश्य एव दुष्प्रापे ॥
म्लानैव केवलं निशि तपनशिला वासरे ज्वलति ॥२६॥

परदेशंजिगमिषुं प्रियं कुतो न वारयसीति वादिनीं सखीं प्रति किमर्थमसौ वारणीयः अवस्थानेऽपि अन्यस्या एव भोग इति वदति अनयनेति प्रिये नेत्रपथागोचरे तथा पीड़ा न दृश्ये सत्यप्यन्यनायिकासक्तत्वेनालभ्ये यथा पीड़ेत्यर्थः यथा तपनशिला सूर्य्यकान्तरूपा रात्रौ सूर्य्यादर्शने म्लानैव नतु ज्वलतीत्यर्थः वासरे केवलं ज्वलति नतुम्लानेत्यर्थः तथाच यथा तपनशिलायाः सूर्य्यप्रेयसीत्वेन केवलं प्रसिद्धायाः फलंनिशि म्लानिः दिने सूर्य्यदर्शनेऽपि तदप्राप्त्याऽग्निकणसमुद्भवः एवमेव ममापि अतो म्लानिरेवास्तु नतु सन्ताप इति स गच्छतु देशान्तरं न निवारणीय इति व्यज्यते अमवसरे तदागमनमतीव पीड़ाकरं सुरतसमये परमानेय इति परकीया दूतीं प्रति वदतीति वा चिरादागतं देशान्तरात् पतिं कुटुम्बशिष्टाचारार्थमनवकाशं वीक्ष्यात्युत्कण्ठां नायिकामुपहसन्तीं प्रति विदग्धनायिकोक्तिरिति रसिकाः ॥२६॥

अविभाव्यो मित्रेऽपि स्थितिमात्रेणैव नन्दयन्दयितः ॥
रहसि व्यपदेशाद्यमर्थ इवाराजके भोग्यः ॥२७॥

धनलुब्धां काञ्चिन्नायिकां प्रति धनवन्तं कञ्चित्सुरतसमर्थंनायकमानीय दूत्याह अविभाव्य इति अयं मयानीतः मित्रेऽपि व्यभिचारिणीत्वेन मित्रताकारिजनेऽपि सूर्य्येपि वा अविभाव्यः कथानायोग्यः सूर्य्यमनुष्यमात्रव्यवच्छेदेन महानिशायामेवोपभोग इति व्यज्यते अन्यथा व्यभिचारिण्या इतोयंदण्डितो भवेदिति भावः पक्षे बन्धुवर्गेऽपि अज्ञाप्यः प्रसिद्धिभयादितिभावः स्थितिमात्रेणैव सुरतं विनाप्यवस्थानमात्रेण नन्दयन् त्वया स्थानेनानन्दं जनयन्नित्यर्थः अनेनमहानिशायामपि सुरताग्रहो न कर्त्तव्यः तदुपद्रवेण च अपलाप्यागमिष्यतीति व्यज्यते पक्षेर क्षामात्रेणानन्दयन्नित्यर्थः नतु यथोपचितोपभोगेनेति भावः दयितः दयितवदुपचर्य्यमाणः पक्षे प्रियः यदा भोग्यस्तदा वदस्येव व्यपदेशात् छलात् अनेन सर्वदासन्निहितपरिचारिकावञ्चनमुक्तम् पक्षे व्यपदेशात् ऋणंकृतमित्यादिकथनात् क इव अराजके चौराद्युपद्रुते देशे अर्थे इव धनमिवेत्यर्थः तथाच रतभोगार्थं न नीतोऽयं किन्तु धनार्थमेवानीत इति तथा त्वयाकर्त्तव्यं यथा निःस्वो भूत्वायं गच्छेदित्युपदेशः अर्थैर्विभवा-

अपीत्यमरः अथवा सर्वदागुरुजनप्रेरितः पराधीनः सन् ग्रामान्तरमेवगच्छसि ममोपभोगः कदापि नास्तीति वादिनी स्वकीयां पृति यथा स्वकीयमपि धनं देशकालदोषेण छलाद्व्रजति तथायं मद्गृहे त्वया भोग्य इति सख्याह स्थितिमात्रेणैव मम गेहे स्थितिमात्रेणैव मयैवसर्वंसम्पादनीयमितिभावः अन्यत् समानम् ॥२७॥

अश्रौषीरपराधान्मम तथ्यं कथयमन्मुखं वीक्ष्य ॥
अभिधीयते न किं यदि न मानचौराननः कितवः ॥२८॥

सापराधो नायकः श्रुतापराधां विमुखीन्नायिकामाह अश्रौषीरिति मत्कृतानपराधान् त्वमश्रौषी रिति मम मुखं दृष्ट्वा सत्यं कथय तथाच तवापि दुष्टप्रेमभञ्जकसखीजनसङ्गोऽ तस्त्वया बुध्यते किं कर्त्तव्यम् इति सखीजनकल्पनामवैमीति भावः नायिकाह किं नाभिधीयते कथ्यते यदि कितवः धूर्त्तः भवादृशः मानचौराननः संमुखदर्शनमात्रेण मानहरणकर्त्ता नस्यादित्यर्थः ॥२८॥

अन्योन्यमनुस्रोतसमन्यदथान्यत्तटात्तटं भजतोः ॥
उदितेऽर्केऽपि न माघस्नानं प्रसमाप्यते यूनोः ॥२९॥

कश्चित् अनयोरनुरागो निश्चित इति वदति अन्योन्येति अन्यतटादन्य कूलात् अन्यत् द्वितीयं नदीकूलं भजतोः गच्छतोश्चिरकालमन्योन्यदर्शनार्थं व्याजेन सञ्चरतोरित्यर्थः यूनोरनेन समस्नेहशालित्वमावेद्यते अन्योन्यं परस्परमनुस्रोतसं प्रवाहाभिमुखं नायकाग्रे नायिका नायिकाग्रे नायक इति यथा स्यात्तथा भजतोरित्यर्थः त्वयाऽलिङ्गितं जलं मयालिङ्गितं त्वया नालिङ्गितमिति निवारणार्थमिति भावः, अर्के सूर्य्ये उदितेऽपि माघस्नानं माघप्रातःस्नानं ननु मकरस्नानं तस्योदये विहितत्वात् न प्रसमाप्यते सफलाङ्गकं न समाप्यते मयाप्रथमं नोपेक्ष्यगन्तव्यमिति धियेति भावः मनसश्चाञ्चल्यात्मविकारित्वात्तावता कालेनाङ्गहीनमेवानयोः स्नानमिति जानतोरप्येवमाचरणमतो ज्ञायतेऽवश्यमनुरक्तावितिश्लोकार्थः ॥२९॥

अयि चूतवल्लि फलभरनताङ्गि विश्वाधिकासि सौरभ्ये ॥
श्वपचघटकर्परार्ङ्का त्वं किल फलितापि विफलैव ॥३०॥

कापिरूपयौवनसम्पन्ना समीचीनकुलोत्पन्नाप्यतिपामरास्पृश्यनायकासक्तत्तया प्रसिद्धा कश्चिदुत्तमनामकं कटाक्षितवती स नायकस्तामन्योक्त्याह अयीति चूतवल्लि आम्रलतिकेनायिकात्वारोपार्थं समीचीनतया ग्रहणयोग्यतार्थं च स्त्रीत्वेन चूतत्वेन च निर्द्देशःत्वं किल निश्चयेन विफलैव फलितापि फलयुक्तापि सज्जनोपयोगाभावादितिभावः श्व पचस्य चाण्डालस्य घटकर्प्पराङ्का घटखण्डचिह्निता यतः अतो विफलेत्यर्थः चाण्डालादिना परनिवारणार्थं दोहनार्थञ्च कर्परादिः वृक्षेध्रियते इति लोकसिद्धं फलभरेण फलसमूहेन नतानि नम्राणि अङ्गानि यस्यास्तत्संबोधने अनेन नम्रताकथनेन सुगमलभ्यत्वमन्योपयोगेसुकरत्वंचव्यज्यते अतः फलवत्त्वमात्रवाचकेन फलितेत्यनेन न पुनरुक्तिरिति बोध्यम् विष्वक् सर्वतः विकासिप्रसरणशीलंसौरभ्यंयस्यास्तत्संबोधने इदं विशेषणं चूतवल्लीत्यनन्तरमेव योज्यम् तेन न क्रमभङ्गः पुष्पानन्तरं फलोत्पत्तेरन्यथाक्रमभङ्गः स्यात् तथाच यथा सर्वगुणोपेता चूतलतिका सज्जनग्रहणनिवारणार्थं चाण्डालेन घटखण्डेन सचिह्ना क्रियते सुलभापिसज्जनैर्नगृह्यते तथा त्वमपि सर्वगुणोपेता कटाक्षितमादृशसुलभापि सज्जनैः मादृशैः पामरस्पृश्यनायिकासक्तत्वान्न गृह्यसे इति भावः चाण्डालादिकुलोत्पन्नां प्रति कश्चिद्वदतीत्यन्ये ॥ ३० ॥

**अञ्जलिरकारिलोकैर्म्लानिमनाप्तैव रञ्जिता जगती ॥**

**सन्ध्याया इव वसतिः स्वल्पापि सखे सुखायैव ॥ ३१ ॥**

कयोश्चित्पथिकयोरेको वदति अत्र ग्रामे स्थेयं स्वल्पग्रामेऽस्मिन्न स्थेयमित्यपरः पुनरेको मयात्यन्तसुखेन स्थितमत्र पूर्वं त्वयाप्यवश्यं स्थातव्यमिति वदति अञ्जलिरिति यथा सन्ध्यायाः सा वसतिरवस्थितिः स्वल्पापि दण्डद्वयात्मिकापि सुखाय सुखजनिका तथा सेयमपि वसतिः पल्लीसुखायेत्यर्थः सा का यस्यामागतायां लोकैः देवासुरमनुष्यैः अञ्जलिरर्घदानादिरकारीत्यर्थः पक्षे यस्यां लोकैः पल्लीनिवासिभिः आज्ञापय किंकरोमीतिवादिभिः अञ्जलिः करद्वयसंयोजनं पथिकाग्रेऽकारीत्यर्थः म्लानिरन्धकारकृता अप्राप्तैव सन्ध्याकाले तथान्धकाराभावादितिभावः पक्षे म्लानिःकथमत्रागतं मयेति चित्तवृत्तिः अप्राप्तैव पुनःपुनरत्रागन्तव्यमित्येव चित्तमभवत्पथिकानामितिभावः जगती पृथ्वी रञ्जिता रक्ता कृता पक्षे अनेन प्रकारेणात्रागतास्सर्वेऽनुरञ्जिता इत्यर्थः तथाच ध्वाश्यंवास्तव्यम् अथवा कश्चित्सखायं प्रत्युपदिशति प्रभुपत्न्या अयगोगलिङ्गिताया अहनर्शका-

रिण्याः कदाचिन्निमन्त्रणादिव्याजेन घटिकाद्वयं अयंवातवगृहागताया अनुरागेण तत्र किं फलमवश्यं त्यजेति तं प्रतिप्रभुपत्नीप्रोत आह लोकैर्नागरिकनायिकाजनैस्तथाचैताद्दृश्यपि मदधीनेति भावः म्लानिरनुरागप्रसिद्धिजनितमुखमालिन्यमप्राप्तमेवेत्यर्थः सर्वाज्ञातत्वारवमपि मत्कथनेनैव जानासीति भावः जगती इङ्गिताद्यनादिना परितोषितेत्यर्थः तथाच सर्वैरुच्यते एतदनुरोधे न सायातेति अस्मा कंमनोरथसिद्धिरनेनैव कार्य्यंते तस्मात् गुणाधायकत्वाद्दोषाभावाच्च स्वल्पमपि समागमसुखं न त्याज्यं मयेति भावः ॥ ३१ ॥

अगृहीतानुनयां मामुपेक्ष्य सख्यो गता वतैकाहम् ॥
प्रसभं करोषि यदि चेत्त्वदुपरि वपुरथमोक्ष्यामि ॥३२॥

यौवनोद्धता काचिन्नायिकाकान्तारे सहचरीभिर्गच्छन्ती यौवनोद्धतमेव कञ्चन युवानं पश्चादागच्छन्तं बुद्ध्वा सखीभिः कलहं कृत्वा ताः कपटकोपेन विसर्ज्यागत नायकमाह अगृहीतेति मामुपेक्ष्य परित्यज्य सख्यः गता वत खेदे अहमेका उपेक्ष्ये त्यनेन परावृत्य गमनाभावः एकेत्यनेन परोक्षेपि न काचिदिति व्यज्यते अतएव खेदः पक्षे वत सन्तोषे उभयम: मासामागमनादपेक्षि नैकान्तलाभात्सन्तोषः किंभूतो मां न गृहीतः न कृतः अनुनयः कपटकलहमानापनोदो यस्यास्तामित्यर्थः यद्वा न गृहीतः अनुनयः आज्ञा यस्यास्तामित्यर्थः अकथनेनैव गता इति भावः पक्षेपि समानं मयि प्रसभं बलात्कारं चेत्कदाचित्करोषि करिष्यसि वर्त्तमानसामीप्ये लट् तदाथ दानीं त्वदुपरि त्वामुद्दिश्य वपुः शरीरं मोक्ष्यामि त्यक्ष्यामीत्यर्थः बलात्कारे मया प्राणत्यागः कर्त्तव्य इति भावः पक्षे बलात्कारं करोषि ननु करिष्यसि बलात्काराकरणेऽपि एकान्तस्थितयोरावयोः दुःप्रसिद्धिर्भविष्यत्येव तस्मादवश्यं बलात्कारः कर्त्तव्य इति ध्वन्यते पक्षान्तरे तदा वपुः शरीरं त्वदुपरि पातयामि निश्चेष्टयाभवितव्यं मयेति भावः यद्वावपुर्मोक्ष्यामि त्वदुपरि मत्स्वत्वस्त्वात् केवलमुपाचितेत्यर्थः तथाच विपरीतरतमेव मया कर्त्तव्यमिति भावः अनुनयशब्दस्य सन्तोषकरणवाचित्वेऽपि प्रकरणवशादनुसरणं बलात्काराद्वाचित्वं द्वितीयकाले विगतानुकम्पासन्तोषविस्मयाभावजे वतेत्यमरः पक्षान्तरे सैवाद्विवेत्यपि ॥ ३२ ॥

अस्थिररागः कितवो मानी चपलो विदूषकस्त्वमसि ॥

**मम सख्या पतसि करे पश्यामि यथाऽऋजुर्भवसि ॥३३॥**

कञ्चन नायकं सखीसङ्कृतं कर्त्तुं काचिदाह अस्थिरेति अस्थिरः नानास्थलसम्बन्धः रागः प्रेमा यस्य, धूर्त्तः सर्वदा पूतारकः मानी दम्भयुक्तश्चपलः वृत्तान्तसर्वत्र विदूषकः हास्यकारकवचननिपुणः त्वमसि तथाच एतादृश्यपि इयमासक्ता किंवक्तव्यमस्याः ज्ञानमिति केयं नायिकेति भावः ममसख्याः सकलनायिकामौलिभूतायाः करे पतसि हस्तगतो भवसि इति लोकोक्तिः यथा ऋजुस्सरलो भवसि तथाहं पश्यामीत्यर्थः वाक्यत्वान्न सन्धिः ॥ ३३ ॥

**अकरुण कातरमनसो दर्शितनीरानिरन्तरालेयम् ॥**
**त्वामनुधावति विमुखं गङ्गेव भगीरथं दृष्टिः ॥३४॥**

नायिकां सम्बोध्य परदेशं गच्छन्तं निवारयितुं नायिकासख्याह, अकरुणेति, यद्वा निरपराधं नायकं खलवचनेन सापराधं मत्वा नायिका यथोचितं नोपचचार नायकोऽपि मानी स्वस्मिन्नपराधशून्यत्वं जानन् उत्थाय चलितस्तस्मिन्नवसरे द्वयोर्वृतान्तज्ञा सखी नायकमाह अकरुण असमये वसन्ते परदेशगमनात् यद्वेतिकल्पे इयं सरलस्वभावा खलकोपितेति जानन्नप्युपेक्षां कुर्वन् करुणाशून्येत्यर्थः कातरं कर्त्तव्यनिवृत्तं दुःखितं मनो यस्यास्तस्याः कथङ्गमिष्यतीतिबुद्ध्या यद्वाकल्पेकथं नोपचरितोमयेतिबुद्ध्या त्वां दृष्टिरनुधावति *यथा यथा त्वं गच्छसि तथा तथा साप्यायातीत्यर्थः त्वांकिंभूतम् विमुखं विपरितदिशि मुखं यस्यपराङ्मुखं वा भगीरथं राजविशेषं गङ्गेव जाह्नवीवेत्यर्थः दर्शितनीरा दर्शितं नीरंमश्रुजलं यया अनेनासमये वसन्तेऽकालवृष्टिरिवाश्रुपातोऽप्यशकुनइति पक्षेगाश्चात्तापसूचनं निरन्तरालाअतएवदर्शनयोग्या लज्जाभावादितिभावः पक्षेऽनवच्छिन्ना तथास्मिन्नवसरे नैवागन्तव्यमिति तथा स्वापराध एव खलरोपजनितो जात इति पराङ्मुखस्य चलनीयमिति वा द्योत्यते नायिका चेयं परकीयेतिबहवः वस्तुतस्तु स्वकीयात्वेपि न दोष इति परे ॥३४॥

**अन्तःकलुषस्तम्भितरसया भृङ्गारनालयेव मम ॥**
**अप्युन्मुखस्य विहिता वरवर्णिनि न त्वया तृप्तिः ॥३५॥**

निगूढमानमीं धीरां प्रति नायक आह अन्तरिति हे वरवर्णिनि सकलकलाभिज्ञे अनेन ज्ञात्वा न कोपि ननु न जानास्मीति भावः ममतृप्तिः पूर्वं तर्पित-

स्यापि अद्य यथाभिलषितसुरतेनानुभूतजातीयेन तृप्तिर्न विहिता त्वया न मम दोष इत्याह उन्मुखस्यापि तृप्तीच्छोऽपि तथाच यस्य यद्वस्तुलिप्सा तद्वस्तुग्रनिनः तद्दानेऽतीवानौचित्यं पापञ्चेति व्यज्यते पक्षे ऊर्ध्वमुखस्य किंभूतया त्वया अन्तरन्तः करणे कलुषेण कालुष्येण निलीनेन केनचित् कोपकरणेनेत्यर्थः स्तम्भितः वहिर्भवन्नपि निवारितः रसः पूर्ववतिकलकिञ्चिनचुम्बनालिङ्गनसीत्कारादिर्यया पक्षे अन्तःकलुषेण नालपतितेन केनचिद्वस्तुना स्तम्भितः रुद्धः रसो जलं यया इत्यर्थः भृङ्गारनालया कनकानुकनालयेत्यर्थः सुवर्णनिर्म्मितजलपात्रविशेषनालयेतियावत् भृङ्गारः कनकानुकइति कोषः जलपात्रविशेषमालयावेत्यर्थः तथाचान्तर्गतं कालुष्यं न रक्षणीयमेतदपेक्षया वहिर्गतमेव समीचीन मितिभावः ॥३५॥

**अयि सरले सरलतरोर्मदमुदितद्विपकपोलपालेश्च ॥**

**अन्योन्यमुग्धगन्धव्यतिहारः कषणमाचष्टे ॥ ३६ ॥**

कृतसुरतसंगोपनां नायिकां प्रति सखी वदत्यन्योक्त्या अयीति अयि सरले सुरतगोपनानभिज्ञे सरलवृक्षस्य सरलपदेन घर्षणयोग्यता पक्षे गोपनानभिज्ञत्वं व्यज्यते तथाचोभयोरनभिज्ञत्वेन सर्वैरेव ज्ञायते मया ज्ञायत इति किमाश्चर्य्यमिति भावः मदेन मदजलेन पक्षे काममदेनेत्यर्थः मुदितः हर्षितः द्विपो गजस्तस्य ... कपोलपालिः कपोलप्रदेशरूपा व्यक्तिः नायिकात्वसम्पत्त्यर्थं स्त्रीलिङ्गनिर्देशः पक्षे मत्तस्य संभ्रान्तस्य कस्यचिन्नायिकान्यत्र गच्छत्येवेत्यर्थः अन्योन्यं मुग्धयोः स्वाभाविकसरलमदजलगन्धयोर्व्यतिहारो विनिमयः कर्षणं घर्षणमाचष्टे कथयतीत्यर्थः पक्षे कर्षणं निर्भरसुरतमर्दमन्योन्यमनोज्ञोद्वर्त्तनसुरभिविनिमयो ... तथाचोद्वर्त्तितोभयशरीरसंमर्द्दोत्थगन्धेन मया ज्ञातं किमर्थं गोपनं गुरुदोषेणान्यैरपि ज्ञायत एवेतिभावः यद्वा स्वकीयां दिवासुरतं कृतवतीं प्रति सखीपरिहासः सरले विपरीतलक्षणया दुष्टे छलकर्त्रीत्वमिति भावः सरलतरोरनेननायकः स्वाधीनः सरलश्च त्वम्मदमुदितायदा रुचिस्तदैव तत्समीपङ्गत्वा विपरीतरतं करोषि यथा सरलतरो स्वयमेव गत्वा कपोलपालिर्घर्षणं करोतीति मया ज्ञातं किमर्थं गोपनमिति भावः ॥ ३६ ॥

**अस्याः कररुहखण्डितकाण्डप...कटनिर्गता दृष्टिः ॥**

**पटविगलितनिष्कलुषा स्वद...पधारेव ॥ ३७ ॥**

अतिसौन्दर्य्यशालितया प्रसिद्धयाऽवरोधस्थितया व्यापारेण द्रष्टुमशक्यया कयाचिदवलोकितः स्वसखायं वदति अस्याइति अस्याः दृष्टिः स्वदते विलक्षणरस-सास्वादं ददातीत्यर्थ किंभूता दृष्टिः मम वहिः स्थितस्य वचनं श्रुत्वा कररुहेण नखेन खण्डितो यः काण्डपटः परदर्शननिवारणपटः तस्मात्प्रकटा प्रत्यक्षा निर्गता बहिरागतेत्यर्थः कररुहइत्यनेना तीव्रप्रयासेनमम परिचितिर्व्यज्यते प्रकटेत्यनेन पटस्य बहुविदीर्णतया न केवलं दृष्टिपातमात्रं किन्तु मयापि सम्यगेवालोकीति व्यज्यते केव पीयूषस्यामृतस्य धारेव पीयूषधारा पटविगलिता पटद्वारेण निपतिता अतएव निष्कलुषाकालुष्यशून्येत्यर्थः तथाच मम वचनं श्रुत्वा प्रयासेन तस्या दृष्टि निपातेन न रसास्वादमात्रमपितु सुधापानेनेन्द्राधिकत्वमपिममेतिव्यज्यते ॥ ३७ ॥

**अस्याः पतिगृहगमने करोति माताश्रुपिच्छिलां पदवीम् ॥**
**गुणगर्विता पुनरसौ हसति शनैः शुष्करुदितमुखी ॥३८**

सपत्नीयुक्तायाः मातृगृहस्थितायाः कस्याश्चिद्बालाया वृत्तं काचिदाह अस्या-इति अस्याः पतिगृहगमने तत्प्रथमगमने द्विरागमनेचेत्यर्थः पत्यनादरभिया माता अश्रुणा पिच्छिलां संचारायोग्यां पदवीं मार्गं करोतीत्यर्थः असौ बाला पुनः केवलं शनैर्मन्दं हसति कुतः गुणगर्विता यतः सपत्नीभिः मम गुणेन रूपेण वयसाचातुल्याभिः किं कर्त्तु शक्यं पतिर्मदधीनो वर्त्तत इति भावः शुष्कमश्रुशून्यं रुदितं मुखे यस्याः सेत्यर्थः लोकलज्जयेतिभावः अन्यनायिका-सक्तं जामातरं श्रुत्वा माता रोदिति असौ हसति प्रथमगमनमात्रेणैवसर्व-मधीनं मम भविष्यतीतिभावः इतिवा सखीं प्रति सख्युक्तिः यथेयं गच्छति तथाचिरादेव त्वमपि गमिष्यसीति वा ॥ ३८ ॥

**अङ्के निवेश्य कूणितदृशः शनैरकरुणेति संशन्त्याः ॥**
**मोक्ष्यामि वेणिबन्धं कदा नखैर्गन्धतैलाक्तैः ॥ ३९ ॥**

अतिदूरादागतपथिकेन मध्येमार्गं मनोरथः क्रियत इत्याह अङ्कइति कूणिता सङ्कोचिता दृक् यया चिरकाललग्नजटाभूतकेशविरेचनदुःखेनेत्यर्थः तस्याः किं कृत्वा अङ्के उत्सङ्गे निवेश्य उपवेश्य ताभिःशेपः अकरुण इति संशन्त्या उच्चारयन्त्या इत्यर्थः एकाङ्कभक्तायामप्युपेक्षणादकरुणे निवेणिबन्धंमद्गमनसमयेयोवेणिबन्धस्त मेवेत्यर्थः परदेशगते प्रिये तदागमनं विना न वेणिसंमार्जनमिति सतीसमाचारात्

शनैः शनैः मोक्ष्यामि पृथक्करिष्यामि केशभङ्गबाधाशङ्कयेत्यर्थः गन्धतैलेन पौष्पेण कदा कस्मिन् काले पर्व भविष्यतीति ॥ ३९ ॥

**अलमनलङ्कृतिसुभगेभूषणमुपहासविषयमितरासाम् ॥**
**कुरुषे वनस्पतिलताप्रसूनमिववन्ध्यवल्लीनाम् ॥ ४० ॥**

निर्दूषणमात्मानंविनिन्दन्तींसमाधत्ते अलमिति यद्वा चिरकालाभिलषितपरनायकसमागमनावसरे अनलङ्कृता कथं यामीति वादनीं दूत्याह दान्तोत्तरंभूषणसामान्यशून्यां दृष्ट्वासकामोनायक आहइतिवस्तुगतिः अलङ्करणं विनैवात्यर्थं सालङ्काराधिकं सुभगे सुन्दरि इतरासामन्यस्त्रीणां भूषणमुपहासविषयं निन्दितं कुरुषे वनस्पतिलता पुष्पंविनैव फलशालिलता तैरपुष्पाद्वनस्पतिरितिकोषः फलशून्यलतानां पुष्पमिवेत्यर्थः तथाच चलनीयं नायकःईदृशीं निर्भूषणा मेव दृष्ट्वाकृतार्थोभविष्यतीति, मध्यमपक्षे व्यङ्ग्यंपूथमद्वितीयौ सुगमौ ॥४०॥

**अबुधा अजङ्गमा अपि कयापि गत्या परंपदमवाप्ताः ॥**
**मन्त्रिण इति कीर्त्यन्ते नयबलवटिका इव जनेन ॥४१॥**

अतिनीचस्यापि समीचीनस्थानमात्रेण महती पृतिष्ठा भवतीत्युपदिशति कश्चिद्वृद्धो बालादीन् अबुधा इति जनेन सकलेन जना मन्त्रिणः अमात्याः राज्यभारसमर्था इति कथ्यन्ते इत्यर्थः पक्षेमन्त्रिणः मन्त्रिगतयः कीर्त्यन्ते चतुः षष्ठिकोष्ठविनिर्मित क्रीडागृहे पात्रविशेषाः कथ्यन्ते इत्यर्थः किंभूता,कयापि गत्या द्वारपालकृत्यान्ततोऽनर्थकरणादिना परं पदं महापूभुसमीपमवाप्ताः पूाप्ताः पक्षे कयापि गत्या नौकादिकृतरक्षया परं पदं चरमगम्यगृहं पूाप्ता इत्यर्थः पुनः अबुधा अपण्डिता अपिरत्रापि संवध्यते तथाचापण्डितस्यापीयमवस्थाः पण्डितानां का कथेति ध्वनिः पक्षे ज्ञानशून्याः काष्ठकृतत्वात् अजङ्गमा अपिपादाद्यभावेन गमनासमर्था अपीत्यर्थः, कदाप्यनागता इति वा पक्षे स्थावराः काष्ठत्वात् नयबलस्य पूर्वोक्तक्रीडाविशेषस्य वटिका इव पदातय इवेत्यर्थः गुटिकाइतिपाठेऽपि स एवार्थः वटिकाशब्दः काष्ठपदातौ सङ्केतित आधुनिकैरिति नासाधुः तथाच यथा काष्ठस्य स्थलवैभवात्पूसिद्धिरनेककार्य्यकरित्वञ्च जायते तथाऽयोग्यस्यापि स्थलमाहात्म्ये सर्वं सम्पद्यते तदवश्यं स्थानविशेषलाभाय यत्नः कार्य इत्युपदेशः ॥ ४१ ॥

**अतिशीलशीतलतया लोकेषु सखी मृदुप्रतापा नः ॥**

**क्षणबाष्पदह्यमानः प्रतापमस्याः प्रिये वेद ॥४२॥**

सखी सखीं परिहासेनाह अतीति लोकेषु प्रतिवेशिषु शीलशीतलतया स्वभावशीतलतया सर्वत्र सर्वदास्वाभाविकानुद्धतस्वभावतयेत्यर्थः नः अस्माकम् इयं सखी मृदुप्रतापा अल्पतेजस्का अन्यस्य दुःखदकोपशून्येतियावत् परन्तु अस्याः मम सख्याः प्रतापं कोपतेजः प्रियएव जानातीत्यर्थः किंभूतः क्षणेन उत्सवेन कोपशान्त्यर्थं प्रियपादपूणामानन्तरोत्पन्नं यद्बाष्पंक्षणं व्याप्य वा वर्त्तमानं तेनापि दह्यमानः चिरकालिकवास्तविकमाने प्राणत्याग एव स्यादिति भावः तथा च यत्र यदुचितं तत्र तथैव करोति प्रियतमे कोपो वृथा मृदुत्वं प्रतिष्ठाकारकमत्यन्तं धूर्त्तेयमिति परिहासः पूर्वोत्तरार्द्धाभ्यां सखीद्वयंवदतीत्येके। मदीया सखी प्रतापशीले तिवादिनी सपत्नी सखीं प्रति द्वितीयसपत्नीसखी वदति त्वदीया सखीन स्थाने एवं कोपं करोतीति कोपना मदीयातु स्थान एव कोपं करोतीति विलक्षणा मदीयेति भावमाहुरपरे पतिगृहगमनसमये त्वयाप्येवमेव कर्त्तव्यमिति शिक्षयन्ती वृद्धा काचित्स्वसखी वृतान्तमाहेति कश्चित् ॥४२॥

**अन्याअपि गृहणीति ध्यायन्नभिलषितमाप्नोति ॥**

**पश्यन् पाषाणमयीः प्रतिमा इव देवतात्वेन ॥४३॥**

अत्यन्तविदग्धस्यरमणीय रमणीकस्य भवत्सख्युः कथमनेकनिन्दितनायिकासमागम इति पृष्टः कश्चित्कश्चिदाह मम सखा सर्वदा तामेव चिन्तयन् तिष्ठति ताभिः तत्रगृहिणीस्वरूपं धृत्वा गम्यते तेनापि गृहिणी भावनया सङ्गः क्रियते नान्यथेति सदृष्टान्तमाह अन्याअपीति गृहिणीरूपेणागता अपीत्यर्थः क्वचिदन्यास्त्वितिपाठः स पाषाणमयीरित्यन्यविभक्तिशालित्वेन हेयः गृहिणीति ध्यायन् गृहिणीत्वेनैव जानन्नित्यर्थः तथाच वार्त्तालापादिकमपि गृहिणीं ज्ञात्वैव करोति आभिरपि गृहिणीवदेव सर्वं क्रियते एतत्सर्वं मया गृहिण्या च ज्ञायत एव तस्मात्तासामेवनिन्दान मम सख्युरितिभावः अभिलषितं गृहिणीसुरतसुखं पक्षे पुरुषार्थ चतुष्टय माप्नोति प्राप्नोति आप्नोमीतिप्रामादिकम् उक्तिविरोधात् स्वोक्तिपरत्वेन वा कथञ्चित्सङ्गमनीयम् पाषाणस्वरूपा प्रतिमामूर्त्तिः देवतात्वेन पश्यन् जनः देवताभावना जन्य फलं प्राप्नोत्येव पाषाणतुल्या अन्या नायिकाः देवतास्वरूपां गृहिणींफलदात्रीं भुक्तो नायक इति समुदायार्थ स्तथाचानयोरनुरागोऽतीव सुन्दरः सर्वविलक्षणश्चेति ४३

अनुपेत्य नीचभावं बालक परितो गभीरमधुरस्य ॥
अस्याः प्रेम्णः पात्रं न भवसि सरितो रसस्येव ॥४४॥

तस्या नायिकायास्सङ्गं मया सम्पादयेति केनचिन्नवधनयौवनशालिना नायकेनोक्ता दूती नायकमाह अनुपेत्येति हे बालक धनयौवनगर्व्वेणाज्ञ अस्याः सकलकलाभिज्ञायाः प्रेम्णः स्नेहस्य पात्रं योग्यः त्वन्न भवसि वृथाभिमानिनामस्या दुर्लभमेवदर्शनमिति भावः नत्वन्यप्रकारो वर्त्तते तदपि कथये त्याग्रहे आह नीचभावं सेवकभावमहमनुग्राह्य इति स्वमुखेन परद्वारेण वाश्रावयित्वा अनुवृत्तिमिति यावत् अनुपेत्याकृत्वा न भवसीतिसंबंधः कृत्वा कदाचिद्भविष्यसीति भावः पक्षे तीरं गत्वापि नीचस्वभावमकृत्वेत्यर्थः प्रेम्णः किंभूतस्य परितः सर्वतः सर्वनायिकानां प्रेमापेक्षया यद्वा सर्वप्रकारेण गभीर मधुरस्यात्यन्तमधुरस्येत्यर्थः गभीरस्य मधुरस्यचेति वागभीर पदेन यावज्जीवस्थायित्वं मधुरपदेन विलक्षणेन सुख जनकत्वं च कथ्यते पक्षे परितः सर्वदिक्षु गभीरस्यातलस्पर्शस्य मधुरस्य मधुर रस युक्तस्येत्यर्थः सरितः तरङ्गिण्या रसस्य जलस्येवेत्यर्थः सरित इत्यनेन पुण्यैकलभ्यत्वं समुद्रतुल्यमहाशयनायकाधीनत्वं प्रतिपलमननुभूतानविलरसदातृत्वं महाकुलप्रभवत्वं शृङ्गार पोषकाने कतरङ्गशालित्वं नायिकायां द्योत्यते प्रेम्णि चानवच्छिन्नत्वं विकारराहित्यं चिरकालिकत्वञ्च व्यज्यते ॥४४॥

अधिवासनमाधेयं गुणमार्गमपेक्षते नच ग्रथनाम् ॥
कलयति युवजनमौलिं केतककलिका स्वरूपेण ॥४५॥

सम्पादितनायिकासङ्गमं साभिमाननायकं दूत्युपदिशति अभिमानं परित्यजेति यद्वा सकलनायिकाधिक रूपशालिनीयमिति कश्चिदाह अधोति केतकस्य पुष्पविशेषस्य कलिका आरब्ध विकासा नतुसम्यक् विकसिता युवजनमस्तक मारोहति सुरभिस्सर्वैर्मालावेव स्थाप्यते नत्वाघ्राणमपि क्रियत इति भावः पुरजनेतिपाठ एकार्थक एव, हेतुमाह स्वरूपेण स्वीयकान्तिमात्रेण तथाच रूपं दृष्ट्वैव सर्वैर्द्धार्यत इतिभावः आरोहणे रूपातिरिक्तकारणाभावमाह अधिवासनं सुगन्धिद्रव्यान्तरेण सौरभकरणं नापेक्षते इत्यर्थः तथाच सौरभं विनापि स्वरूपेणारोहतीत्यन्वयः एवमग्रेऽपि यद्वा अधिवासनं सौरभकारणमाधेयं वस्त्वन्तरेणारोपितसौरभं गुणस्य दाम्नः मार्गं वर्त्म ग्रथनां गुम्फनं तथाच रूपातिरिक्तं सर्वमुपेक्ष्य रूपमात्रेणैव यथा केतककलिका सर्वमस्तकारोहणङ्करोति एवमेवेयं बाला चातुर्य्यादिरहितापि स्वरूपे-

णैव युवजनान् प्रणमयति अग्रे विं करिष्यतीति न जानामीत्यर्थः यद्यपि नायिका पक्षे लापनप्रयोजनं नास्त्येव, व्यञ्जनया प्रतीतावर्थानामनुपयोगात् उपयोगे वा सर्वेषां लाक्षणिकत्वेन वाच्यासंभवात्तथापि बुद्धिवैशद्यार्थं व्याख्या तथाहि अधि-वासनं सुखसुगन्धिकरणं नापेक्षते आधेयम् उद्वर्त्तनाद्यादिशरीरलावण्यं गुणमार्ग गुणान्वेषणं प्रथनां दूतीद्वारेण मिलनमित्यादि केचित् प्रौढ़ाया एव स्तुतिरि-त्यपि कश्चित्तन्न कलिकापदविरोधात् ॥४५॥

**अपनीतनिखिलतापां सुभग स्वकरेण विनिहितां भवता ॥**
**पतिशयनवार पालिज्वरौषधं वहति सा मालाम् ॥४६॥**

नायिकाया अद्य पतिगृहे गमनदिनं नतु सपत्नीनामिति ज्ञात्वाऽनागतं नायक मानयितुं तं दूती वदति अपनीतेति सा मालां वहति इति संबन्धः पतिशय्या-शयनवारः सपत्नीगणनाक्रमेण गमनदिवसः तृतीयश्चतुर्थो वा स एवपालिज्वरः तृतीयज्वरश्चातुर्थिको वा तदौषधी स्वरूपां मालामित्यर्थस्तथाच त्वन्तु पतिगृहगमन दिनं ज्ञात्वा न गच्छसि सा तु कल्पितज्वरा त्वद्दर्शन लोलुपा त्वद्दत्तमनसैव जीवतीति त्वयाऽवश्यं चलनीयमिति अपनीतः निखिलस्तापः कन्दर्पसन्तापो यया मालादानमात्रेण तापो गत इत्यर्थः सुभग भाग्यशालिन् एकदिनवियोगेऽपि यत्कृते इयमवस्थेतिभावः भवता निजकरेण दत्तां नतु परद्वारेणेत्यर्थस्तथाच गुरु जनसमक्षमेव पालिज्वरौषधिमालां गृहाणेत्युक्त्वाऽन्यहस्तेन परिधाने गुणो न भवतीत्युक्त्वा च दत्तां मालां गृहीत्वा त्वदधीना सेतिभावः यद्वा ऽपनीतनिखिल तापामपि पतिशयनवारपालिज्वरकारिणीमौषधिमित्यपिकारयोजनेन व्याख्येयम् तथाच पतिद्वेषो जातस्तस्यास्त्वदधीना सेति भावः ॥४६॥

**अगणितगुणेन सुन्दर कृत्वा चारित्रमप्युदासीनम् ॥**
**भवतानन्यगतिः सा विहितावर्त्तेन तरणिरिव ॥४७॥**

नायिकासखी खलप्रवेशनिवारणार्थं नायिकानुरागातिशयं नायकं वदति अग-णितेति सुन्दर अनेन नायिकासौलभ्येन खलप्रवेशयोग्यत्वं ध्वन्यते अगणिता असङ्ख्याता गुणा विवेकविनयदातृत्वादयो यस्य तेनानेन विचारितकार्य्यकारि त्वेन खलतावगमसामर्थ्यं तेन च स्वसमीहितदातृत्वम् ध्वन्यते आवर्त्तपक्षे अग-णिता अवहेलिताः गुणा रज्जवो येन आवर्त्ताधिको गुणस्य निरर्थकत्वादित्यर्थः चारित्रश्चरित्रमेवस्वार्थेअण् पातिव्रत्यं तत् उदासीनं कृत्वा ऽपिनापरित्यागान् त्वं

ध्वन्यते तथाच मम सख्याः प्रथममौपपत्ये पातिव्रत्यनाशके त्वत्कृते कथमपि गुणदोषज्ञेन भवता न त्याज्येति भावः पक्षे च पुनः अरित्रं केलिपातनं मैथिल भाषया ( करुआर ) इति प्रसिद्धमुदासीनं क्वचित्पतितं कृत्वा भवता नत्वन्येनेत्यर्थः अनन्यगतिः अनन्यशरणा सा मे सखी विहिता कृता पत्युरुपेक्षितत्वादितिभावः पक्षे आवर्त्तनजलभ्रमणेनानन्यगतिः अन्यत्रगन्तुमशक्ता तरणिर्नौका यथा तथेत्यर्थः तथाच यथा त्रुटितगुणा पतितावर्त्तगता नौका तत्रैव तिष्ठति तथा नाशितव्रतत्यक्त पतिका त्वदेकशरणा मम सखी कोटिनायिकालापेऽपि गुणज्ञेन भवता नोपेक्ष्या खलवचनादिनेति भावः अवित्रं केलिपातनं गुणो रज्जौ विवेकादौ स्यादावर्त्तोऽम्भसां भ्रमः, स्त्रियां नौस्तरणिस्तरिः, चरित्रमपिचारित्रमित्यमरहारावलीद्विरूपकोषाः ।४८।

**अनुरक्तरामया पुनरागतये स्थापितोत्तरीयस्य ॥**
**अप्येकवाससस्तव सर्व्वयुवभ्योऽधिका सोभा ॥४८॥**

एकवाससं लज्जितं दृष्ट्वा तम्प्रत्याह कश्चित् अनुरक्तेति किल निश्चयेन तव सर्व्वयुवभ्यः सकलयुवजनेभ्यः शोभा सौन्दर्य्यमधिकमित्यर्थः यस्यैव सौन्दर्य्यफलं स एव सुन्दरः सौन्दर्य्यफलं यूनां सुरासुरोरगेषु तवसम्पूर्णमेव वर्त्तत इतिभावः एकवाससोऽपि धौतमात्रवाससोऽपीत्यर्थः उष्णीषरहितब्राह्मणाभिप्रायं पूर्वार्द्धे उत्तरीयपदस्योर्द्धभागस्यसर्व्ववस्त्रपरत्वं वा कुतः शोभेत्यतआह अनुरक्तात्यन्तं प्रीता या रामा तया हृतं वलात्कारेण रक्षितमुत्तरीयं यस्येत्यर्थः पुनरागतये पुनरागमनार्थमित्यर्थस्तथाच का लज्जा महद्भाग्यमितिभावः ॥४८॥

**अर्द्धः प्राणित्येको मृत इतरो मे विधुन्तुदस्येव ॥**
**सुधयेव प्रियया पथि सङ्गत्यालिङ्गितार्द्धस्य ॥४९॥**

कश्चित्सखायं वदति अर्द्धइति पथि मार्गे प्रियया तया नायिकया संगतिः संसर्गस्तया हेतुभूतया आलिङ्गितः अर्धः विषमभागः शरीरैकदेशो यस्य तस्येत्यर्थः सती समीचीना तथागन्तव्यं यथा प्रियाङ्गस्पर्शः स्यादिति दर्शनमात्रेण विचार्य्य गतिर्यस्या इत्युपसर्गेण समामेप्रियाविशेषणं वा एकार्द्धः विषमभागः स्वल्पः प्राणिति जीवति इतरभागः स्पर्शशून्यः मृतः तथाच यत्र स्पर्शोत तत्रैव रोमाञ्चस्पन्दा दिर्नान्यत्रातोज्ञायत इत्यर्थः कयाकस्येवसुधया अमृतेन गलपर्य्यन्तगतेन विधुन्तुदस्य राहोरिवे त्यर्थः यद्यपि राहुकेतूद्वावपि जीवतस्तथापि शिरोभागो जीवति कवन्धो मृत स्तदुत्थितकिरणाः केतव इतिवेदे अतएव केतुस्य इति वाक्यं साधुपुंस्यर्द्धोर्द्धं समेंऽशके, सैंहिकेयो विधुन्तुद इत्यमरः ॥४९॥

**अवधीरितोऽपि निद्रामिषेण माहात्म्यमसृणया प्रियया ॥**
**अवबोधितोऽस्मि चपलो वाष्पस्तिमितेन तल्पेन ॥५०॥**

मम प्रेयसी कोमलहृदया सापराधेऽपि मयि कोपं न करोतीत्याह अवधीरितोऽपीति निद्राच्छलेन कोपग्लानया प्रेयस्या अवहेलितोऽप्यहं भीतं ज्ञात्वा परित्यक्तकोपया अश्रुजलार्द्रेण शयनीयेन चपलस्सन्नवबोधितश्च्युतनिद्रोस्मीत्यर्थः तथाच सापराधे मयि स्त्रीस्वभावान्मानं कृतवती भीतं निश्चलं ज्ञात्वा मत्कृतेभीतोयमिति किमर्थं मतो मानं तत्याजतस्मात्कोमलहृदया मय्यनुरक्ताच प्रेयसीतिभावः ॥५०॥

**अयि शब्दमात्रसाम्यादास्वादितशर्करस्य तव पथिक ॥**
**स्वल्पो रसनोच्छेदः पुरतो जनहास्यता महती ॥५१**

एकस्मिन्नगरे काचिन्नायिका सकलगुणोपेता बहुवैदग्ध्या बहुद्रव्यसाध्या सुप्रसिद्धाऽसीत् तन्नाम्न्यपरा च स्प्रष्टुमप्ययोग्या कुरूपा जरतीचासीत् तत्र प्रथम नायिकाभ्रमेण जरती मुपगम्य दर्शनमात्रेण जातवैराग्योऽपि बहुधाश्रुता किमियमेव नायिका स एव ग्राम इत्यान्तरो गुणः स्यादित्याशङ्क्योपयोगारम्भे सति शय्या द्युपक्रमाद्ग्लानमनाः प्रपलाय्य चलितः तं जरतीगृहान्निस्सरन्तमतिसुन्दरं दृष्ट्वा स्वबुद्ध्या सर्वमाकलय्य कश्चिद्विदग्धः अन्योक्त्या आह अयीति पथिक अनेनातत्त्वज्ञत्वंव्यज्यते तवान्यस्य नैवं भ्रम इति भावः शब्दमात्र साम्यात् वाचकशब्दमात्रैक्यादित्यर्थः शर्कराशब्दवाच्यत्वं यथा गुडविकारे तथा प्रस्तरशकलेऽपि वर्त्तते शर्करा मिष्टा भोक्तव्येतिजानासि का सा सर्क्करेतिन जानासि अतः शर्कराशब्दवाच्या प्रस्तरविशेषरूपाशर्करा स्वादिता त्वयेत्यर्थः मात्रपदेन रसस्य व्यावृत्तिः रसनाछेदः स्वल्पः स्वल्पदुःखजनकः प्रस्तरशकलेन जिह्वाकर्त्तनरूपं दुःखं सह्यमित्यर्थः यतः पुरतः अग्रे प्रतिनगरं जनहास्यता महती भविष्यतीत्यर्थः अतः शीघ्रं प्रपलाय्य गच्छेति भावः नायिकापक्षेऽपिलापने आस्वादिता उपभुक्ता शर्क्करातुल्या नीरसा दुःस्वमात्रप्रदा येन तस्येत्यर्थः रस्यतेऽनेनेति व्युत्पत्या रसनं मनः तस्यासमन्ताच्छेदः मनोभङ्ग इत्यर्थः समाननाम्नोर्दातृकदर्य्ययोर्भूपालयोर्मध्ये नामभ्रमेण कदर्य्यसेवकं लाभाभावखिन्नं प्रति कश्चिद्वदतीत्यन्ये ॥५१॥

**अभिनवयौवनदुर्ज्जयविपक्षजनहन्यमानमानापि ॥**
**सूनोः पितृप्रियत्वाद्बिभर्त्ति सुभगा मदं गृहिणी ॥५२॥**

जातपुत्रां गलितयौवनामप्रसूतसपत्नीदुःखितां सखी समाधत्ते अभिनवेति गृहिणी प्रथमपत्नी सुभगा मदमिव मदमहंसुभगेतिमदं वा वहतिसूनोः पुत्रस्य पितुः प्रियत्वादित्यर्थः किंभूता गृहिणी अभिनवेनाचिरप्राप्तेन यौवनेन दुर्जयो जेतुमशक्यो यो विपक्षो जनः सपत्नीरूपः शत्रु. धनपतिहरणकर्त्तृत्वात्तेन- हन्यमानः नाशितः गर्वो यस्या सापीत्यर्थः नाशितमानस्य कथं मद इति विरोधे ऽपिः सर्वा सम्पत्ति र्मदीयैवेति करोतु निपुत्रा सपत्नीगर्वं का हानिरित्य'- शया यथेयं सुभगा मदं वहति एवमेव सपुत्रा त्वं किं सपत्नीशोकेन दुःखितासीत्युपदेश. ॥५२॥

अपमानितमिव सम्प्रति गुरुणा ग्रीष्मेण दुर्बलं शैत्यम् ॥
स्नानोत्सुकतरुणीस्तनकलशनिबद्धं पयो विशति ॥५३॥

बलवता शत्रुणा जितेन परस्थानस्थितेनान्यस्थलं हित्वा स्वमूलस्थलं गत्वैव मरणमप्यङ्गीकार्य्यमिति कश्चिदन्योक्त्या कश्चिदाह अपमानितमिति शैत्यं- शीतलता सम्प्रति तत्क्षणं पयो जलं विशति दुर्बलं कृशं शत्रुप्राबल्यादिति- भावः स्नानोत्सुका या तरुणी युवती तस्याः स्तनकलशे कुचघटे निबद्धं सम्बद्धं कुचकलशं गले बध्वा मरणाय जलं विशतीति भावः किंभूतं गुरुणा प्रचुरेण ग्रीष्मेणातपेन शत्रुणापमानितमिवेत्यर्थः अन्योऽपि केनाप्यवमा- नितः गले घटं बध्वा जलं प्रविशतीतिलौकिकन्तथाच जडस्य शैत्यस्याप्येवं तत्र सचेतनस्य किं वक्तव्यमितिभावः संपत्तौच विपत्तौच मूलभूतसम्बन्धि- त्यागो न कर्त्तव्यइत्याह यथा शैत्यं मरणश्चनेनापि जलं विशतीति वा ॥५३॥

अलसयति गात्रमखिलं क्लेशं मोचयति लोचनं हरति ॥
स्वाप इव प्रेमान्मम मोक्तुं न ददाति शयनीयम् ॥५४॥

गुरुजनोत्थानात्प्रागेव त्वया पतिगृहात्कुतो नागम्यते इति वादिनीं सखीं नायिकाह अलसयतीति स मत्प्रियान् ननु पतिः तेन तदाज्ञामात्रकारिण्यह- मिति सूच्यते स्वाप इव शयनीयं शय्यां मोक्तुं त्यक्तुं न ददातीत्यर्थः समानव्यापारशालित्वेनोपमांपूरयति सकलं शरीरमलसयति परिपूर्णोनवरतसुरतेन निश्चलङ्करोतीत्यर्थः पक्षे जृम्भादिना उत्थानासमर्थाङ्करोतीत्यर्थः क्लेशं मदन- सन्तापमखिलं मोचयति नाशयति पक्षे गृहकृत्यश्रमजनितं दुःखं मोचयतीत्यर्थः लोचनं हरति स्वमात्रदर्शनोत्सुकं करोति पक्षे निमीलयतीत्यर्थस्तथाच मया किं कर्त्तव्यम् प्रियतमव्यापारेणैवतत्रस्थीयतेनतुस्वेच्छयेतिभावः ॥५४॥

अंसावलंविकरधृतकचमिदमभिषेकधवलनखरेखम् ॥
धौताधरनयनं वपुरस्त्रमनङ्गस्य तव निशितम् ॥५५॥

नायको नायिकां वदति अंसेति अंसदेशेऽवलंवनशीला जलच्यवनार्थं कराभ्यां धृताः कचाःशिरोरुहा यस्मिन् तद्वपुरित्यर्थः इदंपुरःस्थितम् पक्षे अंसावलम्बिनौ यो करौ ताभ्यां धृतः कचो यस्मात्तदनङ्गस्यास्त्रम् तथैवं नायिकाकचधारणादितिभावः अभिषेकेण स्नानेन धवलाः लौहित्यहान्या नखरेखा नखक्षतरेखायस्मिन्तदित्यर्थः धौतं जलक्षालितमधरनयनं यस्मिन् पक्षे धौते चुम्बनच्युते ताम्बूलरागकज्जले यस्मात्अनङ्गशस्त्रकृतसुरते चुम्बने नाधर-नेत्ररागकज्जलच्यवनादितिभावः वपुः शरीरमनङ्गस्य कन्दर्पस्यास्त्रमित्यर्थः अस्त्रं निशितमधुनैवशोणितमित्यर्थः अनङ्गपदेन प्रहारकर्त्तुरदृश्यत्वेन प्रतीकारा-नर्हत्वं निशितपदेनासहिष्णुत्वं व्यज्यते तथाच स्नानोत्थितमिदं वपुरतीव सुन्दरं दृष्ट्वा मम समयापेक्षा नास्तीत्यनवसर एव सुरतमवश्यंदेहीति भावः ॥५५॥

अविनिहितं विनिहितमिव युवसु स्वच्छेषु वारवामदृशः ॥
उपदर्शयन्ति हृदयं दर्पणविम्बेषु वदनमिव ॥५६॥

वेश्याया द्रव्यापेक्षैव नतु वास्तविक प्रेमातो वेश्याप्रेमकर्त्ता वञ्चित एव स्यादिति कश्चित् कञ्चिदुपदिशति अविनिहितमिति वारवामदृशःवेश्यायुवसु तरुणेषु कापट्यशून्येषु हृदयमविनिहितमिव प्रीतमिवोपदर्शयन्ति ज्ञापयन्ति ज्ञातिस्वभावादित्यर्थः केषु किमिव दर्पणमण्डलेषु मुखमिव यथा दर्पणे असम्बद्धमेव तत्त्वतो मुखं सम्बद्धमिव भवति तद्वदित्यर्थः तथाच स्वच्छता-दोषेणायं भ्रमो भवति तेन स्वच्छेन दूरत एव स्थेयमन्यथा खेद एव स्यादिति भावः ॥५६॥

अतिलज्जया त्वयैव प्रकटः प्रेयानकारि निभृतोऽपि ॥
प्रासादमौलिरुपरि प्रसरन्त्या वैजयन्त्येव ॥५७॥

प्रायसः मम प्रेय खले कथयति कथमन्यथा प्रसिद्धं यातमिति वादिनीं नायिकां सख्याह अतीति प्रेयानत्यर्थं त्वयि प्रीतः सनायकः निभृतोऽपि अतिधीरत्वेन गोपनशीलोऽति गुप्तोपीत्यर्थः त्वयैव नत्वन्येन प्रकटः प्रसिद्धः अस्या अहं प्रेयानिति जनेषु विदित इत्यर्थः अकारि कृतः त्वया किंभूतया-

ऽतिलज्जया कार्य्यान्तरं विनैवोक्तस्थले स्थित्वा बहुधा तं पश्यन्त्या यद्वातिलज्जया लज्जाधिक्येनेत्यर्थः तथा सुवासिनीयं कथमस्य सामाजिकस्यात्यन्तं लज्जां करोतीति विचार्य्यैव सर्वैर्ज्ञातमितिन नायकदोषः किंतु तवैवेति भावः प्रासादस्य धवलगृहस्य मौलिः उपरिभागः यथा स्थिरोऽपि सर्वसाधारणोऽपि उपरि प्रसरन्त्या वैजयन्त्या पताकया प्रकटः अमुकप्रासादमौलिः सप्त्र यत्रेयं वैजयन्तीति ज्ञानविषयः क्रियते तथेति भावः उभयोर्वाचनिकशिष्टाचारेसङ्गमं विनैव प्रसिद्धिर्य्याता तदुक्तं सखी नायिकामाह विनैव प्रेम मम प्रेयानयमिति अतिलज्जया वारंवारसहावस्थानेन त्वयैव व्यक्तः कृतः तथाच प्रसिद्धि रात्रमुपयोगस्तथामौलिः प्रसिद्धं विहायनान्योपयोग इति भावः ॥५७॥

अन्योन्यग्रथनागुणयोगाद्गावः पदार्प्पणैर्बहुभिः ॥
खलमपि तुदन्ति मेढ़ीभूतं मध्यस्थमालम्ब्य ॥५८॥

कश्चिदतिविद्वान् केनचित् मुखरेण पण्डितंमन्यमानेन मूर्खसभायां जित इति अतिखिन्नो जातस्तं प्रति विद्याशून्येन मुखरेण विवादः समीचीनमध्यस्थं विना न कर्त्तव्यः मध्यस्थे समीचीने सति तेनैव तन्मूर्खत्वं वक्तव्यमित्याह अन्योन्येति गावः सरस्वत्यः वचनव्यापारा वा पक्षे वृषभा खलमपि मुखरमपि पण्डितम्मन्यमपि इत्यर्थः पक्षे धान्यादिमर्दनस्थानमपि अपिना मुखदुवं धान्यं वेति का कथेति सूच्यते तुदन्ति व्यथयन्ति मूर्खत्वेनैव प्रथयन्तीति यावत् पक्षे खण्डयन्तीत्यर्थः किं कृत्वा मेढ़ीभूतं दृढ़ं पक्षपातशून्यं पक्षे मेढ़ीभूतं कले दारुभूतं मध्यस्थं विवादनिर्णायकं पक्षे खलमध्यस्थितमालम्ब्य प्राप्येत्यर्थः अन्योन्यं परस्परं यद्ग्रथनं पूर्वाविरोधेनापिरत्र कथनं तदेव गुणस्तद्योगात् तत्संबन्धात् गावस्तुदन्तीत्यन्वयः पक्षे अन्योन्यं या ग्रथना तदर्थो गुणो रज्जु स्तद्योगादित्यर्थः कैस्तुदन्तीत्याह पदार्प्पणैः सुवन्ततिङन्तपददानैः पक्षे चरणचालनैरित्यर्थः बहुभिः बह्वर्थैः पक्षे गुरुतरैरित्यर्थः गौर्वाण्याञ्च गव्यपीति कोषः पुंसि मेढ़िःखले दारु न्यस्तं यत्र शुबन्धने इत्यमरः मेधन्ते संबध्यन्ते पशवोऽत्रेति इप्रत्ययः ॥५८॥

अर्थग्रहणैर्न तथा व्यथयन्ति कटुकूजितैर्यथा पिशुनः ॥
रुधिरादानादधिकं दुनोति कर्णे क्वणन्मशकः ॥५९॥

दुर्ज्जनवाक्यमतिदुःसहमित्याह कश्चित् अर्थेति पिशुनः खल धनग्रहणैः निरर्थक धनग्रहणैस्तथा तेन प्रकारेण न व्यथयंतिन पीड़ां करोतीत्यर्थः यथा कटुकूजितैः शब्दितैः कूजितपदेन ध्वनिवाचकेनार्थशून्यत्वन्तथाच व्यर्थकोलाहलैरित्यर्थः यद्वा

कटुकूजितैः अमुं वञ्चितं कृत्वा मया गृहीतमिति कथनैरित्यर्थः रतिकूजितमित्यादौ कूजितशब्दस्यशब्दमात्रवाचकत्वात् अननुग्रहेणेति पाठे विरोधेनेत्यर्थः दृष्टान्तमाह मशकः कर्णमूले क्वणन् शब्दं कुर्वन् रुधिरपानादप्यधिकं कुनोति दुःखयतीत्यर्थः ॥५९॥

**अग्रे लघिमा पश्चान्महतापि पिधीयते नहि महिम्ना ॥**
**वामन इति त्रिविक्रममभिदधति दशावतारविदः ॥६०॥**

अपरिचितदेशे प्रथमगमने तथा कर्त्तव्यं यथा प्रथमत एव प्रतिष्ठा भवति प्रथमाऽप्रतिष्ठा पश्चादतिप्रतिष्ठायामपि न गच्छतीत्याह अग्रइति अग्रे प्रथमत इत्यर्थः लघिमा अप्रतिष्ठा पक्षे ह्रस्वत्वं पश्चादनन्तरम् महतापि सर्वोत्कृष्टेनापि महिम्ना प्रतिष्ठावत्त्वेन पक्षे परममहतापरिमाणेन अपिना समानेन न्यूनेन वा का कथेति कथ्यते न पिधीयतेन दूरीक्रियते पक्षे नाच्छाद्यत इत्यर्थः दशावतारविदः मत्स्यादिकल्कयन्तविदः त्रिविक्रमं त्रिधापादप्रक्षेपेण लोकत्रयलङ्घनकर्त्तारं वामनइति छिपञ्चाशदङ्गुलप्रमाणइति अभिदधति कथयन्तीत्यर्थः दशवतारविदः इत्यनेन विष्णो सकलैश्वर्य्यवत्त्वं वहुत्वञ्च कथ्यते तथाच वामनपुरस्सरामरकथनं ननु प्रथमं त्रिविक्रमकथनं परिचयशालिभिरपि तत्त्वज्ञैरेवमुच्यते का कथा अपरिचायकैरिति भावः ॥ ६० ॥

**अङ्के स्तनन्धयस्तव चरणे परिचारिकाः प्रियः पृष्ठे ॥**
**अस्ति किमलब्धमधिकं गृहिणि यदाशङ्कसे बालाम् ॥६१॥**

सपत्नी शङ्किनीं सख्याह अङ्केइति गृहिणि गृहेश्वरि अधिकं किमलब्धम प्राप्तमस्तीत्यर्थः अपितु नास्तीतिभावः यत् बालां पश्चाद्विवाहां माशङ्कसे मदीयं ग्रहीष्यतीत्यादिशङ्कागोचरं कुरुषे कुतो नालब्धमस्तीत्याह अङ्के उत्सङ्गे स्तनन्धयः अतिनूतनबालकः तथाच रतापेक्षा नेदानीमिति भावः तव चरणे परिचारिका दास्यस्तथाचाश्रमीयपोष्यवर्गस्त्वदधीन एवेति भावः प्रियस्त्वदेकचित्तः पृष्ठरक्षक इत्यर्थस्तथाच सर्वं धनपरिवारपतिपुत्रगृहादिकं त्वदधीनमेव सम्प्रति सुरतापेक्षापि नास्त्येव बालाशङ्का व्यर्था तया तव किमपि कर्त्तुं न शक्यत इति भावः ॥६१॥

**अधर उदस्तः कूजितमामीलितमक्षि दोलितो मौलिः ॥**
**आसादितमिव चूम्बनसुखमस्पर्शेऽपि तरुणाभ्याम् ॥६२॥**

कयोश्चिद्दासक्तिरसुज्ञानेति सखायं सखा वदति अधर इति अस्पर्शेऽपि स्पर्शाभावेऽपि अस्पर्शकालेऽपि रजोदर्शनकालेऽपीत्यर्थः चुम्बनसुखं तरुणाभ्यामास्वादितमिवानुभूतमिवेत्यर्थः अनुभवप्रकारमाह नायकेनाधर उदस्तश्चुम्बनकालिकक्रियाविशेषेणऊर्ध्वं नीतः अथ नायिकया कूजितं पीडाव्यञ्जकः शब्दविशेषः कृत इत्यर्थः अथ नायकेनाक्षि लोचनमामीलितं मुद्रितं सुखाविर्भावादितिभाव; अथ नायिकया मौलिः शिरोभागः दोलितः परित्यजेतिव्यञ्जकक्रियाशालीकृतःत्यर्थस्तथाच स्पर्शाभावेऽपि नैतादृशी क्रिया दृढ़स्नेहं विनेति भावः ॥६२॥

अतिरभसेन भुजोऽयं वृत्तिविवरेणप्रवेशितः सदनम् ॥
दयितास्पर्शोल्लसितो नागच्छति वर्त्मना तेन ॥६३॥

कस्यापि हास्यकरं वृत्तं कश्चिद्वदति, अतीति अयं प्रत्यक्षः भुजः अनेन प्रातः कालपर्य्यन्तं बद्ध एव तिष्ठतीति उपहासः अतिरभसेनात्युत्कण्ठया वृत्तिविवरेणभित्तिछिद्रेणालेन सङ्कीर्णत्वं वर्धयितुमशक्यञ्चश्च व्यज्यते सदनमेकशय्यास्थितस्त्रीपुंसयुक्तं भित्तिसमीपे नायिका परभागे नायकः प्रवेशितः महता श्रमेण प्रवेशितः दयितास्पर्शेन स्तनादिदेशे स्पर्शेन उल्लसितः पुष्टस्तेन वृत्तिविवरेण वर्त्मना मार्गेण नागच्छति आकृष्टो नायातीत्यर्थः उत्कण्ठावशात् स्तनं न त्यजति येन पुष्टिहानिरपि स्यादिति भावः अथवा दूती नायिकां वदति भुजोऽयं भुजवत् सरलोऽयमित्यर्थः चातुर्य्यरहितत्वादितिभावः मया अत्युत्कण्ठया वृत्तिविवरेणगुप्तेन केनचित् मार्गेण सदनं नायकशून्यं रतगृहं प्रवेशितः त्वल्लक्षणदयितालिङ्गनेनोल्लसितस्तेन वर्त्मना नागच्छति किन्तु नायकागममार्गेण निर्गच्छति माञ्च तत्रैव परित्यजतीति किमस्याचातुर्य्यं वक्तव्यं कदाचित्तुप निमिलनेनार्यो भविष्यतीति भावः अथ भुजः भोगकर्त्तुस्तवपत्युः वर्त्मना आगच्छति न तेन वृत्तिविवरेणेति योज्यं विस्तरभिया पक्षान्तरं न लिख्यते ॥६३॥

अम्बरमध्यनिविष्टं तवेदमतिचपलमलघुजघनतटम् ॥
चातक इव नवमभ्रं निरीक्षमाणो न तृप्यामि ॥६४॥

काञ्चिन्नायिकामितस्ततश्चलन्तीं सकामां दृष्ट्वा हतैकनारीव्रतसङ्कल्पो नायक आह अम्बरेतिअम्बरमध्ये सूक्ष्मवस्त्रमध्ये निविष्टं रुद्धमनेनदर्शनयोग्यता व्यज्यते

पक्षे आकाशे लग्नं तवेदं प्रत्यक्षमतिचपलं कामाविर्भावादितिभावःपक्षे अत्यर्थं चपला सौदामिनी यत्र तदित्यर्थः अलघुमहदित्यर्थः पक्षे न वर्त्तते लघु यस्मादतिलघ्वित्यर्थः उड्डीयमानत्वादितिभावः नवमभिनवं मेघं चातक इव पक्षिविशेष इव निरीक्षमाणः पश्यन्नहं न तृप्यामि नायिकान्तर संभोगपरित्यागं कृतीतिकिंकरोमीतिभावः ॥ ६४ ॥

**अलमन्धकारसिन्धुरभाराक्रान्तावनीभराक्रान्तः ॥**
**उन्नतपूर्वाद्रिमुखः कूर्मः सन्ध्यास्त्रमुद्वमति ॥६५॥**

सुरतासक्तयोर्नायकयोरत्यन्तनिविड़तलस्थयोरुपपतिविसर्ज्जनार्थं प्रातःकालज्ञापनं वहिःस्थिता सखी नायिकां वदति अलमिति अन्धकाररूपगजभराक्रान्ता या अवनी पृथिवी तस्या भारेण क्रान्तः पिड़ित उन्नतं पूर्वाद्रिरूपमुदयाचलरूपं सुखं येन स पृथ्वीतलस्थितः कूर्मः प्रातःसन्ध्यारूपमस्रं रुधिरमलमुद्वमति अन्योऽपि भाराक्रान्तोऽतिपीडितः सुखोत्थापनं कृत्वा रुधिरं वमति इति लौकिकं यद्वा प्रातःकालगोपनार्थं पुनस्सुरतार्थिनी नायिका नायकमाह नायं सन्ध्याकालः किन्तु कूर्ममुखरुधिरमिति भावः ॥६५॥

**अन्तर्भूतो निवसति जड़े जड़ः शिशिरमहसि हरिण इव ॥**
**अजड़े शशीव तपने सतु प्रविष्टोऽपि निःसरति ॥६६॥**

समानशीलयोरेव मैत्री चिरस्थायिनी असमानशीलयोर्द्वयाज्ञातापि न चिरस्थायिनीत्याह कश्चित् अन्तरिति जडे मूर्खे जड़ः मूर्खः जड़ः रसः जलरूप इत्यर्थः शिशिरमहसि शीतस्वरुपतेजसि चन्द्रे हरिण इव पशुविशेषइवेत्यर्थः अन्तर्भूतः एकव्यापारः पक्षे भिन्नत्वेनाज्ञातस्तथाच चन्द्रहरिणयोरुभयोरेव पशुत्वमतएव सख्यं तयोरिति भावः अजडे पण्डिते स जड़ः प्रविष्टोपि सम्पादितमैत्र्योऽपि निःसरति विभिन्नव्यापारो भवतीत्यर्थः पक्षे जलभिन्ने स जड़ः जड़रूपं शरीरादिसंलग्नं निस्सरति जलमित्यर्थः कस्मिन् क इव तपने सूर्य्ये शशीव यथा कुहू सूर्य्यमण्डले चन्द्रः प्रविशति पुनस्तत्र स्थातुं न शक्नोति निस्सरत्येवेति भावः कुहूः सूर्य्येन्दुसङ्गम इत्यमरः ॥६६॥

**अगणितजनापवादा त्वत्पाणिस्पर्शहर्षतरलेयम् ॥**
**आयास्यतो वराकी ज्वरस्य तल्पं प्रकल्पयति ॥६७॥**

नायिकास्पर्शलोभेनाहमपि नाड़ीपरिक्षां जानामीत्युक्ता ज्वरितायाः

कस्याश्चिद्धस्तस्पर्शं कृतवान् कश्चिन्नायकः तं नायकं तेनैवप्रकारेण तव पुनर्द्दर्शनं हस्तस्पर्शश्च नायिकाभिमेत इति दूत्याह अगणितेति इयं मम सखी अगणितः श्रुतोऽपि अश्रुतः कृतः जनानामपवादो निन्दावाक्यं यया सेत्यर्थः त्वदीयो यः हस्तस्पर्शस्तेन य आनन्दस्तेन चञ्चलेत्यर्थस्तथाच स्पर्शार्थमपि जनापवादमङ्गीकरोति संगमे किं किं न करिष्यति इति भावः वराकी पराधीनत्वाभावेऽपि तवादर्शनेन खिन्नेत्यर्थः अनेनानुग्राह्यत्वं व्यज्यते आयास्यतः नत्वागतस्य ज्वरस्य तल्पं शय्यां प्रकल्पयति आगते ज्वरे नाड़ीदर्शनप्रयोजनाभावादिति भावस्तथाच मम सखी त्वय्यासक्ता सर्वात्मनेति वाक्यार्थः ॥६७॥

अप्येकवंशजनुषोः पश्यत पूर्णत्वतुच्छताभाजोः ॥
ज्याकार्मुकयोः कश्चिद्गुणभूतः कश्चिदपि भर्त्ता ॥६८॥

निर्धनस्य समानशीलस्य स्वमपि दुर्लभमित्याह अप्येकेति एकः वंशः वेणुः पक्षे कुलं तस्मिन् जनुर्ज्जन्म ययोस्तयोर्ज्याधनुषोः गुणः वंशत्वक् कार्म्मुकं वंशधनुस्तयोरित्यर्थः ज्याशब्दस्याल्पाच्तरत्वात् स्त्रीरूपत्वाद्वापूर्वनिपातो नतु प्राधान्यात् कार्म्मुकस्यैव प्रधानत्वात् अतएव तुच्छत्वभाक्ज्या पूर्णत्वभाक्कार्म्मुकं पक्षे तुच्छत्वं दारिद्र्यं पूर्णत्वं धनसम्पत्तिः हे जना यूयं पश्यत ज्याकार्मुकयोर्म्मध्ये कश्चित्पदार्थः ज्यारूपः गुणभूतस्तन्त्रीस्थानापन्नः पक्षे अप्रधानीभूतः समृद्धस्यान्यपराधीन इत्यर्थः कश्चिदपि कार्मुकरूपः भर्त्ता धारणकर्त्ता पक्षे पोषकस्तथाचैकवंशजयोस्सदोषगुणयोरपि दारिद्र्यसमृद्धियोगेन व्याप्यव्यापकभाव इति तस्माद्धनमवश्यमुपार्ज्जनीयमित्याखण्डलार्थः यद्वा समृद्धानेकाश्रमस्थानसमभोगिनोऽन्योऽन्यं प्राधान्यमिच्छतः स्वाश्रमविघ्नापकान् दृष्ट्वा कश्चित्सज्जन उपदिशति हेसमभोगिनः जनाः पश्यत ज्याकार्म्मुकयोस्त्वेतनयोरपि गुणप्रधानभावः यथा तथा भवतां समानानामपि एकस्य प्राधान्येऽन्येषां तद्व्याप्यतयावस्थाने सकलाभिमतसिद्धिरन्यथा सर्वस्वनाशः उपहासश्च लोके भविष्यतीति भावः प्राधान्यमिच्छतीस्सपत्नीर्दृष्ट्वा वदतीत्यपि कश्चित् ॥६८॥

अभिनवकेलिक्लान्ता कलयति बाला श्रमेण घर्म्माम्भः ॥
ज्यामर्प्पयितुं नमिता कुसुमास्त्रधनुर्ल्लतेव बधूः ॥६९॥

काश्चित्प्राप्तयौवनामप्यनभ्यस्तसुरतां कुतश्चिदागत्य पतिकृतप्रथमरतिपीड़ितां सखीं ज्ञात्वा रतान्ते नायकमाह अभिनवेति बाला मुग्धा घर्म्माम्भः घर्म्म-

जलविन्दुं कलयति उत्पादयति दर्शयति वा केन क्लेशेन श्रमेण ननु सविकारितया तथाच घर्मजलं दृष्ट्वा सात्त्विकविकारभ्रमेण पुनस्सम्भूति सुरतं न कर्त्तव्यं त्वयेति भावः एतदर्थमेव क्लान्तेत्युक्त्वा पुनः क्लेशेनेत्युक्तम् अतो न पौनरुक्त्यं क्लेशेन क्लान्ता क्लान्तवदना विवर्णवदनेतिवा योऽयं कश्चित्क्रमेणेतिपाठः तत्र क्रमेण सुरतान्तक्रमेण तथाचपूर्वं न जातमुत्तरत्र जातं घर्म्मतेनेदं ज्ञायते विकारकृतं नभवति किन्तु क्लान्तिकृतमेवेतिभावः किंभूता अभिनवः प्राथमिको यः केलिस्तेन क्लान्ता विवर्णेतियावत् नवरतिप्रीततया विलक्षणसौन्दर्य्यवतीत्यर्थः केव कुसुमास्त्रस्य कन्दर्पस्य धनुर्लता पुष्पनिर्मितचापलता कुसुमास्त्रत्वकथनं पौष्पधनुस्सम्पादनार्थमेव यथा पुष्परसं कल्यतीत्यर्थः किंभूता चापलता ज्यां गुणमर्पयितुं प्रथमतो दातुं नामिता नम्रीकृता तथाचावश्यमेव क्लान्तेयं क्रमेणाधिक्यविधानं कर्त्तव्यं त्वयेतिभावः प्रौढाभिप्रायेण कथन कल्पनेन मनोरममभिनवक्लान्तक्लेशेनेत्यादेरनौचित्यापत्तेः ॥६९॥

अविरतपतिताश्रु वपुः पाण्डुस्निग्धं तवोपनीतमिदम् ॥
शतधौतमाज्यमिव मे स्मरशरदाहव्यथां हरति ॥७०॥

कश्चिद्विगाद्देशान्तरादागत्य विरहखिन्नां नायिकां वदति अविरतेति तव वपुः शरीरं मे मम स्मरशरस्यदाहव्यथां मदनवाणपीड़ां त्वद्वियोगसमयजां हरति दूरीकरोति किंभूतं वपुः अविरतमनवरतं पतितमश्रु नयनवारि यत्र तदित्यर्थः पक्षे अश्रुतुल्यं जलमविरतपतितं यस्मादित्यर्थः पाण्डु विरहात् पक्षे पाण्डुरूपत्वं स्वभावात् स्निग्धं मम स्नेहाश्रितमित्यर्थः पक्षे स्नेहो गुणविशेषः तच्छालीत्यर्थः तव विरहिण्याः उपनीतं समीपवर्त्ति पक्षे चिकित्सकानीतं शतधौतं वारम्बारं प्रक्षालितं पक्षे शतसङ्ख्यकपर्य्युषितजलक्षालित मितिवैद्यकसमाचारः आज्यमिव घृतमिवेत्यर्थः तथाच यथा शतधौतमाज्यं जीर्णज्वरस्य नाशकं तथा तवोपनीतमिदं वपुः कन्दर्पदाहं नकेवलंसुरतेनैवहरति किन्तु मम विरहेऽस्या इयमवस्थातो मय्येवानन्यभावेनानुरक्तेयमिति ज्ञानेन सर्वानुतापान् विनाश्याङ्गस्पर्शमात्रेणेतिभावः ॥७०॥

अन्तर्निपतितगुञ्जागुणरमणीयश्चकास्तिकेदारः ॥
निजगोपीविनयव्ययखेदेनविदीर्णहृदयइव ॥७१॥

सकलगोपीसङ्केतस्थलमिदमेवेत्याहकश्चित्कश्चित् अन्तरिति यद्वाकाचित्कथं खिन्नासीतिकयाचिदाप्तयापृष्टा स्वस्वामिनीकर्मणाखिन्नास्मीति अन्योक्त्यावदति

अभ्यन्तरेनिपतितगुञ्जासमूहेनसुन्दरः शस्यदेशः शोभते कइवविदीर्णहृदयइवकेन-निजायागोपीरक्षणकर्त्रीतस्यायोविनयव्ययः शीलनाशः औपपत्यमितियावत् तज्जनितदुःखेनेत्यर्थः अन्यस्यापिरक्षकदुश्चेष्टितं दृष्ट्वाहृदयंविदीर्णंभवत्येव तथा चावेतनस्यापीयमवस्थामया किंकर्त्तव्यमितिभावः ॥७१॥

**अमुना हतमिदमिदमिति रुदती प्रतिवेशिनेऽङ्गमङ्गमियम् ॥**
**रोषमिषदलितलज्जा गृहिणी दर्शयति पतिपुरतः ॥७२॥**

साहसिकाः स्त्रियः सर्वथा लज्जाभयादिकं तासां काल्पनिकमेव तस्मात्त-दनुकूलमेवकर्त्तव्यमथवा परित्याज्या एव सज्जनैस्तद्रक्षाऽशक्यैवेत्याह कश्चित् अमुनेति इयं पतिसमक्षं प्रतिवेशिवेशिने अङ्गमङ्गं गोप्यमपिसर्वाङ्गमित्यर्थः दर्शयति गृहिणी गृहभावशालिन्यपि इदमिदममुना पत्या हतं ताडितमनेन प्रकारेण रुदतीत्यर्थः रोषच्छलेन दलिता नाशिता लज्जा यया वस्तुतः गतलज्जेत्यर्थः तथाच प्रतिवेश्यनुरक्ता त्वमिति ताडिता यद्येवं तर्हि तवा-ध्यक्ष एव मया नग्नया प्रतिवेशिनिकटे स्थित्वा तव परित्यागंप्रयिवेशिसंग्रहं करोमीति निगद्य कृतवतीति भावः ॥७२॥

इति महोपाध्यायश्रीसचलविरचिते रसप्रदीपे गोवर्धनाचार्य्यकृतसप्तशती-व्याख्यानरूपे अकारव्रज्या समाप्ता ॥ ॥*॥ ॥*॥

**आन्तरमपि बहिरिवहिव्यञ्जयितुं रसमशेषतः सततम् ॥**
**असती सत्कविसूक्तिः काचघटी च त्रयं वेद ॥७३॥**

धीरा नायिका त्वं मयि स्नेहप्रकाशन्नकरोषीति नायकेनोक्ता आह आन्तर-मिति आन्तरमपि अन्तर्निलीनमपि अनेन स्वव्यापारं विना अस्यावेद्यत्वं सूच्यते बहिरिवबहिर्भवन्तमिव, हि,: निश्चयेनाशेषतः सर्वतः रसं शृङ्गारं शृङ्गारादि नवरसं शृङ्गारादिकमित्यर्थः असती पुंश्चली समीचीनकवेः काव्यं काचकलसीचैतत्त्रयमन्तर्गतरसं बहिर्भवन्तमिव प्रकाशयितुं वेद जानातीति अहं नासती नवा सत्कविता नवा काचघटीस्वरुपातोनुरागो न बहिर्भवतीति कृत्वैव स्नेहहीनेति ज्ञायते इति नायिकाशयः यद्वा स्वकीयानुरागो भूमिसम-र्पितप्रचुरद्रव्यमिव सुखदोऽपि न सर्वदा सुखकारी नवा सार्वजनी नसुखकारी असत्यनुराग एव हि तथेति कश्चित् कश्चिद्विटो वक्ति असती आन्तरं मनः अशेषतः सर्वकलापरिपूर्णं शृङ्गारमिव शब्द एवार्थे.

बहिरपि बहिःस्थितानि विकाराधायकराङ्गमूलनाभिप्रदेशादीनि च एतत्त्रयं व्यञ्जयितुं सर्वदा जानात्येवेत्यर्थः सत्कविसूक्तिरपि आन्तरं वाच्यं बहिः शब्दालङ्कारं रसंनवरसञ्चैतत् त्रितयं व्यञ्जयितुं वेदेत्यर्थः काचघटीचान्तरमभ्यन्तरपाचितं बहिःप्रतिविम्बितं रसंसुरादिद्रव्यद्रव्यञ्चैतत् त्रितयं व्यञ्जयितुं वेदेत्यर्थः तथास्वकीया नैकमपि सम्यक् जानाति परकीया त्रितयमपि इति परकीयानुराग एव श्रेयानित्याशयः यद्वा केनापि द्वारेण स्वनायकानुरागोऽस्या न ज्ञायतेऽतः पतिद्वेषिणी मदधीनाऽवश्यमियं भविष्यतीति वादिनं नायकं प्रति पतिव्रतेयं सलज्जाऽसतीस्वभावविद्वेषिणी त्वन्तु स्वभावं न जानासि कथमपीयं नाधीना भविष्यतीत्याह ॥७३॥

आलोक एव विमुखी क्वचिदपि दिवसे न दक्षिणा भवसि ॥
छायेव तदपि तापं त्वमेव मे हरसि मानवति ॥७४॥

कोपनां प्रति नायको दैन्यमाह आलोकइति आलोके अवलोकने एव विमुखी पराङ्मुखी एवशब्देन किमुत चुम्बनालिङ्गनादावित्यर्थः पक्षे तेजसि विमुखी विरुद्धदिग्गामिनी एवेत्यर्थः क्वचिदपि कस्मिँश्चिद्दिने दक्षिणा अनुकूला न भवसीत्यर्थः पक्षे दिवसे दिने क्वचिदपि कुत्रापि दक्षिणा दक्षिणदिग्गामिनी नेत्यर्थः सूर्य्यच्छायायास्तुदक्षिणां दिशं विहाय सर्वत्रगमनादितिभावः इति यद्यपि तथापि तापं कामबाणपीडां विमुखी दृष्टापि रहसि मे पक्षे सन्तापं छायेव सूर्य्यच्छायेव मानवति चण्डीतिवक्तव्ये भीत्या मानवतीतिकथनं तथाचानन्यशरणोऽहमवश्यमनुग्राह्य इति भावः ॥७४॥

आज्ञा काकुर्याच्ञाक्षेपो हसितञ्च शुष्करुदितञ्च ॥
इति निधुवनपाण्डित्यं ध्यायँस्तरया न तृप्यामि ॥७५॥

प्रोषितः कश्चित्सखायं प्रति वदति आज्ञेति आज्ञा मम व्याप्योऽसीति सूचकं वचनं प्रथमं मयि बलात्कारालिङ्गनकारिणि सति पुनः काकुरेतादृशं वचनं मया कदापि न वक्तव्यमति दीनं वचनमित्यर्थः धीरत्वमवलम्बिते मयि याच्ञा क्षमस्वेति याच्ञा इदं देहीतिवा कोऽयमवसरः क्षमाया दानस्य वेति मयि वदति पुनराक्षेप इति पूर्वोक्तं कथमुक्तं त्वयेति बहिःकोपपूर्वकं वचनमाक्षेपः उदासीने मयि पुनः हसितमेतावदेवसामर्थ्यं बहिःकोपेनैवान्तर्गतं न बुद्धमिति भावः पुनरत्यन्तप्रौढिमालम्बिते मयि शुष्कमश्रुशून्यम् स्वरविशेषमात्रेण नतु पीड़या रुदितम् त्वं समर्थोऽसि अहमसमर्था किं करोमि यद्यदि-

च्छसि तत्तत्कुर्विति बहिःप्रदर्शनं न वास्तव्यमित्यर्थः तस्या नायिकाया इति पूर्वोक्तं निधुवने सुरते पाण्डित्यं कामशास्त्रादप्यधिकसमीचीनाध्यापकत्वं ध्यायन् पूर्वानुभूतं चिन्तयन् विदेशस्थितत्वात् न तृप्यामि न तृप्तोभवामीत्यर्थः तथाच ध्यानसमयेऽपि न तृप्तिः सुरतसमयेऽतृप्तिरुचितैव तेन सर्वेपि कालोनया दिशा सुखशालिना मम गतः सम्प्रतीयं वियोगावस्था दुर्द्दैवादिति भावः ।७५।

**आज्ञापयिष्यसि पदं दास्यसि दयितस्य शिरसि किं त्वरसे ॥**
**असमयमानिनि मुग्धे मा कुरु भग्नाङ्कुरं प्रेम ॥७६॥**

कयापि दुष्टया पतिविद्वेषार्थं सम्यक् मानस्तदाकर्त्तव्य इतिशिक्षिता काचिन्मुग्धा तथाऽकरोत्तं हितैषिणी काचिदन्याह आज्ञापयिष्यसीति दयितमाज्ञापयिष्यसि दयितस्य मस्तके पदं दास्यसि त्वरां किं कुरुषे, असमये प्रियदर्शने मानिनि अतएव मुग्धे मूढे अङ्कुरःअङ्कुरोत्पत्त्यारम्भः भग्नो यस्य तत्प्रेम हार्द्दं न कुर्व्वित्यर्थः तथाचाज्ञाकारी प्रियो जात इति बुद्ध्या मानः क्रियते विदग्धया परन्तु सर्वमेतद्दृढप्रेममूलम् तदभावे न किञ्चिदिति सर्वात्मना मुग्धया पतिप्रेम सम्पादनीयं तत्तु पतिमनोभिलषिताखिलपदार्थसम्पादनेन भवतीति भावः ॥७६॥

**आसाद्य भङ्गमनया द्यूते विहिताभिरुचितकेलिपणे ॥**
**निःसारयताक्षानिति कपटरुषोत्सारिताः सख्यः ॥७७॥**

मदीयं सौभाग्यमसदृशमिति सखायं प्रति कश्चित् वदति आसाद्येति अनया मम प्रियया द्यूते चतुरङ्गादीक्रीड़नरूपे क्रीड़ने, विहितः कृतः अभिरुचितः इच्छाविषयः विपरीतादिकमः केलिः सुरतं पणः पराजयदण्डो यत्र तस्मिन्नित्यर्थः पराजितेन जयशालिने इच्छाविषयं सुरतं तस्मै देयमिति व्यवस्थया कृते द्यूते इति भावः भङ्गं पराजयमनया प्राप्येत्यर्थः आसाद्येत्यनेन भङ्गोऽपि स्वेच्छयैवेति ध्वन्यते । अक्षान्पाशकान् हे सख्यः निःसारयत दूरीकुरुत नैते पराजयकारिणः क्रीड़नयोग्या इतिकपटरुषा काल्पनिकक्रोधेन सख्यः नतु पाशका उत्सारिता बहिःकृता इत्यर्थः तथाच पराजये जाते पुनर्न्न क्रीड़ा कृता स्वस्य जये नायिकाभिप्रेतकेलिर्न्न स्यात् इत्याशङ्कया भङ्गमासाद्य सख्य-उत्सारिताः सम्पादितश्च विपरीतसुरतं ममाभिलषितमिति तदनुरागो मयि यथा तथा नान्यत्र कयोरपि नैतादृशीवान्या विदग्धा नायिकेति सकलपरकीयामौलिभूतेयमहमपि महासौभाग्यशालीति भावः ॥७७॥

आदरणीयगुणा सखि महता निहितासि तेन शिरसि त्वम्॥
तव लाघवदोषोऽयं सौधपताकेव यच्चलसि ॥७८॥

काञ्चिन्निर्लज्जत्वमात्रेणोदासीनकान्तां सख्युपदिशति आदरणीयेति आदरणीयोः आद्दताः गुणाः सौन्दर्य्यादयो यस्याः सेत्यर्थः पक्षे आदरणीयाः पट्टनिर्मिताः गुणा रज्जवो यस्याः सेत्यर्थः महता सकलगुणयुतेन नायकेनेत्यर्थः पक्षे मान्येन राजसद्मनस्य सकलमान्यत्वादितिभावः शिरसि निहिता सम्यक् समादृत्य स्थापिता पक्षे उपरि भागे रोपिता हेसखि एवमसीत्यर्थः तव तवैव लाघवदोषः केलिसङ्कोचतादोषः दोषपदेनावश्यत्याज्यत्वं ध्वन्यते यत्राजसदनध्वजेव चलसि यथा अत्युच्चराजसदनपताका उच्चस्थायित्वेन सर्वदृश्या स्वल्पेनापि वायुना यदृच्छया स्पृष्टा वस्त्रास्फालनेन चपलेतिलोकैर्ज्ञायते एवमेव समीचीनापि त्वं पामरादिदर्शनेनावृतस्थलस्थावस्त्रास्फालनं विदधती लोकेन चपलेति ज्ञायसेऽतः उदासीनस्तवपतिरिति त्यजैतत्सर्वमितिभावः ॥७८॥

आर्द्रमपि स्तनजघनान्निरस्य सुतनु त्वयैतदुन्मुक्तम्॥
स्वस्थमवाप्तुमिव त्वां तपनांशूनंशुकं पिबति ॥७९॥

स्नानोत्तीर्णान्नायिकां सखीपरिवृता मपेक्षितजयाघासक्तसरित्तीरान्तरस्थना-यकदूती अन्योक्त्याहार्द्रमिति एतत् जानुदेशे प्रत्यक्षं पक्षे तीरान्तरेप्रत्यक्षः अंशुकं वस्त्रं पक्षे तपःकृशशरीरो नायकः वस्त्रतुल्यस्तपनस्य सूर्य्यस्यांशून्किरणानपि अतिमहत इत्यर्थः तपनपदेन दुःसहत्वं तपःसम्पादकत्वं परित्याग पियासेनोचितमित्यपिना सूच्यते, त्वया नायिकया उन्मुक्तमुन्मोचितं परित्यक्तः स्तनजघनात् निरस्य दूरीकृत्यालिङ्गनसंभोगात् निरस्य पुनरनङ्गीकृत्य स्वस्थं जानुलग्नं निरवलम्बः त्वन्नायिकांप्राप्तमिवतथाचयथेदंवस्त्रंत्वयापरित्यक्तमपि जानुलग्नंतवप्राप्त्यर्थन्तपःकरोतिअचेतनमपितथापश्यतीवान्तरस्थोयंशृङ्गार्यपिसूर्य्यकिरणसहिष्णुः अन्यावलम्बनशून्यः त्वत्प्राप्त्यर्थं क्लिश्यति तेन त्वयाऽवश्यमनुग्रहः क्रियतामस्मिन्निति भावः ॥७९॥

आरोपिता शिलायामश्मेवत्वं स्थिरा भवेति मन्त्रेण॥
मयापि परिणयापदि जारमुखं वीक्ष्य हसितैव ॥८०॥

कस्याश्चिदधमकन्यायाश्चेष्टां परिणयं दृष्ट्वागता काचित् स्वगृहे वदति आरोपितेति अश्मेवत्वं स्थिराभवेति मन्त्रेण शिलायां पुरःस्थितायामारोपिता नत्वारूढ़ा स्थैर्य्यभयादिति भावः परिणये विवाहे आपदि विपदि आपत्पदेन परमप्रयत्नेन सम्पादितजाररूपसम्पत्तिविनाशकत्वेन ज्ञानमावेदितं मयापि को वेद अनेन मन्त्रप्रभावेण किं स्थिरता यातीति चिन्तितापीत्यर्थः आपदिमग्नस्य हास्यं विरुद्धमिति विरोधोऽपेरर्थः जारमुखमुपपतिमुखं वीक्ष्यैव हसिता तथाच मूर्खा एते निष्फलं मन्त्रं पाठयन्तिच पश्याधुनैव मया तव मुखावलोकनेनास्थैर्य्यं क्रियते त्वया चिन्ता न कर्त्तव्या पूर्ववत्त्वमेवमे पतिरितिभावः ॥८०॥

**आयाति याति खेदं करोति मधु हरति मधुकरीवान्या ॥**
**अधिदेवता त्वमेव श्रीरिव कमलस्य मम मनसः ॥८१॥**

अन्यनायिकालापपरं नायकं दृष्ट्वा खिन्नां नायिकां नायक आह आयातीति आयाति याति गमनागमनं करोति नत्वत्रतिष्ठतीत्यर्थः अनेन संभोगाभावः सूचितः खेदं दुःखं करोति किमर्थमायातीतिखेदः मधु मिष्टं द्रव्यादि हरति गृह्णाति भ्रमरी यथा आयाति याति कमलमधुहरणेन खेदमपि करोति एवञ्च मम चित्तं नासक्तं सापरमयातीत्यर्थः । हृदयस्याधिदेवता चन्द्रस्वरूपा देवता त्वमेव नान्या कमलस्य पद्मस्य श्रीर्लक्ष्मीरिवेत्यर्थः ॥८१॥

**आसाद्य दक्षिणां दिशमविलम्बं त्यजति चोत्तरां तरणिः ॥**
**पुरुषं हरन्ति कान्ताः प्रायेण हि दक्षिणा एव ॥८२॥**

रम्यं विना नायकस्याधीनो न भवतीति सखी नायिकामुपदिशति आसाद्येति दक्षिणां याम्यां दिशमासाद्य प्राप्य कर्कादिधनुष्पर्य्यन्तं दक्षिणातरणि सूर्य्यः अविलम्बं शीघ्रं त्यजति विलङ्घ्य गच्छति इत्यर्थः शीघ्रं गमनं दक्षिणालये भवत्यतोऽविलम्बेन त्यागः उत्तरामदक्षिणां दक्षिणाभिन्नामित्यर्थः अविलम्बंन त्यजतीत्यर्थः उत्तरायणे मकरादिमिथुनान्ते दिनस्य महत्वं सूर्य्यमन्दगत्या भवतीति विलम्बेन त्यागः तथाचात्यन्तप्रतापशाली विदग्धः सूर्य्योऽपि दक्षिणे सन्निधानमल्पं करोति अदक्षिणासन्निधानं बहुधेति भावः अमुमेवार्थं सामान्यतो नायकनायिकावृत्तान्तकथनेनाह पुरुषं नायकं हरन्ति स्वाधीनं कुर्वन्ति कान्ता स्त्रियः ननुविशेषा सामान्यताभङ्गप्रसङ्गात् प्रायेण बाहुल्येन दक्षिणा एव वामा

पत्रेत्यर्थः ननु अचतुराः दिशान्तदभावात् चातुर्व्वर्णिआयामनुपयोगाच्च तथाच त्वया नायके सर्वदा ऋजुता न कर्त्तव्या किन्तु वक्रतापि तथैव नायकः स्वाधीनो भवति नान्यथेति भावः ॥८२॥

**आदानपानलेपैः काश्चिद्गरलोपतापहारिण्यः ॥**
**सदसि स्थितैव सिद्धौषधिवल्ली कापि जीवयति ॥८३॥**

कश्चिदन्योक्तया कश्चिन्नायिकां स्तौति आदानेति आदानेन ग्रहणेन पानेन लेपैः शरीरादिलेपैः काश्चिदोषधयः गरलस्य विषस्योपतापः ज्वालारूपस्तं हरन्ति सामान्यत ओषधीस्वभावोऽयं ग्रहणोत्पादनपानलेपं विना न दोषहरणसामर्थ्यमिति कापि अनिर्वचनीया औत्पत्तिं कसिद्धियुतौषधीलता सदसि सभायां स्थितैव नत्वादत्ता पीता लेपिता वेत्यर्थः । जीवयति मृतमपि जीवयतीत्यर्थः अथच काश्चिन्नायिकाः आलिङ्गनादिनाकामज्वरहारिण्यः कापीयं सभास्थितापि एकान्तदानस्वभावेऽपि दर्शनमात्रेणैव सर्वसुखसम्पादिका किमु वाच्यं संभोगे सति इति सर्वोत्कृष्टेयमितिभावः ॥८३॥

**आन्दोललोलकेशीश्चलकाञ्चीकिङ्किणीगणक्वणिताम् ॥**
**स्मरसि पुरुषायितां तां स्मरचामरचिह्नयष्टिमिव ॥८४॥**

कुत्सितानायिकासक्तं नायकं प्रति पूर्वनायिकासखी तव कौटिल्यं मया ज्ञातमित्याह आन्दोलेति तां सकलनायिकोत्कृष्टां मम सखीं स्मरसि स्मृतिविषयं करोषि काक्वा नेत्यर्थः यदि तस्याः स्मरणमपि भवेत्तदा कथमनयातिनिन्दितया संगतिः स्यादिति मया ज्ञातोऽसीतिभावः विभूतां पुरुषायितां त्वदभिप्रायमात्रेण विपरीतरतासक्तामित्यर्थः सा त्वदाज्ञामात्रकारिणी कुशलाच इयन्तु अनुक्रमरतमपि न जानाति नवा तवाज्ञाकारिणी तिभावः । कामिनः स्मरस्य कन्दर्पस्य चामरचिह्नोऽस्यां चामरेणचिह्नमन्यवैलक्षण्यसूचनंयस्याःसुवर्णमययष्टिः-सास्मरचामरचिह्नयष्टिस्तामिवेत्यर्थः तथाच यथा चामरयष्ट्या राजेति ज्ञायते तथा त्वं मदनइत्यनया यष्टिरूपयास्माभिर्ज्ञायसे सर्वासामेव नायिकानां स्पृहणीयता तदासीदिदानीं न किमपि इति नायिकां यष्टिञ्च विशेषयति आन्दोलेन विपरीतव्यापारेण लोलाः पृष्ठभागे पुनःपुनः स्पृशन्तः केशाः शिरोरुहा मुक्तबन्धा यस्यास्तामित्यर्थः पक्षे आन्दोलेन यष्टिधारकसञ्चारेण चञ्चलाः केशाः वालरूपाः यस्यास्तामित्यर्थः चलन्ती या काञ्ची किङ्कणी रसना क्षुद्रघण्टिका तत्समूहस्य

क्वणितं शब्दितं यस्यास्तामित्यर्थः काञ्चीशब्देन स्त्रीकट्यलङ्करणमात्रवाचकेन क्षुद्रघण्टिकाशून्यस्याभिधानादतः किङ्किणीपदं काञ्ची किङ्कणी च भिन्नाभिन्ना-लङ्करणद्वयवाचिकेति कश्चित् पक्षे कञ्चीतुल्येन क्षुद्रघण्टिकागणेन शब्दितां सौन्दर्य्यार्थमित्याशयः स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथेति किङ्किणी क्षुद्रघण्टिकेति चामरः ८४

आक्षिपसि कर्णमक्ष्णा त्रिधैव बद्धो बलिस्त्वया मध्ये ॥
इति जितसकलवदान्ये तनुदाने लज्जसे तन्वि ॥ ८५ ॥

सुरतारम्भलज्जितां नायिकां नायक आह आक्षिपसीति कर्णं कुन्तीपुत्रं श्रवणञ्च अक्ष्णा नेत्रेण आक्षिपसि तिरस्कृतिं करोषि किन्तव दातृत्वमिति-भावः स्पृशसिच त्वया बलिर्दैत्यविशेषः त्रिवलीच त्रिधा वारत्रयं त्रिप्रका-रेणच बद्धएव त्रिधेत्यनेनात्यन्तनिर्जितत्वं बलेः कथ्यते इति अनेन प्रकारेण जिताः सकला वदान्या महादानकर्त्तारो यया तत्संबोधिनं हे सुतनु तनुदाने अल्पदाने शरीरदाने च लज्जसे यत् तत्किमिति सर्वदेनाल्पमपि दीयत एवं अथच वदान्यस्य शरीरदानमपि सुकरमेव अल्पं किन्देयमिति यत् लज्जसे तदुचितमे-वेत्यादिभावः अथवा अतनुदाने महादाने शरीरापेक्षया नान्यं महदित्यर्थः अथवा अतनुदाने कन्दर्प्पखण्डने दानं खण्डनमिति काव्यप्रकाशटीका वस्तुनोऽतनुदाने कामार्थदाने लज्जसे वदान्येन मोक्षार्थमेव दीयते मया काममुद्दिश्य दीयते इति लज्जा यद्यपि युक्ता तथापि मम प्रतिग्रहीतुर्म्मोक्ष-सुखदानेन मोक्षो भविष्यत्येव तवापीति भावः ॥ ८५ ॥

आक्षेपचरणलङ्घनकेशग्रहकेलिकुतुकतरलेन ॥
स्त्रीणां पतिरपि गुरुरिति धर्मं न श्राविता सुतनुः ॥८६॥

नायिकानिरस्कृतमुदासीनं नायकं प्रति पुनः सन्धानार्थं दूती कस्यचि-द्वृत्तमाह आक्षेपेति आक्षेप स्तिरस्कारः मत्समीपे न स्थेयमित्यादि चरणल-ङ्घनं पादप्रहारः केशग्रहः शिखादिग्रहः एतेषु यत् केलिकुतुकं परिहासः कुतूहलं तेन तरलेन लोलुपेन नायकेन स्त्रीणां पतिः पाणिग्राहकः गुरुः इतिधर्म्ममपि पुराणकथनादिसमुपागतधर्म्ममपीत्यर्थः सुतनुः न श्राविता धर्म्म-श्रवणवती न कारितेत्यर्थः श्रुत्वा न करिष्यति मम कथं पुनरीदृशं सौ-भाग्यमिति प्रियेत्यभिप्रायः तथाच स्वाधीनाप्रामपि नायिकायां विदग्धेनाक्षेप-

वचनादिश्रवणार्थमेवं क्रियते त्वन्तु स्वदोषे सत्यपि आक्षेपवचनमात्रेणोदासीनत्वमवलम्बसे किं वाच्यं मयेति भावः कश्चिदत्यन्तासक्त इति कश्चिद्वदतीति ऋजवः ॥ ८६ ॥

आगच्छतानवेक्षितपृष्ठेनार्थी वराटकेनेव ॥
मुषितास्मि तेन जघनांशुकमपि वोढुं न शक्तेन ॥८७॥

एतादृशेन नायकेन कथन्तव समागम इति वादिनीं सखीं सरलतादोषेण मम समागमोऽभवदित्याह आगच्छतेतितेननायकाभासेनाहंमुषितास्मि न प्रतारितास्मि काका प्रतारितास्म्यवेतिभावः प्रतारणेप्रकारमाह आगच्छता आवरणंविनैववारंवारमागमनवतेत्यर्थः पक्षे अन्यदत्तेनानवेक्षितपृष्ठेनानवेक्षितं न दृष्टं पृष्ठं पश्चाद्भावियेन तेनेत्यर्थः विशेषणाभ्यां पूर्वपरिचयाभावः अविचार्य्यकारित्वञ्च नायिकायां सूचितं पक्षे नावेक्षितं पृष्ठं यस्य तेन काणेन वराटकेनेत्यर्थः अन्यत्किंवक्तव्यं यत्जघनांशुकमपि अधरीयवस्त्रमपि मया परित्यक्तं वोढुं मदभिप्रेतस्थले स्थापयितुं सशक्तेन समर्थेन अनुचरवत्तत्कारिणेत्यर्थः पक्षे जघनांशुकं जघनमात्राच्छादकंवस्त्रमपि वोढुं न समर्थेन काणवराटकेन किमपि न लभ्यत इति भावः वराटकेनैककपर्द्दकेनेवार्थयाचकइवेत्यर्थः तथात्र कस्यान्यस्य दोषो ममैवदुरदृष्टेनैतत्सम्भावितं वस्तुतः काणवराटककार्य्यकारी अपि नायमितिपश्चात् ज्ञातमितिभावः अथवा दूतीभवत्सदृशीनेयमितीत्याह आगच्छता देशान्तरादागतेन स्वयमपरिचितेनाज्ञातप्राचीनपुरुषेण जघनांशुकमपि वोढुमसमर्थेन नायकसकलधर्मरहितेन पुरुषाकारमात्रेण स्मितेन स्मितपूर्वकावलोकनमात्रेणेयं स्वकीया अधीनं नीता सर्वदारगामी ग्रामयाचकः यथा काणैककपर्द्दकेन धनिनमात्मानं मन्यते एवमेवेयमात्मानमनेन नायकाभासेन मन्यत इति नभवाद्वशोरुत्तमनायकयोग्येयमिति भाव इति रसिकाः काचित्पण्यस्त्री द्रव्य मदत्वैव केनचिद्भुक्ता तस्याः पश्चात्तापवाक्यमिदमित्यपि कश्चित् ॥ ८७ ॥

आकुञ्चितैकजंघंदरावृताद्धोरुगोपिताद्धोरु ॥
सुतनोःश्वसितक्रमनमदुदरस्फुटनाभिशयनमिदम् ॥८८॥

यथेच्छसुरततृप्तां श्रान्तां सुरतान्तानुपदमेवाल्पनिद्रां नायिकां ज्ञात्वा नायको वर्णयति आकुञ्चितेति सुतनोः इदंपरमतृप्तिजनितं शयनं निद्रा वस्तुत

इतिशेषः श्वसितेन रताधिक्यप्रचुरेण क्लमः श्रमः रसजनकक्रियाविशेष इतियावत् तेन नमत् निम्नीभवत् यदुदरं तेन स्फुटा या नाभिस्मा यत्र शयने तदित्यर्थः अनेन श्रमशालित्वकथनेन सद्यः सुरतत्व सूचितमाकुञ्चितैकजंघम्-आकुञ्चिताऽवस्थातः किञ्चिदन्यथा कृता एका जंघा यत्र तत् निस्सहत्वादितिभावः दरमीषत् आवृत आच्छादित एक उरुर्य्यत्र आकुञ्चितस्यात्पावृतत्वात् ८८

आदाय धनमनल्पं ददानया सुभग तावकं वासः ॥
मुग्धा रजकगृहिण्या कृता दिनैः कतिपयैर्निःस्वा ॥८९॥

अत्यन्तमासक्ता नायिका त्वयीति नायकं सख्याह आदायेति सुभग भाग्यशालिन् एवमासक्ता यस्मिन् मदीयोत्तमा सखी किं वक्तव्यं तव भाग्यमिति भावः यद्वस्त्रं परिधाय त्वं तस्मिन् दिने तन्निकटं गतः तावकं तद्वासः दर्शनार्थं ददानया पत्न्या मुग्धा सुन्दरी कतिपयैः बहुभिर्दिनैः निःस्वा निर्धना कृता किंकृत्वा अनल्पं बहु धनमादाय गृहीत्वा तथाच यद्दिने तवा दर्शनं तस्यास्तस्मिंस्तस्मिन् दिने विनोदार्थं तावकं वस्त्रमेव दृश्यते इतित्वं ज्ञात्वा रजकस्त्रिया यथेच्छधनं विना न दीयते वस्त्रमतस्सर्वमेव धनं त्वद्वस्त्रदर्शनार्थमेव गतमतस्त्वया प्रत्यहन्दर्शनं देयमितिभावः अविदग्धास्तु तावकं त्वत्समीपागमनयोग्यं स्वकीयं वास इत्यर्थः एवञ्च त्वत्समीपागमनार्थं वारं वारं वस्त्रधावनमूल्यरजकगृहिण्या धावकदानेन द्वितीयवस्त्रशून्या दरिद्रा जातेति वाक्यार्थमाहुः ॥ ८९ ॥

आस्तां वरमवकेशी मा दोहदमस्य रचय पूगतरोः ॥
एतस्मात्फलितादपि केवलमुद्वेगमवगच्छ ॥९०॥

मन्त्री दुष्टं प्रभुं दानासक्तं राजानमन्योक्त्या निवारयन्नाह आस्तामिति अस्य पूगतरोः गुवाकवृक्षस्य दोहदं फलोपायं मा रचय मा कुरु अवकेशी बध्यो निःफलः आस्तां तिष्ठतु इति वरं समीचीनमित्यर्थः एतस्मात् क्रमुकवृक्षात् फलितादपि केवलमुद्वेगं गुवाकफलमधिगच्छ जानीहि तथाच यथा यस्य वृक्षस्य फललाभे फलदायकस्योद्वेगज्ञानमेवमेवास्य दुष्टस्याधिकारफललाभे स्वरोद्वेगः पीड़ा भविष्यतीति दरिद्रएवायं गुवाकवृक्षवद्गृथिलोऽपि सरलस्तिष्ठत्विति भावः बन्ध्योऽफलोऽवकेशीच घोण्टातु पूगः क्रमुको गुवाकः खपुरोऽस्य तु इत्यमरः ॥९०॥

आरब्धमब्धिमथनं स्वहस्तयित्वा द्विजिह्वममरैर्य्यत् ॥
उचितस्तत्परिणामो विषमं विषमेव यज्जातम् ॥६१॥

किञ्चिदपि कार्य्यं दुष्टसहायेन न कर्त्तव्यमित्याह आरब्धमिति द्विजिह्वं सर्पं पक्षेऽग्रपश्चाद्भेदेन भिन्नवचनं पुरुषं स्वहस्तयित्वा हस्तेनिधाय पक्षे स्वाधीनत्वेन ज्ञात्वा अमरैर्देवताभिः अमरत्वमिच्छद्भिर्वा समुद्रमथनोद्भुतामृतपानेनाम रत्वस्य पश्चाज्जातत्वात् यत् समुद्रमथनं प्रारब्धमारब्धपदेन मध्ये दुष्टसङ्गतिः कदाचिदस्तु प्रथमं सर्वथान त्याज्यमिति अब्धिमथनपदेन सहसोद्योगे कदापि दुष्टसङ्गो न कर्त्तव्य इति ध्वन्यते द्विजिह्वमित्येकवचनेनामरैरितिवहुवचने च वलवद्भिर्वहुभिरपि एकस्य दुर्बलस्यापि दुष्टस्य संगतिर्नकर्त्तव्येति ध्वज्यते उचितः कारणानुरूपस्तत्परिणामः द्विजिह्वसहायेन मंथनपरिणामः कार्य्यविशेषरूपः विषम सर्वविषाधिकं संसारोपतापकं यावत् विषमेव गरलमेव जातमुत्पन्नं तथाच सर्प्परूपमथनकारणेन सविषेण तज्जातीयं सविषमेव कार्य्यंभवितुमर्हति अमृतादिकन्तु देवादिकृतन्तदनुरूपमेव विषमपदेन न केवलदुष्टसंगतस्येवानर्थः किन्त्वन्यस्यापि नतदानीमेव किन्तु कालान्तरेऽपि यथा विषेणान्ये पीदानीमपि पीडिता इत्याशयः अतएव एवकारो भिन्नक्रमेण उचित इत्यनन्तरं योज्य इत्यपास्तममृतादिकार्य्यस्य सर्प्पहेतुकत्वव्यवच्छेदलाभाय देवकृतत्वलाभा यचात्रैव चमत्काराधायकत्वात् सहृदयैकवेद्यत्वाच्च तथाच देवादीनामप्येवं दुःखं का वार्त्ता मानुषादीनामिति वाक्यार्थः ॥६१॥

आवर्जितालकालिश्वासोत्कम्पस्तनार्प्पितैकभुजम् ॥
शयनं रतिविवसतनोः स्मरामि शिथिलांशुकं तस्याः ६२

वियुक्तः कश्चिद्रतिश्रान्तां सुप्तां नायिकां स्मरन्नाह आवर्ज्जितेति तस्याः शयनं निद्रां स्मरामि येन जीवामीतिभावः रत्याधिकया विवशा स्वानधीना तनुः शरीरं यस्या आ अवर्ज्जिताः असंयमिताः मुक्ता इति यावत् ईषद्वर्जिता श्लथीभूतवन्धनगुणा अलकाश्चूर्णकुन्तलरूपाः केशसमूहा वा यस्या इत्यर्थः श्वासेनोत्कम्पनौ यौ स्तनौ कुचौ तयोरर्प्पित एको भुजो यत्र तदित्यर्थः शिथिलंग्रन्थं विनैव लग्नमात्रमंशुकं वस्त्रं यत्र तदित्यर्थः ॥ ६२ ॥

आमूलाङ्कुरोऽयमरुणश्यामलरुचिर स्थिनिर्गतःसुतनु ॥
नवकमठखर्प्परपुटान्मध्ये वोद्धं गतः स्फुरति ॥ ६३ ॥

मानवतीं नायक आह आम्रेति अयं प्रत्यक्षः आम्राङ्कुरः अरुणारक्तप्रान्यद्देशे श्यामला श्यामपत्रभागे रुचिः कान्तिर्य्यस्य स अस्थिनिर्गतः कठिनछिद्दलवीज भवः सुतनु सुन्दरि सानुनयसंबोधनं स्फुरति शोभते क इव नवीनः यः कमठः कूर्मशिशुस्तस्य यत्कर्प्परपुटपूर्ब्वांशःस्थितकर्प्परद्वयं तस्मादूर्द्ध गतो यो मूर्द्धा तत्सदृशइत्यर्थः तथाच कुचदर्शनेन प्रथमवर्षजकूर्म्मस्मरणेनच सम्प्रति प्रावृट्काले मानविधानमनुचितमितिभावः केचित्तु विरहखिन्नां नायिकां तव पतिरवश्यमागमिष्यति प्राविडागतेति सखी वदतीत्याहुः वर्षारम्भे तवपतिरागमिष्यतीति वादिनीं सखीं प्रति कूर्म्मोत्पत्या वर्षारम्भे नागत इति अङ्कुरोत्पत्या मध्येऽपि नागतइति व्यञ्जनया नायिकावदति नायिका मध्या धीरा अयं पक्ष स्सरसः मानापनोदने गूढव्यञ्जनया नायकोक्तिस्तथा सरसतां नावगमयतीति ॥ ६३ ॥

आभङ्गुराग्रबहुगुणदीर्घास्वादुप्रदा प्रियादृष्टिः ॥
कर्षति मनो मदीयं ह्रदमीनं वडिशरज्जुरिव ॥६४॥

गेहं विहाय कुत्रापि न गच्छामीति कथकं सखायं प्रति नायक आह आभङ्गुरेति अथवा प्रबलतमविपक्षं नायकासक्तिनिवारकं सखायं सखाह प्रियाया गृहिण्या दृष्टिः द्वितीयपक्षे प्रीतिशालिनी दृष्टिरिति पदद्वयं मदीयं मनः मदीयत्वकथनेन स्वस्य स्वाभाविकगाम्भीर्य्यं बहुविधसुहृत्संबन्धिकृत्यापदेशशालित्वञ्च व्यज्यते कर्षति आकर्षति मम मनः मा गच्छरिवति प्रयत्नशालित्वेऽपि वासनैव कर्षतीतिभावः ह्रदमीनमगाधजलाशयमत्स्यं वडिशस्य मत्स्यभेदनस्य रज्जुरिवेत्यर्थः आभङ्गुराग्रा कुटिलाग्रा कटाक्षस्वभावात्अनेन वडिशमत्स्य भोज्यदानं कथितं पक्षे आभङ्गुरं भुग्नं वड़िशमग्रे यस्या बहुलम्बायमानमत्स्य भक्षणशालिनीत्यर्थस्तथाच यथा वडिशक्षेपकर्त्ता वडिशद्वारेण मत्स्यहननं करोति एवमेव ममापि भविष्यति निश्चितमिति जानन्नपि सर्वोत्कृष्टसुखलाभेन न निवृत्तोभवति भवितव्यं भवत्येव न निवारणीयं भवतेतिभावः प्रथमपक्षे यन्न व्याख्यातं तत्स्वयमूहनीयमार्य्यैरिति तत्रागाधजलो ह्रद इति वडिशम्म त्स्यभेदनमित्यमरः ॥६४॥

आलप यथायथेच्छसि युक्तं तव कितव किमुपरोधयसि ॥
स्त्रीजातिलाञ्छनमसौ जीवितरङ्का सखीसुभग ॥६५॥

नायिका सखी:परकीयापरितोषार्थं स्वकीयानिन्दां कुर्वाणं स्वकीयासखीं दृष्ट्वा कथान्तरं कुर्वाणं नायकमाह आलपेति यथायथा इच्छसि स्वकीयानिन्दादिना॰ परकीयेयं तुष्टा भवति तथा कर्त्तव्यमित्यर्थः तव तथैवयुक्तमिदं नास्माकमिर्थः कितव धूर्त्त किमुपरोधय सि मां दृष्ट्वा कथान्तरच्छलेनच गोपयसीत्यर्थः प्रव्यक्तमेव ममाध्यक्षेऽपि यथेष्टं वद त्वत्कथनं विनापि तव दुश्चेष्टितम्मया ज्ञातमितिभावः असौ त्वद्गृहिणी मम सखी स्त्रीजातेः स्त्रीमात्रस्य लाञ्छनं कलङ्क रूपा जीवितार्थं रङ्कादीनाम्नादूरानिन्दकातिलम्पटधूर्त्तासक्तोजीविनरक्षणं करोति अन्या कापि नैवं कर्त्तुं शक्नोतीति अतः सुभग, भाग्य शालिन् तस्यास्तथा नेदृशंकदापि त्वया कर्त्तव्यमिति ध्वनिः ॥९५॥

**आस्वादितोऽसि मोहाद्वत विदिता वदनमाधुरी भवतः ॥**
**मधुलिप्तक्षुररसनाच्छेदायपरंविजानासि ॥ ९६ ॥**

परकीया काचित्सापराधमन्योक्त्या नायकमाह आस्वादित इति मोहात् भ्रमात् यथा वचनमाधुर्य्यं तथैव हृदयमपिनवेति भ्रमादित्यर्थ. आस्वादितोऽसि सम्यक् परिचितोऽसि अवलीढासि मधुलिप्तक्षुरं मधुना लिप्तं नापितास्त्रं यथा तथा त्वमसीत्यर्थः बत खेदे वदनमाधुरी वचनमात्रमाधुर्य्यं ज्ञातेत्यर्थः परं केवलं रसना जिह्वा तच्छेदाय रसनाच्छेदनार्थं विजानासि विशेषेण जानासीत्यर्थः तथाच यथा क्षुरं मधुनालिप्तमप्राप्यजिह्वाप्राप्त्यर्थम् प्राप्तिमात्रे च्छेदनं करोति तथाऽस्मत्प्राप्त्यर्थं वचनमाधुर्य्यमवलम्ब्य प्राप्त्यनन्तरमेवमाचरसि येन प्राणत्यागोऽपि भवति तस्मात्परित्याज्योऽसीतिभावः ॥९६॥

**आकृष्टिभग्नकटकं केन तव प्रकृतिकोमलं सुभगे ॥**
**धन्येन भुजमृणालं ग्राह्यं मदनस्य राज्यमिव ॥९७॥**

काञ्चित्कन्यकां काचिदाह आकृष्टीति स्वभागलक्षण रूपानु रूपसर्वावयवे तवभुजमृणालं बाहु विशङ्कनधन्येन पुण्यवता ग्राह्यंगृहीतव्यञ्च पुण्यवानेवतव पाणिग्रहणङ्करिष्यतीति समुदायार्थः मदनस्यमन्मथस्य राज्यमिव तथा चमदन रूपमहाराजराज्य ग्रहेणसर्वांशेन एव मदनाधिकोभावीतिभावः आकृष्ट्याभुजाकर्षणेन भग्नंसाध्वसात्पतितं स्वस्थानाच्चलितं नतुपतित ममङ्गलत्वाद्विकटकं वलयंयस्य भुजमृणालस्यतत् पक्षे आकृष्टा उपजापेनैवकर्षणेन भग्नंस्वल्पंकटकं सैन्यंयस्य राज्यस्यतत् विमर्द्दनभग्नं सैन्यमितिवाप्रकृत्या स्वभावेनकोमलंमृदु

पक्षेप्रकृतिः प्रधानंमन्त्रिरेन कोमलं च्युतमन्त्रंशत्रुतः रक्षणशून्यमित्यर्थः तथाच यथैतादृशराज्यलाभे सर्वसुखंपुण्यवतोभवति तथादुर्लभात्वंपुण्य वतोभविष्यसीति त्वंसकलकन्यकाश्रेष्ठेति व्यज्यते ॥६७॥

आरुह्य दूरमगणितरौद्रक्लेशा प्रकाशयन्ती स्वम् ॥
वातप्रतीच्छनपटी वहित्रमिव हरसि मां सुतनु ॥६८॥

सौधशिखरे सञ्चरन्तीं कुतश्चिदागत्याधस्सञ्चरन् कश्चिदाह आरुह्येति दूरं सौधशिखरमारुह्य पक्षे गुणवृक्षशिखाम् अगणितः रौद्रस्यातपस्य क्लेशो यथा समं यद्वा नायिकापक्षे रौद्रः दुस्सहः निर्ज्जनत्वजनितः क्लेशो ययेति स्वमात्मानं प्रकाशयन्तीसकलनयनगोचरं कुर्वन्ती वहित्रमिव वातस्य पवनस्य पतीच्छनमवरोधस्तत्कर्त्री पटी नौकाया अप्रयासेन यद्रुच्छया गमनार्थं यद्वस्त्रादि सा वातप्रतीच्छनपटी हरसि स्वाधीनं करोषि अभिप्रेतां दिशं नयसिचेत्यर्थः तथाचातिदूरगमनं नानाविधदुःखञ्चागणयित्वा किमर्थं सौधशिखरे भ्रमसि ममापि त्वां दृष्ट्वा पराधीनत्वेनात्रागमनमतो यथा समागमोऽपि भवति तत्प्रकारोवऽश्यं विधेय इतिभावः ॥६८॥

आनयति पथिकतरुणं हरिण इह प्रापयन्निवात्मानम् ॥
उपकलमगोपि कोमलकलमावलिकवलनोत्तरलः ॥६९॥

सर्वदा नायिकासन्निहिता दौत्यं न जानामीति वादिनीं काञ्चित् अथ यथेष्टं गृहाण मम दौत्यं कुर्व्विन्त्यन्योक्तया नायक आह आनयतीति उपकलमगोपि कलमगोप्याः शालिरक्षिकायास्तरुण्याः उपसमीपं पथिकयुवानं हरिणः आनयति रतार्थं संयोजयति दूतइवेतिभावः इह पथिके आत्मानं स्वं प्रापयन् इव त्रुटितचरण‌वादिचेष्टया धावना सामर्थ्यसूचनेनाल्पे व्यापारे शक्यमेव ममधारणमितिज्ञापयन्निवेत्यर्थः मम प्राप्तिनिरासः पथिको मानिवर्त्ततामित्याशयः कोमला या कलमस्यावलिः पङ्क्तिः तत्कवलने तद्ग्रासे उत्तरलः सतृष्णः तथाचात्यन्तयौवनोद्धतेयमस्मान्निवारयन्ती सर्वकालंतिष्ठति कथं कलमभक्षणं कर्त्तव्यमिति चिन्तयित्वात्मानं खञ्जंक ल्पयित्वातरुणसमीपं गत्वा हरिणप्राप्ति लुब्धं तं कलमरक्षिकासमीपं नीत्वा परस्परा त्यन्तकामातुरयोस्तयो रपि हरिणः, सुरतारम्भं कारयित्वा स्वयं निःशङ्कस्तत्समक्षमेव यथेच्छं कलमभक्षणं करोति हरिण इति पुरुषोऽपि पशुरपि हरिणः शत्रोरपि दौत्यं करोति त्वन्तु स्त्री आवयोः समीप-

वर्त्तिनो समानजातीया सुरूपा चेति कथं न जानामीति वदसि तथाचावश्यं दौत्यं कर्त्तव्यमिति कोमलपदेन स्पृहणीयत्वं क्षेत्रस्याऽऽनवृतत्वेनान्यत्र रत्यर्थं गमनं तेन स्वस्य निःशङ्कत्वञ्च व्यज्यते कलमगोपीत्यनेनातिसावकाशत्वं सामर्थ्यञ्च तरुणपदेनानवरतसुरतसामर्थ्यं पथिकपदेन सावकाशत्वं तेनात्यन्ताभिलषितस्व-कार्य्यश्लथं कश्चन कश्चिदुपदिशति पशुरपि भोजननिवारकमांसशाकदयोरतिश-सुरूपयोरभिमतं कार्य्यं सम्पाद्य कार्य्यं साधयत्येव हरिणस्त्वन्तु मत्कार्यं संपाद्य स्वकार्यं न साधयसीति अथवा कस्याश्चिद्धनं कयापि नायकसंगमं कार यित्वा सर्वं भुज्यतइति काचिदन्योक्त्याविक्ति। अथवा ननन्दृभयादन्यनायकसङ्गं नकरोमीति वादिनीं नायिकां तस्या नायकान्तरासक्तिं विधाय त्वमप्येवं हरिण वत्कुरु इतिइत्याह ॥९९॥

आयासः परहिंसा वैतंसिक सारमेय तव सारः ॥
त्वामपसार्य्य विभाज्यः कुरङ्ग एषोऽधुनैवान्यैः ॥१००॥

निरपराधमनेकजनहननलुण्ठनपरम् अतएवादुष्टपरितोषं मनुजपशुमन्योक्त्या कश्चिदाह अयासइति वैतंसिकसारमेय व्याधकुक्कुर एतेन समीचीनजनदर्शना-भावेन कर्त्तव्याकर्त्तव्यविवेकशून्यत्वं तेनच समीचीनजनसङ्गतिरेव ज्यायसीति सूच्यते आयासः धावनश्रमः पक्षे नानाविधमिथ्याभाषणप्रतारणश्रमः परस्य हिंसा हननं पक्षेऽनभिप्रेतकरणं तव तवैव सारः लाभः यथा तव निरर्थको दोषस्तथा फलभागिनस्तस्यनेत्यर्थः कुतो यैफल्यमत आह एषः त्वया हतः कुरङ्गस्तृणमा-त्रभोग्यपराधशून्यः मृगः त्वामपसार्य्य दूरे स्थापयित्वा अन्यैः व्याधजनग्रामी णजनैः इदानीमेव विभाज्य विभागं कृत्वा गृहितव्य इत्यर्थः पक्षे त्वया साधितं द्रव्यमित्यर्थः तथाचानेनापि तव न दुष्टपरितोषो नवा लाभादिरतः पशुरसीतिभावः ॥१००॥

आसीदेष यदार्द्रः किमपि तदा किमयमाहतोप्याह ॥
निष्ठुरभावादधुना कटुनिसखिरटतिविशेषपटह इव ॥२०१॥

इदानीमनवसरेऽपि वहुधा निष्ठुरं तव पतिर्वदतीति किमिति वादनीं सखीं नायिकाह आसीदिति एष पतिः यदा यस्मिन् काले आर्द्रः प्रेमरस-परिप्लुत आसीत् अभवत् इदानीं प्रेमाभावादतीतत्वकथनं प्रेम्णः पक्षे आर्द्रः शैत्येन श्लथचर्म्मा तदा अयं पतिः आहतोऽपि मर्मभेदिवचनभर्त्सितोऽपि साध्व-

साधुत्वा किमाह किमवादीत् न किमपीत्यर्थः पक्षे तादृशोऽपि किमपि ध्वनि मात्रमपि किमाह उत्पादयतिस्म नेत्यर्थः अधुना सम्प्रति निष्ठुरभावादन्यत्रा-सक्तत्वात् पक्षे सूर्य्यकिरणाग्न्यादिना शुष्कचर्मत्वात् कटूनि अप्रियाणि पक्षे अश्रव्यानि रटति यदृच्छया वदति पक्षे उत्पादयतीत्यर्थः पटहः इव वाद्यविशेषइवेत्यर्थः तथाचायमन्यत्रासक्त इदानीं मामुपेक्षितवानिति समीचीनकथनेऽपि विपरीतं वदति त्वमेवास्य प्रकारो नान्य इति तव विदितमस्त्विति भावः ॥१०१॥

आज्ञाकरश्च ताड़नपरिभवसहनश्च सत्यमहमस्याः ॥
नतु शीलशीतलेयं प्रियेतरं वक्तुमपिवेद ॥१०२॥

किमर्थमस्या गृहिण्यास्ताड़नादिकमपिसहसे इति वादिनीं दाम्पत्यसुखभेदिकां दूतीं नायक आह आज्ञेति अस्याः गृहिण्याः आज्ञामात्रकारकः परिभवस्या-नादरस्य कोपपूर्वकहस्तादिप्रहारस्य सहिष्णुताकारीच्च चकारद्वयेन सहनाज्ञाकारित्वयोस्समकालता व्यज्यते अहं सत्यमस्मि शीलेन स्वभावेन शीतला कोमला इयमप्रियं वक्तुमपि न जानाति कर्त्तुं न जानाति इति का कथेत्याशयः तथाच परिभवताड़नादिकं ममेच्छयैव करोति नतु स्वभावेन नान्या नायिकाऽस्याः सदृशीति किमर्थं दाम्पत्यसुखभङ्गोद्यतासीति भावः ॥१०२॥

आधाय दुग्धकलशे मन्थागं क्लान्तदोर्लता गोपी ॥
अप्राप्तपारिजाता दैवे दोषं निवेशयति ॥१०३॥

याचितभूषणवस्त्रादिं कृतसुन्दरवेषं ग्रामनायकमतिदरिद्रं बहुलाभभ्रमेण रमयित्वा प्राप्तराजतमुद्राकारताम्रमुद्रां मुद्रापरीक्षणद्वारेण बुद्ध्वा रुदन्तीमन्योक्त्या कश्चिदाह । आधायेति दुग्धघटे मन्थनदण्डमाधाय धृत्वा परिश्रान्त भुजलता गोपी अविदग्धा गोपस्त्री अप्राप्तपारिजातवृक्षा दैवे दिष्टे दोषं प्रतिबन्धकत्वं निवेशयति आरोपयतीत्यर्थः देवैर्दुग्धमथनेन पारिजातलक्ष्मी. सुधादिकं सर्वं लब्धं यावता व्यापारेण तावतैवास्माभिः पारिजातोऽपि न लब्धः का वार्त्ता लक्ष्मीसुधादेस्तस्माद्दृष्टदोष एव इति तथा क्षीरोदधिदुग्ध-घटौ समौ मत्वा भ्रान्ता वदति तथा त्वमपि नायकाभासेन दरिद्रेण संगता बहुद्रव्य लाभेन दुष्टात्द्रव्यलाभेनच खिद्यसि स्वभ्रान्तिं न पश्यसीति भावः ॥१०३॥

आस्तां मानः कथनं सखीषु वा मयि निवेद्यदुर्विनये ॥
शिथिलितरतिगुणगर्वा ममापि सा लज्जते सुतनुः ॥१०४॥

मयि मानः कथनञ्च आस्तां मानोन कृतः नवा कथनमपराधस्य मयि कृतमित्यर्थः सखीषुवाप्रियदुर्विनयकथनमास्तां तदपि न कृतमित्यर्थः कस्मिन् सति मयि वेद्यः स्वनायिकामात्रवेद्यः दुर्विनयोऽन्यस्त्रीसंभोगादिर्यस्य तादृशि सति अपराधस्य निर्णयेऽपीत्यर्थः शिथलिताः भ्रष्टाः रतौ सुरते ये गुणाः सकलनायिकाविलक्षणनायकचित्तहरणादयो गुणा तेषां गर्वोऽभिमानोयस्याः सेत्यर्थः पतिव्रता धीरोदात्तप्रकृतिः सुतनुः सर्वाधिकसुन्दरी ममापि लज्जते लज्जां करोतीत्यर्थः अपिना सख्यादिलज्जा समुच्चीयते सापराधत्वे ममैव लज्जोचिता न तस्यास्तथापि लज्जेतिविरोधो वा सूच्यते । तथाच मम रति-गुणा एव न सन्ति कथमन्यथा प्रियो विलक्षणरतार्थमन्यासक्तो भवेत् तेन स्वदोषजनितोऽयमपमानः कुत्रापि न प्रकाश्यः एतादृशीं स्वनायिकां दृष्ट्वा वास्तविकसर्वाधिकेयं मया कदापि पुनरेवं न कर्त्तव्यं न वृत्तं कुत्रापि प्रका-श्यन्तस्या अपमानरूपत्वादिति नायकचिन्तेति वाक्यार्थ इति भावः सखायं नायको वदति इति कश्चित् पुन. कथं नायासीत्यन्यनायिकादूतीं प्रति स्वना. यिकयाज्ञातमतो नागम्यत इति नायको वदतीति वदन्ति केचित् ॥१०४॥

आवर्त्तैरातर्प्पणशोभां हिण्डीरपाण्डुरैर्द्दधती ॥
गायति मुखरितसलिला प्रियसङ्गमसङ्गलं मुरला ॥१०५॥

सङ्केतस्थलं नास्तीति वादिनीं दूतीं मुरलातीरमेव सङ्केतस्थलमित्यन्योक्त्या नायक आह आवर्त्तैरिति मुरला दक्षिणसमुद्रमाश्रिता नदी प्रिययोः प्रेयसीप्रि-यतमयोर्द्दम्पत्योरित्यर्थः समागमकालिकमङ्गलं गायति मुखरितं शब्दितं सलिलं यस्यास्सेत्यर्थः सलिलशब्दच्छलेनैव गायतीति भावः किंभूता आवर्त्तैरम्भसां भ्रमैः आतर्प्पणस्य चित्रविशेषकरणार्थं श्वेतशालितण्डुलचूर्णरूपद्रव्यस्य मैथिल-भाषया अरिपनइतिप्रसिद्धस्य शोभां दधती आवर्त्तैः कथंभूतैः हिण्डीरपाण्डुरैः फेनश्वेतैस्तथाच यथा कन्यावरयोः कौतुकागारस्थितयोर्म्मङ्गलगानं करोति काचित्तथा कन्यावरतुल्ययोर्नायकनायिकयोः सङ्गमंगलगानं मुरला करोति सुहृद्रूपायो अस्यास्तीरं विहाय नान्यत्सङ्केतस्थलमिति भावः । हिण्डीरोऽब्धि-कफः फेन इति कोषः अतएव डिण्डीरइति दाक्षिणात्यपाठः प्रामादिकः

आतर्प्पणमङ्गलगानादिपराभूता नागता मद्दर्शनचपला. केयमिति पृच्छकं पथिकमन्योक्त्यास्मिन्नगरे दूतीयमेव नान्येति नागरिकः कश्चिदाह, त्वदर्थमेवैतत्सर्वं करोतीति भाव इति वा जातिव्रगनमेतदित्यपि कश्चित्. वस्तुतः प्रियसमागमो भविष्यत्यद्येति निश्चयेन प्रत्यक्षमेव तदुपयोगिसामग्रीसम्पादनपरामत्यन्तनिर्लज्जां काञ्चित्काचिदुपहसति यथा मुरला प्रियस्य समुद्रस्य सङ्गमङ्गलं स्वयमेव गायति तदुपयोगिवस्तून्यपि स्वयमेव सम्पादयति समुद्रस्य एतदधिकापि कोटिशः सन्ति तथा तेनागत्य किं कर्त्तव्यमिति भावः ॥१०५॥

इति महोपाध्यायसचलविरचिते रसप्रकाशे आकारव्रज्या समाप्ता ॥

इयमुद्गतिं हरन्ती नेत्रनिकोचञ्च विदधती पुरतः ॥
न विजानीमः किन्तव वदति सपत्नीव दिननिद्रा ॥१०६॥

सख्याऔपपत्यतरवज्ञा सखी नायिकां शिक्षयति इयमिति तव इयं पत्या सह जागरं विनापि जातेत्यर्थः दिननिद्रा दिवाशयनमनेना स्वाभाविकशयनेनान्येषामपिजारकारितनिशाजागरणज्ञानयोग्यतेति ध्वन्यते सपत्नीव यथा सपत्नी दुश्चरितज्ञापिका तथेयमपीतिभावः निद्रा सपत्नीच किंभूता उद्गतिमुत्थानं हरन्ती निवारयन्ती पक्षे उद्गतिं स्वाधिक्यं यशःप्रतिष्ठादिकमित्यर्थः नेत्रनिकोचं लोचनसङ्कोचं विदधती आलस्यादित्याशयः पक्षे रात्रिजागरणसूचकनेत्रकोणचेष्टाविशेषं कुर्वन्तीत्यर्थः इदानीमेतावत्कृतम् पुरतः अग्रे किं वदति किं वदिष्यति इति वयं तव सख्योऽपि न जानीम इत्यर्थः तथाचैकदिनदिवानिद्रया तव सपत्न्याश्चरितोद्घाटनं समारब्धमग्रे तव का का दुर्द्दशा न भविष्यतीति सर्वथा दिवानिद्रा त्याज्येति भावः ॥१०६॥

इदमुभयभित्तिसन्ततहारगुणान्तर्गतैककुचमुकुलम् ॥
गुटिकाधनुरिव बालावपुः स्मरः श्रयति कुतुकेन ॥१०७॥

मदननिवासोऽस्यां जात इति कस्यचिदुक्तिः इदमिति इदं बालायाः मुग्धायाः वपुः शरीरं स्मरः कुतुकेन विनोदेन प्राथमिकप्रवेशोत्साहेनेत्यर्थः श्रयति आश्रयति किमिव गुटिकाधनुरिव तथा तन्त्रीद्वयघटितगुटिकापक्षेयोग्यं धनुः कश्चिद्विदग्धः पक्षिमारणकुतुकी श्रयति तथेत्यर्थः मध्यभागस्य मुष्टिग्राह्यत्वं कुशलमात्रयोग्यत्वमकस्माद्विकारकारित्वञ्च सूच्यते गुटिकाधनुरित्यनेन उभयभि-

तावुभयपार्श्वे संततौयौहारगुणौतयोस्ततो मध्यगत एककुचमुकुलो यस्मिन् तद्वपुरित्यर्थः अतएव गुटिकाधनुस्समानमितिभावः ॥१०७॥

**इहशिखरिशिखावलम्बिनिविनोददरतरलवपुषितरुहरिणे ॥**
**पश्याभिलषतिपतितुंविहगीनिजनीड़मोहेन ॥१०८॥**

झटिति सुरतसमाप्तिशङ्कयाऽतृप्ता तृप्तिपर्य्यन्तं सुखकारकदीर्घसुरतार्थं सुरतमध्ये किञ्चिदन्योक्त्या वक्तु कामशास्त्रे नायकं शिक्षयन्त्याह इहेति इह विपिने विपिनस्य सङ्केतस्य कथनेन परकीयात्वन्तेन च संभोगदौर्लभ्यन्तेनचातृप्तिः तया उपदेशस्य युक्तता व्यज्यते शिखरिशिखालम्बिनीतिपाठः शिखरिणो वृक्षस्य या शाखाशिखा तदलम्बयुक्ते त्यर्थः विनोददराभ्यां क्रीड़ाकौतूहलत्रासाभ्यां तरलं, विचित्रचेष्टया चञ्चलं वपुः शरीरं यस्य तस्मिन्नित्यर्थः नतुदरईषदित्यर्थः चापल्यातिशयस्य विवक्षितत्वात् विनोदत्रासकथनेन नानाविधविकृतचेष्टावत्त्वं तेन दर्शनीयत्वं व्यज्यते तरुहरिणे शाखामृगे कामशास्त्रे शाखामृगादिप्रसिद्धशब्देन तदभिधानात् तद्दोपनार्थं तरुहरिणयद्योर्द्वयोरपि प्रक्षेपः शाखास्थचपलवानरदर्शनमात्रविधानेऽत्यन्तप्रव्यक्तं स्यादतः किञ्चिद्गोपनाय विहगीवृत्तं पूरयति निजनीरस्य कुलायस्य भ्रमेण विहगी खगी पतितुमभिलषति इच्छति इति त्वं हे नायक पश्य तथाचैतद्दर्शने वीर्य्यस्तम्भनार्थं कामशास्त्रविहितवृक्षगतचपलमर्कटे ध्यानं कुरु येनाभिमतसमयस्थायिरतसुखं सम्पूर्णं मम भवेदितिभावः उक्तञ्च वीर्य्यस्तम्भनप्रकारे कामशास्त्रे स्थैर्य्यार्थं चिन्तयेदन्यं वानरं वृक्षसञ्चलम् कान्तासमागमादन्यं मनोहार्य्यथवा स्मरेत्रति तरुशैलौशिखरिणौ दरत्रासावितिकोषः ॥१०८॥

**इक्षुर्न्नदीप्रवाहो द्यूतं मानग्रहश्च ते सुतनु ॥**
**भ्रूलतिकाच तवेयं भङ्गे रसमधिकमावहति ॥१०६॥**

परनायिकावलोकनजनितलघुमानापनोदनं परिहासेन कुर्वन्नायको नायिकामाह इक्षुरिति इक्षुः गुडवृक्षः भङ्गे त्रोटने दन्तदलने वा अधिकं रसमतिमधुरमावहति व्यञ्जयति दधाति ददाति चेति यथायोग्यमन्वयः नदीप्रवाहः भङ्गे प्रवाहभंगे सेतुबन्धन इत्यर्थः अधिकं जनं धारयतीत्यर्थः द्यूतमक्षादिक्रीडनं पराजये जलार्थक्रीडनेच्छां ददातीत्यर्थः एते पूर्वोक्ताः पदार्थाः सामान्यत एवोक्तस्वभावा यतस्तथा सुतनु ते मानः भंगे अवसाने मानापनोदने सती

त्यर्थः तव भ्रूलतिकाचभंगेमानकौटिल्ये सतीत्यर्थः । अधिकं रसं द्विगुणरतेच्छां पुनःपुनर्दर्शनेच्छाञ्च मह्यं ददातीत्यर्थः तवेत्यस्य माने भ्रूलतिकायाञ्चोभयत्रै वान्वयो नत्वन्यत्रेति वारद्वयमेवोक्तिर्नाधिका नवा न्यूना तथाच तवमानान्तसमयसुरतलोभेन कुटिलभ्रूलतादर्शनलोभेनच मया तस्या अवलोकनं त्वत्समक्षमेव कृतं त्वयापि सर्वं सम्पादितमतः परं पूर्ववद्रत्यादि विधातव्यं नान्यथेति भावः ॥१०६॥

इन्दोरिवास्य पुरतो यद्विमुखी सापवारणा भ्रमसि ॥
तत्कथय किन्नु दुरितं सखि त्वया च्छाययेव कृतम् ।११०।

सा यदि तवातिसुन्दरं रूपं सम्यक् कदाचिदपि पश्येत्तदा तव संगता भविष्यति नान्यथेति नायकसमीपे प्रतिज्ञाय नायिकासखी दूती तत्सम्पादनाय नायिकामाह इन्दोरिवेति इन्दोः चन्द्रस्य सदृशस्यास्य चन्द्रसादृश्यकथनेन सर्वलोकसुभगत्वं शीतलस्वभावत्वं सर्वनिशायां सन्निहितत्वं च व्यज्यते पुरतः अग्रे यत् विमुखी परावृत्तवदनापक्षे विपरीतदिग्गामिनी सापवारणा वस्त्रगुप्तसर्वशरीरा पक्षे अपवारणेनान्तरालेन सहितेत्यर्थः छायायाः किञ्चिदन्तराश्रित त्वादितिभावः भ्रमसि नायकसंमुखेपि चलसि न निलीय तिष्ठसि तेन तवापि दर्शनाभिप्रायो वर्त्तत एवेति ध्वन्यते अतएवाभिमतासिद्धिकारकदुरितकथनं सम्यक् पक्षे चन्द्रचलनाच्चलतीत्यर्थः, हे सखि तत् कथय नु वितर्के किं दुरितं पापमत्र जन्मान्तरे वा त्वया कृतं नहि दर्शनेच्छायां सत्यां संमुखस्थितस्य सर्वोत्कृष्टस्य दर्शनं न क्रियत इति पापं विनेत्याशयः कयेव छायेव छायायाः पापश्रितपुरुषाश्रितत्वात् देवाश्रितत्वन्न भवति तथा तवापि न निष्पापत्वमपितु सपापत्वमेव यदि निष्पापासि तदा एनमवलोकय पुण्यफलञ्च गृहाणेत्याशयः ११०॥

इह कपटकुतुकतरलितदृशि विश्वासं कुरङ्ग किं कुरुषे ॥
तव रभसतरलितेयं व्याधवधूर्वालधौ वलते ॥१११॥

कश्चिदुपपतिं धर्त्तुमुद्यतान्नायिकां कुटुम्बनियुक्तामालोक्यान्योक्त्या दूरस्थिता दूती तमुपपतिमाह । इहेति कुरङ्ग हरिण अनेन झटितिपलायनसामर्थ्यमसमीक्ष्यकारित्वञ्च व्यज्यते इह कौतुकायोग्यदेशे कपटेन भ्रमन्तं पश्यामीति छलेन यत्कुतुकं कौतूहलमन्यदेव किमपि पश्यामीति कौतुकमित्यर्थस्तेन तर-

लिता न्यत्र स्थापिता दृक् यया तस्यामित्यर्थः विश्वासं मम किं करिष्यतीति भावः किं कुरुषे विश्वासे सद्य एव तत्र धारणं भविष्यतीतिभावः इयं व्याधवधूः रभसेन कौतुकेन तरलिता हेबाल मूर्ख ज्ञानशून्येत्यर्थः ते त्वदर्थं वलते तिष्ठति शोभते वा व्याधपदेन गृहपतेरतिप्रौढत्वं व्यज्यते वालधावितिपाठे पुच्छे बलते धारणार्थमेकाग्रचित्ता भवतीत्याशयः तथाच शीघ्रमेव गच्छ नोचेदनर्थो भविष्यतीतिभावः ॥१११॥

इह वहति बहुमहोदधिविभूषणा मानगर्वमियमुर्वी ॥
देवस्य कमठमूर्त्तेर्नपृष्ठमपि निखिलमाप्नोति ॥११२॥

सर्वगुणोपेतस्यास्य नायकस्य कथमनयातिनिन्दितया समागमोभूद्येनात्यन्तगर्वशालिनीयं जातेतिवादिनीं नास्यास्सङ्गतिस्तेन किन्तु मिथ्यैव सर्वं वदतीति अन्योक्त्या काचिदाह इहेति इयमुर्वी पृथ्वी पक्षे नायिका मानगर्वं प्रमाणगर्वमतिविस्तृताहमिति गर्वमहङ्कारं पक्षे मानस्योत्तमनायककृतसंमानस्येत्यर्थः इह लोके पक्षे वृत्तान्तानभिज्ञभवदध्यक्षे नास्मत्समक्षमितिभावः वहति दधाति बहवो महोदधयस्सप्त समुद्राः विभूषणानि वलयरूपाणि यस्याः सेत्यर्थः पक्षे बहुप्रकारं महोदधेर्भूषणं रत्नं यस्यास्सेत्यर्थः यद्वा बहवो महा उत्सवास्त एवोदधयः विभूषणानि यस्या इत्यर्थः अनेन उत्सवमात्रभूषणत्वेन नैर्धन्यं तेन तादृशमहाधननायकसंगमस्याप्रामाणिकत्वं व्यज्यते कूर्ममूर्त्तेः अनेन कूर्मपृष्ठस्यातिकठिनत्वेन अश्लाघ्यत्वं सर्वसौलभ्यञ्च सूच्यते देवस्य विष्णोः अनेन सर्वत्र ममत्वं नायकेऽनिष्टशालित्वं निखिलं सर्वं पृष्ठमपि नाप्नोति पक्षे नायकस्य पृष्ठभागदर्शनमपि नास्याः कुतस्सुखदर्शनम् कालिङ्गनचुम्बनादिकं भवादृशीनामपि दुर्लभमित्याशयः ॥११२॥

इति महोपाध्यायसचलविरचिते रसप्रकाशे इकारव्रज्या समाप्ता ॥

ईर्ष्यारोषज्वलितो निजपतिसङ्गं विचिन्तयँस्तस्याः ॥
च्युतवसनजघनभावनसांद्रानन्देन निर्वामि ॥११३॥

कश्चित्सखायं वदति ईर्ष्येति ईर्ष्या अक्षान्तिः रोषः क्रोधः ताभ्यां ज्वलितस्तप्तः तापकारणमाह तस्या निजस्यापि पत्युस्सङ्गं सम्भोगं विचिन्तयन् चिन्ताविषयं कुर्वन् वस्तुनोममागमं विना तमपि न करोति ममैवाधीनेति

भावः च्युतवस्त्रं यज्जघनं तद्भावनेन सान्द्रो य आनन्दः तेन निर्वामि ज्वाला-शून्यो भवामि इत्यर्थः सन्तुष्टो भवामीति समुदायार्थस्तथाच पश्य मम वशीकरणसामर्थ्यमिति भावः ॥११३॥

ईश्वरपरिग्रहोचितवेशोऽस्यां मधुप किं मुधा पतसि ॥
कनकाभिधानसारा वीतरसा कितवकलिकेयम् ॥११४॥

शत्रुमारणार्थं विषभक्षणशीला त्यन्तसुरूपा कन्यका महाप्रभुभिःस्वनिकटे स्थाप्यते यस्याःसमागममात्रेण मरणं भवतीति तां कामयमानं प्रभुं कश्चिद-न्योक्त्या वदति ईश्वरेति ईश्वरस्य शिवस्य यः परिग्रहः स्वपूजार्थमङ्गीकारस्त-दुचितस्तज्जनितः वेशः सुवर्णाकारो यस्यां कनककलिकायां कनककलिकावि-शेषस्य पीतत्वादितिभावः वर्त्तत इतिशेषः पक्षे ईश्वरस्य शत्रुमारणपरस्य महाप्रभोः परिग्रहः बाल्यमारभ्य स्वान्तःपुरे स्थापनं तदुचितः अंन्तःपुरस्त्रीयोग्यः वेशोऽलंकारादिरस्यां कन्यकायामित्यर्थः यद्वा ईश्वरेण भवादृशेन महता परिग्र-हयोग्यवेश इत्यर्थः वेश इत्यत्र मोह इतिपाठे मोहो भ्रमः भ्रान्तस्त्वं मधुप सारमात्रग्राहक किं पतसीत्यन्वयः कनकस्य सुवर्णस्य यदभिधानं नाम तदेव सारं यस्याः उन्मत्तः कितवो धूर्त्तो धूत्तूरः कनकाह्वय इतिकोषादितिभावः श्रव्यनाममात्रेण सारेत्यर्थः अन्यदसारमेवेतिभावः इयं कितवस्य धूत्तूरस्य कलिका सुगन्धशून्येत्यर्थः पीतः अनुत्पन्नो रसो मकरन्दो यस्स्याः सेत्यर्थः यद्वा कलिका कलिकाकारा जरत्यपि कन्यकावद्भातीत्यर्थः अन्तरसेवितमकरन्दा पक्षे धूर्त्तस्यछलेन शत्रुमारणपरस्य संबन्धिनी कलिका कन्यका इति भावः वीतः विगतः विषभक्षणादिना गतः रसः स्वाभाविकसंभोगसुखदातृत्वादिर्य-स्यास्सेत्यर्थः तथाच किमीश्वरकृतवेशेन तत्कृतनाम्नाच भ्रान्तो भवसि अस्या-स्सङ्गमे तव प्राणापगमइतिभावः ईश्वरपरिगृहीतां जरतीं कामयमानमन्योक्त्या कश्चिद्वदतीतिबहवः ॥११४॥

इषदवशेषजडिमा शिशिरे गतमात्र एव चिरमङ्गैः ॥
नवयौवनेव तन्वी निषेव्यते निर्भरं वापी ॥११५॥

प्राप्तयौवनारम्भैः कियद्भिः परिचारकैः सह वापीस्नानमाचरन्तीं नवप्राप्त यौवनां दृष्ट्वा परिचारकैरेवेयं भुज्यते इति कश्चित्कश्चिद्वदति ईषदिति अङ्गै-रवयवैः पक्षे गुणभूतैः परिचारकैः नवयौवना तन्वी वापीव चिरं निषेव्यते

सेव्यत इत्यर्थः शिशिरे गतमात्र एववसन्ता दावेवेत्यर्थः ईष द्ववशेषजडिमा-ईषद्वशिष्ट शैत्यावापी सुरतजाड्य लेशशालिनीनायिकाच्च तथाचयथाएतैः परिचारकैः वसन्तारम्भादेव वापी सेव्यते तथा वसन्तारम्भात् प्राप्तयौवनेयमपि एतैरेव भुज्यत इति वाक्यार्थः यद्वा वसन्तारम्भे सम्यगारब्धयौवनां नायिकां यौवनाज्ञानेना पीडयन्तं नायकं जातं यौवनमस्या भयस्य लेशमात्रं वर्त्तते तदपि वसन्तसम्पादितकामाधिक्येन शीघ्रमेव गमिष्यति एवञ्च यथा वसन्ते वापी प्रवेशसमये शैत्योपलब्धिं कारयति पश्चान्न किञ्चिदेवमेवेयमपि रतारम्भे साध्वसादिकं व्यञ्जयन्ती पश्चात्क्रमेण सुखमेव ज्ञास्यति दिने दिने अधिकमेव विधातव्यमिति नायिकासखी प्रौढ़ा काचिदाह ॥११५॥

इति महोपाध्यायसच्चलविरचिते रसप्रकाशे ईकारव्रज्या समाप्ता ॥

**उल्लसितभ्रूधनुषा तव पृथुना लोचनेन रुचिराङ्गि ॥**
**अचला अपि न महान्तः के चञ्चलभावमानीताः ॥११६॥**

स्वदोषेण कोपितो मानी नायकः कथमायास्यतीति चिन्तितां सखीं सख्याह रुचिराङ्गि सर्वावयवसुन्दरि पृथुना आकर्णगेन पक्षे वेणुपुत्रेण पृथुनाम्ना राज्ञा लोचनेन नयनेन पक्षे सर्वदर्शिना उल्लसितं भ्रूस्वरूपं धनुर्यस्मिन् तेन पक्षे उल्लसितभ्रूसदृशं धनुर्य्यस्य तेन राज्ञा महान्तो बहुगुणशालिनः पक्षे महत्परिमाणाः अचला अपि धीरा अपि पक्षे स्थिराः पर्वता अपि इत्यर्थः के चञ्चलभावं चञ्चलतां न नीताः न प्रापिता अपितु सर्वे तथाच यथा पृथुना राज्ञा धनुःकोट्या पर्वता उत्सादिताः पृथिवी समा कृता तथात वैकेनापि नेत्रेणातिसुन्दरेण धीरा अपि विह्वलाः कृताः लोचनमेव तव पृथुसदृशं सर्वाङ्गसौन्दर्य्यं किं वक्तुं शक्यमतः सर्वाङ्गसौन्दर्य्यवेत्ता तव मान्यपि नायकः सहज एवागमिष्यति त्वया प्रयासो न कर्त्तव्यः सर्वं मयाज्ञायत एवेति भावः ॥११६॥

**उपनीय यन्नितम्बे भुजङ्गमुच्चैरलम्भि विबुधैः श्रीः ॥**
**एकः स मन्दरगिरिः सखि गरिमाणं समुद्वहतु ॥११७**

धनशालिन्याः कस्याश्चिन्नायिकाया दूती वारं वारं यथारुचि नानानायकसङ्गमं कारयन्त्यपि धनादिगर्वेणापराधं विनापि नायिकानिर्भर्त्सिता लब्धधनलेशा अन्यनायिकादूतीकृतार्था स्वसखीमाह उपनीयेति सखि कथनार्हे

मन्दरगिरिः प्रसिद्धः एकः केवलः नत्वन्यइत्यर्थः गरिमाणं गौरवं समुद्वहतु अनन्यशक्यकर्मकरणादितिभावः स कः यस्य नितम्बे कटके भुजङ्गमुपनीय संयोज्य विबुधैर्द्देवैः उच्चैरित्यर्थं श्रीः लक्ष्मीः अलम्भि लब्धेत्यर्थः ममतु अस्या नितम्बे वारं वारं विटं योजयन्त्या अपि किमपि फलं नास्ति प्रत्युत गर्वप्रदर्शनमङ्गीकरोति कुत्सितेयमितिभावः केचित्तु नायकानां सर्वगुणाधिको गौरवकारकश्च औदार्य्यरूपो गुणएव नान्य इति काचित्काञ्चित्प्रत्याह यथा नितम्बे भुजङ्गरोपणानुचितकारिणां देवानामाशामपूरयन्मन्दरगिरिः स एव गुरुभूतः सापराधेभ्योऽपि यथेष्टदानकरणादितिभावमाहुः ॥ ११७ ॥

उल्लसितलाञ्छनोऽयं ज्योत्स्नावर्षी सुधाकरः स्फुरति ।
आसक्तकृष्णचरणः शकट इव प्रकटितक्षीरः ॥११८॥

कृष्णाभिसारिकां प्रत्यधुना न गमनसमयइति सख्याह उल्लसितेति उल्लसित द्वितीयामपिसकलङ्काङ्कत्तुमुद्यतं लाञ्छनं कलङ्कचिह्नं यस्यायं मध्याकाशवर्त्ती सकलाङ्कत्वेन मध्याकाशस्थितत्वेन वान्यकलङ्करञ्जकश्चन्द्र इति सूच्यते ज्योत्स्नां कौमुदीं वर्दति अनेनान्धकारलेशोऽपि नेति व्यज्यते सुधाकरः अमृतदीधितिरनेनोन्मादकत्वेन नायिकाभिसारणसामर्थ्यं व्यज्यते स्फुरति प्रकाशते आशक्तः कृष्णस्य चरणो यस्मिन् स शकटः असुरविशेषः अन्ते वा तत्सदृश इत्यर्थः प्रकटितं भूमौ क्षीरं दुग्धं येन स इत्यर्थः चन्द्रमसोलाञ्छनस्य प्रकटक्षीरेण ज्योत्स्नाया उपमानोपमेयभाव. तथाचेदानीमभिसरणे कलङ्कोऽवश्यं भविष्यतीतिभावः क्लीवेऽनः शकटोस्त्रियामित्यमरः शरत्कालीनप्रव्यक्तकलङ्कचन्द्रस्वरूपवर्णन मेवैतदित्येके ॥ ११८ ॥

उपचारानुनयास्ते कितवस्योपेक्षिताः सखीवचसा ।
अधुना निष्ठुरमपि यदि स वदति कलिकेतवाद्यामि ।११९।

नायिकायां नायकौदास्यं संपाद्य मयैव नायको भोक्तव्य इतिविचार्य सख्या तथानुष्ठिते सति नायिका अन्यां सखीमाह उपचारेति कितवस्य धूर्त्तस्य सकलगमनागमनहेतुनिवारकत्वेन कितवत्वं सखी ममेतिप्रसिद्धा वास्तवं शत्रुरूपा या तस्या वचसा किमर्थमुपचारानुनयादिकं कर्त्तव्यं क्षणेन स्वयमेवागमिष्यतीति वचनेनैवेत्यर्थः विश्वस्तत्वादितिभावः तेनबहुधा कृता अपि उपचाराः स्रक्चन्दनादिदानरूपाः अनुनयाः ममैवदोषो न तवेति परितोषकव्यापारा उपेक्षिता

अकृता इत्यर्थः यद्वा ममापराधेऽपि तैर्वक्तुमशक्या उपचाराः अभिव्याप्यता-सूचकवचनादयः अनुनयाः पादपतनादयश्च नायककृता मयोपेक्षिता इत्यर्थः अधुनाप्रव्यक्ते ममदोषे सति निष्ठुरमपि परुषमपि प्रियकथने किं वक्तव्यमि-तिभावः यदि स नायको वदति कथयति तदा कलेः कलहस्य कैतवात् छलात् यामि तन्निकटं गच्छामि तेन कितवेन कलहकपटेन समागमशङ्कया तदपि नोच्यते केवलमौदासीन्येनैव स्थीयते तेनातोऽत्यन्तचिन्तिता त्वां पृच्छामि यथा ममदोषो न स्यात् खलरूपायाः सख्या अपि स्वकार्य्यसिद्धिर्न स्यात् तथा त्वमेव वद येन मम चिन्तापगमो भवेदितिभावः सख्यासक्तो मम नायक इदानीमुदासीन इति मया किमपि न कर्त्तुं शक्यते त्वमेवोपायं वदेतिसखीं नायिकाह इति वा ॥ ११६ ॥

उषसि परिवर्तयन्त्या मुक्तादामोपवीततां नीतम् ।
पुरुषायितवैदग्ध्यं व्रीडावति कैर्न कलितं ते ॥ १२० ॥

सखी नायिकापरिहासं करोति व्रीडावति लज्जावति विरोधलक्षणया निर्लज्जे इत्यर्थः तव पुरुषायितवैदग्ध्यं विपरीतरतकौशलं कैर्नकलितं ज्ञातमपितु सर्वै-रित्यर्थः सर्वनिकटे मयैव वक्तव्यमितिभावः ते त्किंभूतायाः उपवीततां नीतं यज्ञोपवीतस्थापितं यन्मुक्तादाम विपरीते नायकस्य दामताडनं माभूदित्याशये-नेत्यर्थः उषसि प्रातः तद्गृहाद्बहिरागत्य परिवर्त्तयन्त्याः सरलहारवत्स्थापयन्त्या इत्यर्थः प्रियेणरतङ्करोतीति सर्वासां सर्वैरेव ज्ञायते इदानीमनुक्रमेणेदानीं विपरीतेनेतितुत्वैवसर्वैर्ज्ञायते नान्यासामिति त्वमेवान्यापेक्षयात्यन्तनिर्लज्जासि मिथ्यैव लज्जां नाटयसीति भावः ॥ १२० ॥

उड्डीनानामेषां प्रासादोत्तरुणि पक्षिणां पङ्क्तिः ।
विस्फुरति वैजयन्ती पवनाच्छिन्नापविद्धैव ॥ १२१ ॥

सङ्केतस्थलं ग्रामसमीपवर्त्तिसौधं नायकः समागतस्त्वया शीघ्रञ्चलनी-यमिति नायिकां प्रति दूत्याह उड्डीनानामिति पक्षिणां पङ्क्तिः विन्यासवि-शेषविशिष्टः पक्षिण इति भावः एषां सर्वदा तत्र निवसतामुड्डीनानां खगगति-विशेषशालिनां प्रासादात् अन्यगमनरहितात् सौधादित्यर्थः पवनेन वायुना च्छिन्ना त्रुटितातएवापरिशुद्धभूम्यौपतिता वैजयन्ती पताका यथा तथेत्यर्थस्तथाच छिन्नवैजयन्ती यथा तत्र न गच्छति तथा उड्डीनाः पक्षिणोऽपि सर्वदा तत्र

त्रिता अपि इदानी न गच्छन्ति अतोऽन्यगमनाभावेन मायकागमनमेव निश्चि-नोमि त्वया चलनीयमितिभावः यद्वा तव धारणार्थं चिरं कश्चिद्गत्वोपरिष्टा-दस्तित श्राद्य त्वया न गन्तव्यमिति नायिकां दूत्याह ॥ १२१ ॥

उज्जागरितभ्रामितदन्तुरदलरुद्धमधुकरप्रकरे ।
काञ्चनकेतकि मा तव विकसतु सौरभ्यसंभारः ॥१२२॥

स्वसङ्गमेन दण्डकारिणीमतिसुन्दरीमन्योक्त्याकश्चिदाह उज्जागरिताः जागरणं प्रापिताः भ्रामिताः दन्तुराणि निम्नोन्नतानि कण्टकितानिच यानि दलानि पुष्पपत्राणि तैरुद्धा मधुकराणां भ्रमराणां प्रकराः समूहा यया तत्संबोधने सुवर्णकेतकि तव सौरभस्यसंभारः समूहः मा विकसतु माप्रव्यक्तो भवत्वि-त्यर्थः तथाचात्यन्तश्रमेण कदाचित्तव प्राप्तया बन्धुलुण्ठनाप्रतिष्ठादिकमवश्य भविष्यतीति किन्तव सस्नेहनिरीक्षणादिनेतिभावः ॥ १२२ ॥

उल्लसितभ्रूः किमतिक्रान्तं चिन्तयसि निस्तरङ्गाक्षि ।
क्षुद्रापचारविरसः पाकः प्रेम्णो गुडस्येव ॥ १२३ ॥

कथं सर्वोत्कृष्टं मम प्रेम भग्नमिति चिन्तयन्तीं सख्याह उल्लसिते उत्तोलिते भ्रुवौ यस्याः एतादृशी सती अतिक्रान्तमतीतं प्रेमभङ्गमितियावत् निस्तरङ्गे अक्षिणी यस्यास्तत्संबोधने कर्त्तृपदं संबोधनं च गुडस्येववन्ध्ये-क्षुविकारस्यानेनेक्षुविकारद्रवस्याग्रे क्रमेण वृद्धिर्दृष्टा न गुडस्य बन्ध्यत्वात्तथैव प्रेम्णोऽप्यग्रेऽसमीचीनविकारो न्यूनत्वनाशादिर्दृष्ट एवेति व्यज्यते पाकः पचनं पक्षे परिपूर्णता क्षुद्रा मधुमक्षिका तस्या अपचारेण निपातेन पक्षे क्षुद्रस्यांति खलस्य नीचस्य वापचारेणानुचितव्यापारेण विरसो वैरस्यादिसमर्थः पक्षे वैरस्यकर्त्ता इत्यर्थः तथाच बह्वीनामेतादृशप्रेमभङ्गो मया क्षुद्रेण दृष्ट इति किंचिन्तयेतिभावः क्षुद्रोन्वेषी मनः क्षुद्रं क्षुद्रा स्यान्मधुमक्षिकेति नानार्थः ॥ १२३ ॥

उद्दिस्य निस्सरन्तीं सखीमियं कपटकोपकुटिलभ्रूः ।
एवमवतंसमाक्षिपदाहतदीपं यथा पतति ॥ १२४ ॥

कस्याश्चित्सुरतौत्सुक्यं काचित्सखीमाह शयनकारिकां पतिसमीपागमनार्थ-मत्यन्तत्वरां कुरुषे इतिपरिहासशीलां सखीमुद्दिश्य त्वत्ताडनार्थमेवागच्छामि इतिमिथ्याकोपकुटिलभ्रूः सती निस्सरन्तीं शय्यासमीपात्किञ्चिदागच्छन्तीम्

एवमनेनप्रकारेणावतंसं भूषणम् आक्षिपत् सखीताडनार्थमितिभावः यथा आह्- तद्दीपं निर्वापितदीपं यथा स्यादेवं पतति पतितमभवदित्यर्थः कालसामान्ये लट् एवञ्चास्याः सखीसामीप्ये स्वामिगृहे क्षणमपि दुष्करमतएव झटिति सुरतार्थं मदुपरि कोपच्छलेन वीपमपातयदतो ऽनया साकमस्याः पतिगृहं कदापि शिष्टाचारार्थेन गन्तव्यमिति भावः ॥ १२४ ॥

उदितोऽपि तुहिनगहने गगनप्रान्ते न दीप्यते तपनः ।
कठिनघृतपूरपूर्णे शरावशिरसि प्रदीप इव ॥ १२५ ॥

मम शत्रुरतिदूरेऽस्ति काचिन्तेति मन्यमानं कञ्चन जनमन्योक्त्या कश्चिदाह उदितोऽपीति उदयगिरिमुपारूढोऽपि भानुस्सूर्य्यः न दीप्यते न प्रकाशते जगतां शैत्यादिनाशाय समर्थो न भवतीति भावः अत्रहेतुमाह गगनप्रान्ते गगनैकदेशे तुहिनेन गहने निबिडे सतीत्यर्थः तथाचानन्ततेजस्विन उदितस्यापि सूर्य्यस्य यथा भूतलसमीपवर्त्तिना सूर्य्यदेहवर्त्तिना तुषारेण दीप्तिहत्या न कार्य्यक्षमत्वं जायते तथान्येषां महतामपि तत्रालपस्य भवादृशस्य किंवक्तव्यमिति भावः यथा शीतेन प्रदीपशिखादूरवर्त्तिनापि घृतकाठिन्यमुत्पाद्यते तेजः शत्रुणे शरावस्य वर्धमानस्य शिरसि प्रदीप इव शिखेवेत्यर्थः किं भूते शैत्यकठिनं घृतं तत्समूहपूरिते दूरवर्त्तिनापि शत्रुणा स्वभोज्यभागून भवतीति सर्वदा सर्वत्र शत्रुनिवारणं कर्त्तव्यमितिवाक्यार्थः अथवा स्वल्पोऽप्यपकारः शत्रोः कर्त्तव्य एव यथा सूर्य्यस्य क्षणं दीप्तिहरणं हिमं करोति दीपस्येवेति अत्र गगनप्रान्ते न दीप्यते इत्यर्थः अथवा स्वल्पमपिशत्रुसन्निधानं महदल्पयोरपि भेदं विनाश्य साम्यमेव करोति यथा सूर्य्यप्रदीपयोरिति वाक्यार्थः वस्तुतः तुहिनगहनेऽपि गगनप्रान्ते उदितो भानुर्न दीप्यते अपितुदीप्यत एव कठिनघृतपूरपूर्णशरावशिरसि यथा प्रदीपो न दीप्यते तथा सूर्य्योऽपि न दीप्यते इति नेत्यर्थः व्यतिरेकालङ्कारः तथाच महतां शत्रुदोषोऽपि न भवति किन्तु अल्पीयसां भवत्येवेति सारम् ॥१२५॥

उद्गमनोपनिवेशनशयनपरावृत्तिचलनवलनेषु ।
अनिशं सं मोहयति मां हृल्लग्नः स्वास इव दयितः ॥१२६॥

काचित् सखीं वदती उद्गमनेति दयितः परदेशवर्त्ती मामनिशं वारम्वारं सर्वदेत्यर्थः मोहयति तत्तत्कार्य्यासमर्थां करोति इत्यर्थः हृदि लग्नः हृदयस्थितः श्वास इव यथा हृदयवरुद्धः श्वासः सर्वेषु कार्य्येष्वसामर्थ्यं करोति जीवनस-

न्देहश्च करोतितथा दयितोऽपि यदि शीघ्रं नायास्यति तदा प्राणेऽपिसन्देह एवेति भावः उद्गमने उत्थाने उपनिवेशने उपवेशने शयने पार्श्वपरिवर्त्तने चलने गमने वलने जृम्भादिकरणे एषु संमोहयतीत्यन्वयः ॥ १२६ ॥

उज्झितसौभाग्यमदस्फुटयाञ्चाभङ्गभीतयोर्यूनोः ।
अकलितमनसोरेका दृष्टिर्दूती निसृष्टार्था ॥१२७॥

सर्वोत्तमयोस्समवयस्कयोः प्रथमारब्धप्रेमव्यापारयोरनयोर्दूतीं विनापि नेत्ररूपा निसृष्टार्था दूती प्रेमसम्पादनमकरोदिति काचिद्वदति उज्झितेति यूनोः एका एकीभूता सुरतारम्भसमाप्तिपर्य्यन्तसुखानुभवबोधिका दृष्टिर्निसृष्टार्था परानपेक्ष-मुभयाभिप्रायसिद्धकार्य्यकारिणी दूती जातेति शेषः किंभूतयोः यूनोः उज्झित-स्त्यक्तः यस्सौभाग्यमदस्सौन्दर्य्यगर्वः भाग्यवत्तादिगर्वः परस्परं रूपभाग्यादिदर्शनेन समापेक्षया तत्सौभाग्यमेवाधिकमिति ज्ञानेन गर्वाभावः तेन स्फुटा व्यक्ता या याञ्चा सङ्गमप्रार्थना तस्या यो भङ्गः असिद्धरूपस्तेन भीतयोरित्यर्थः यथा ममाभिलाषा तथा नायकस्य किमर्थं यथा ममाभिलाषा तथा नायिकायाः किमर्थं भविष्यतीति शङ्कयेति भावः अकलिते अपरिशीलिते मनो ययोस्तयोरित्यर्थः अतएवभीतिरित्यर्थः उभयोर्भावमालोक्य परापेक्षाविवर्जितं स्वबुद्ध्या कुरुते कार्य्यं निसृष्टार्था तु सा भवेदितिप्राचीनोक्ता यद्वा दूतींविनापि विदग्धयोः प्रेमसम्पादनं भवतीति काचिद्वदतिवस्तुनस्तु प्रेमाभिव्यक्तिखिन्नां सखीं सखी प्रेमस्वभावोऽयं यदभिव्यक्तं भवत्येव कथमन्यथाऽनयोर्दूतीरहितमपि प्रेम ज्ञातम-स्माभिरतो न चिन्ता कर्त्तव्येत्याह ॥ १२७ ॥

उत्तमभुजङ्गसङ्गमनिष्पन्ननितम्बचापलस्तस्याः ।
मन्दगिरिरिव विबुधैरितस्ततः कृष्यते कायः ॥ १२८ ॥

बहुनायकसङ्गताणीयं प्रेमसौपत्यशिक्षके सर्वोत्कृष्टरतिकारके खिङ्गएवासक्तेति काचित्काञ्चिदाह उत्तमेति तस्याः कायः देहः विबुधैः विशेषविद्भिः पण्डितैरित-स्ततः स्वस्वाभिमुखं कृष्यते आकृष्टः क्रियते नच कदापि स्थिरः क्रियत इत्यर्थः तथाच बुद्धि वैदग्ध्यादिवशात्कदाचित्सङ्गमेऽपि उत्तमखिङ्गवत्सुरतासामर्थ्यान्न स्थिरा भवति विबुधेषु किन्तूत्तमभुजङ्गएवासक्तेति भावः देवैः मन्दराचल इव कृष्यत इत्यन्वयः द्वयोःसमानधर्ममाह उत्तमः दीर्घलिङ्गित्वदृढाघातित्वचिरमैथुन-कारित्वगुणसम्पन्नः भुजङ्गः खिङ्गस्तस्य सङ्गमः संभोगस्तेन निष्पन्नं प्रव्यक्तं

सम्यगुत्पन्नं वा,यन्नितम्वस्य कटिपश्चाद्भागस्य चापलं चाञ्चल्यं यस्य स इत्यर्थः मन्दरपक्षे उत्तमभुजङ्गसङ्गः वासुकिसर्पसम्वन्धस्तेन निष्पन्नं नितम्बस्य कटकस्य चापलं यस्य स इत्यर्थः तथाच यथा दृढसम्बन्धवासुकिप्रसादादेव मन्दर आकृष्यते वासुकिसम्बन्धएव तिष्ठति तथा खिङ्गप्रसादादेवाकृष्यते इयमेतैस्तथापि खिङ्गएवानुरक्ता नतु विबुधेषु तदुक्तं दीर्घलिङ्गदृढाघातीचिरमैथुनकारकः स एव वल्लभः स्त्रीणांन शूरो न च पण्डित इत्यादिकामशास्त्रे यद्वा महतामपि दुष्टसङ्गतिरभीष्टकार्य्यकारिणीत्याह तथाच समयविशेषे सापि कर्त्तव्येतिभावः ।१२८।

**उपनीय कलमकुडवं कथयति सभयं चिकित्सके हलिकः ।**

**शोणं सोमार्द्धनिभं वधूस्तने व्याधिमुपजातम् ॥१२९॥**

निर्भीकेन त्वया अस्याध्यक्षेऽपि यदृच्छयागन्तव्यामिति काचिन्नायकं वदति उपनीयेति कलमकुडवं शालिपूर्णपात्रविशेषं कुडवपरिमितं धान्यमिति वा उपनीय समीपमानीय सभयं न जीविष्यतीति भयसहितं यथा स्यादेवं हलिकः पशुतुल्यो गृहपतिः चिकित्सके वैद्ये कथयतीत्यन्वयः शोणं रक्तं चन्द्रार्धसदृशं व्याधिमुपजातमुत्पन्नं तथाच तव दन्तनखक्षतमपिन जानाति अयं पशुरेवाभीतेन त्वया सदागन्तव्यमिति भावः ॥ १२९ ॥

**उन्मुकुलिताधरपुटे भूतिकणत्रासमीलितार्द्धाक्षि ।**

**धूमोऽपि नेह विरम भ्रमरोऽयं श्वसितमनुहरति ॥१३०॥**

उपपतिदत्तदन्तक्षतशालिनीं क्षतपीड़या सङ्कुचिताधरपुटामुपपतिसंगमसुखध्यानेनार्द्धमीलितनयनां सायंकालेऽग्निस्थापनस्थलस्थितामशङ्कं पश्यन्तंनायिकापतिं बुद्ध्वा तमदृष्टमिवकृत्वा वृत्तनायिकासुरतसंगोपनार्थं चतुरा सखी नायिकामाह उन्मुकुलितेति उद्गतकलिकावत्कृतमधरपुटं यया तत्संबोधने तथाच नखक्षतपीडया मुखसंकोचः किन्त्वग्निप्रज्वलनार्थं त्वया मुखसंकोचः क्रियत इति व्यज्यते भूतेर्भस्मनः कणानामक्षिनिपातत्रासेन मुकुलिते अर्धाक्षिणी यस्यास्तत्संबोधने तथाचभस्मनिपातभीत्यार्द्धनयननिमीलनं सद्यःकृतसुरतसुखध्यानेनेतिभावः क्षतगोपन प्रकारमाह हेसखि विरम अग्निप्रज्वलनादित्यर्थः इह स्थाने धूमोऽपि न का कथाग्नेरित्यपेरर्थः अग्निज्वलनं नभविष्यत्येव वृथाश्रमं करोषीतिभावः ननु धूमोदृश्यत एव उपरि सञ्चरन् किं निवारणं करोषीत्यतआह अयमुपरि मुखसमीपे सञ्चरमान् भ्रमरः न धूम इत्यर्थः ननु किमर्थमागतो भ्रमर इत्यत आह

तव श्वसितं सुखपवनं पद्मिनीत्वेन कमलगन्धमनुसरति । श्वसितागमनस्थले अधरप्रदेशे उपविश्यगच्छतीत्यर्थः तथाच नायं धूमः नवा तव नयनयोः कटुतामुत्पादयति किन्तु • पद्मगन्धिश्वसितानुगतभ्रमरकृताधरक्षतपीड़यातवभ्रूममात्र मेवञ्चै तद्दर्शनेन तव प्रियः किं किंन करिष्यतीतिव्यञ्जनया सर्वगोपनमकरोस्सखीतिवाक्यार्थः यद्वा कदाचित्परिचारिकागणे कुत्रचिद्गते सति स्वयमेवा ग्निप्रज्वलनोद्यु क्तान्तदर्नभिज्ञां पद्मिनीं चुम्बनसुरतकालीनवन्मुखनयनावस्थां गुप्तप्रियदृष्टां नायिकां सखी परिहसति तथाचाग्निप्रज्वलनं त्वया कदापिन कृतं नवाज्ञायते प्रत्युत प्रियेण विचित्रावस्थां दृष्ट्वा हस्यते भ्रमरदंशजनिताधरक्षतेजाते किमियंसमाधास्यतीतिभावः ॥ १३० ॥

उपरि परिप्लवते मम बालेयं गृहिणि हंसमालेव ।
सरस इव नलिननाला त्वमाशयं प्राप्य वससि पुनः ।१३१।

बालासंभाषणालिङ्गनकुपितां गृहिणीं प्रसादयन्नायक आह उपरीति गृहिणि दत्तसर्वगृहाधिकारिणि तथाच सर्वं त्वदधीनमेव केयं वराकिका बालेत्यर्थः इयं त्वदेकशरणा बाला ममोपरि न हृदि परिप्लवते आलिङ्ग्य तिष्ठतीत्यर्थः ममाग्रे बहुधा सञ्चरति कदाचिदालिङ्गनमपि करोतीतिभावः पक्षे जलोपरिसञ्चरतीत्यर्थः हंसस्य माला पङ्क्तिरिवेत्यर्थः त्वं पुनः त्वमेवाशयं हृदयं प्राप्य सम्यक् गृहीत्वा वा वससि सदा तिष्ठसि नलिननाला कमलनाला यथा सरसः सरोवरस्याशयं मूलं प्राप्य सदा तिष्ठति हंसामाला उपर्य्येव तथेत्यर्थः तथाच त्वमेव प्रेयसी सा तु मम विवाहितामात्रमिति भावः ॥ १३१ ॥

उत्कम्पघर्म्मपिच्छिलदोःसाधिकहस्तविच्युतश्चौरः ॥
शिवमाशास्ते सुतनु स्तनयोस्तव चञ्चलाञ्चलयोः ॥१३२॥

समीचीनं नायकं कटाक्षयन्तीं नायिकां स आह उत्कम्पीति सुतनु अनेन स्पृहणीयत्वं ध्वनयते चौरस्तव स्तनयोः शिवं कल्याणमा शास्ते इच्छति चञ्चल मिलस्ततोगतमञ्चलमाच्छादकं वस्त्रं ययोस्तयोरित्यर्थः प्रव्यक्तयोरिति भावः उत्कम्पेनोन्नततरस्तनदर्शनजनितेनोत्कृष्टेन सात्विकविकारेणेत्यर्थः उपगतकम्पयोस्तयोरितिवार्थः उत्कम्पीतिपाठे उत्कम्पिनौघर्मपिच्छिलौच यौ हस्तावित्यर्थः दुःखेन साध्यतेऽधीनः क्रियते दुष्कर्मनिरतत्वात् राधसाधसंसिद्धाविति धात्वनुसारात् इति दुःसाधश्चाण्डालविशेषः तेन निर्वृत्तमित्यत्र निर्वर्त्तनस्य सम्बन्धेऽर्थतःपर्य्य-

वसानेन दौस्साधनिकशब्दस्य दुस्साधसम्बन्धिवाचकत्वेन उत्कम्पिनौ घर्मपिच्छिलौ यौ दुस्साधहस्तौ तयोर्विच्युतः पलायितश्चौर इत्यर्थः तथाच चौरधारणसमये दुस्साधस्य तव जारस्य यदि अञ्चलशून्योन्नतकुचदर्शनेन कम्पघर्माभ्यां श्लथता पिच्छिलताच न स्यात्तदा कथं चोरपलायनं स्यादतः स्वजीवनहेतुप्रव्यक्तयोस्तवस्तनयोः कल्याणमिच्छति चौरस्त्वन्तु चाण्डालसक्ता न मद्योग्या किं कटाक्षकरणेनेतिभावः ॥ १३२ ॥

उत्क्षिप्तबाहु दर्शितभुजमूलं चूतमुकुल मम सख्या ।
आकृष्यमाण राजति भवतः परमुच्चपदलाभः ॥१३३॥

नायिकासखी नायकमन्योक्त्याह उत्क्षिप्तेति चूतमुकुल आम्रकोरक मुकुलपदेन भ्रमरासक्तत्वं तेन नायके अन्यस्त्रीसंगराहित्यं तेनच सख्या अतिस्पृहणीयत्वन्नायके व्यज्यते मम सख्या एवञ्च सखीवृत्तं मया सर्वं ज्ञायते भवता सङ्कोचो न कर्त्तव्यः सर्वं वक्तव्यमिति व्यज्यते आकृष्यमाण नम्रीकृतेत्यर्थः पक्षे स्वाभिमुखेत्यर्थः उत्क्षिप्त गतः बाहुः यत्राकर्षणे दर्शितं भुजमूलं यथा स्यादेवं पक्षे मोट्टायितचेष्टां विकाराधायकबाहुमूलदर्शनंचेत्यर्थः भवतः मुकुलस्य पक्षे नायकस्य परं केवलं राजति शोभते उच्चपदस्य ऊर्ध्वदेशस्य लाभः प्राप्तिः शाखाकर्षणे स्वाभाविकस्थलादपि ऊर्ध्वं गच्छति शाखेति लोके सिद्धं पक्षे उच्चपदस्य सकलनायकोत्तमत्वस्य लाभः केवलं शोभत इत्यर्थः तथाच यथा त्वमन्यनायिकासक्तिशून्यआरब्धसमीचीनयौवनस्तथेयमपि मम सखी स्वामिमात्रासक्ता तवभाग्यात् त्वय्यासक्ता जातेति निश्चितमिति त्वमपिस्वाभिप्रेतं वद मया सर्वं सम्पाद्यतं त्वदभिप्रेतमिति भावः ॥ १३३ ॥

उच्चकुचकुम्भनिहितो हृदय चालयति जघनलग्नाग्रः ।
अतिनिम्नमध्यसंक्रमदारुनिभस्तरुणि तव हारः ॥१३४॥

त्वां दृष्ट्वाऽतीव सस्पृहोऽस्मीति कश्चिन्नायिकां वदति उच्चेति तरुणि तव हारः मुक्तादि दाम हारपदेन स्वाभाविकमनोहारित्वं व्यज्यते मम हृदयं मानसं चालयति सञ्चारयतीत्यर्थः उच्चौ यौ कुचौ तयोः स्थापित इत्यर्थः अनेन दर्शनयोग्यत्वं कथ्यते जघने लग्नमग्रं यस्य जघनपर्य्यन्तगामीत्यर्थः अनेनहारे संकोचशून्यत्वं तेन दौत्ययोग्यता व्यज्यते अतिनिम्नं मध्यस्थलं यस्य प्रदेशस्य संक्रम उभयपार्श्वसम्बन्धस्तदर्थं यद्दारु काष्ठं तन्निभस्तत्सदृश इत्यर्थः तथाच

यथानिम्नोन्नते मार्गेपथिकगमनागमनार्थं पुण्यवता काष्ठं ध्रियत एवमेव सहृदय गमनार्थं जघनवक्षोरुहान्तराले नाभिदेशेऽतिनिम्ने हारः स्थापितस्त्वयाऽतो ज्ञायते अवश्यमभिलाषापूर्त्तिर्भविष्यतीति भावः ॥ १३४ ॥

उल्लसितशीतदीधितिकलोपकण्ठे स्फुरन्ति तारौघाः ।
कुसुमायुधविधृतधनुर्न्निर्गतमकरन्दविन्दुनिभाः ॥ १३५ ॥

सुरततृप्त्या घर्म्मविन्दुसमेतं नायिकाकपोलनखक्षतं नायिकासखी वर्णयन्ती नायकमाह उल्लसितेति शीतदीधितेश्चन्द्रस्य कलायाः समीपे स्फुरन्ति तारकासमूहाः शोभमानाः कुसुमायुधेन मदनेन दृढमुष्टिना धृतं यद्धनुस्तन्निर्गतपुष्प रसविन्दुसमूहसदृशाइत्यर्थः शीतदीधितपदेन मुखस्य कलापदेन कलापोनखक्षतस्य तारापदेन घर्म्मविन्दूनां तत्तत्साद्दृश्यं कुसुमायुधविधृतमित्यनेनातिपीड़ितत्वं धनुष्पदेन सुकुमाराङ्गित्वं व्यज्यते तथाचातिश्रान्ता मम सखी क्षमा विधेयेति भावः यद्वा निकटस्थनायकमाश्वासयन्ती दूती श्रावयति चन्द्रान्ते नायिकातवसमीपमागमिष्यति कलापदेनशीघ्रास्तमनयोग्यत्वं तेन शीघ्रमीलनं तेनचाश्वासः यद्वा कलासमीपे नक्षत्रप्रकाशेन कलामालिन्यं तेनान्धकारस्तेनाधुनैव निर्भयं संकेतस्थलगमनमिति दूती नायिकामाह द्वितीयाचन्द्रं दृष्ट्वा विरहिण्युक्तिः सखीं प्रतीत्येके ॥ १३५ ॥

उपनीय प्रियमसमयविदं च मे दग्धमानमपनीय ।
नर्म्मोपक्रम एव क्षणदे दूतीव चलितासि ॥ १३६ ॥

नायिका मानपरित्यागं शोचति उपनीयेति क्षणदे निशे उत्सवदे वानायकसमागमकारित्वादित्याशयः नर्म्मोपक्रमेसुरतपूर्वकृपरिहासाद्युपक्रमे सत्येव चलितासि गतासि प्रातःकालो जातइतिभावः नर्म्मापेक्षणइतिपाठः न सरसः नर्म्मापेक्षणसमये दूतीपलायनानौचित्यात् किंकृत्वा गतासि असमयविदं समयज्ञानशून्यं प्रियं ननु पतिमुपनीय प्रभाते आनीय प्रियपदेन दुर्ल्लभत्वमुपेक्षणीयत्वाभावश्च द्योत्यते मे मम मानममिलषितसमये नायकानागमनजनितमसमयविदं कोवाप्रमावसरइतिज्ञानशून्यम् अतएव दग्धं हतमित्यर्थः दग्धमित्युक्तिविशेषः स्त्रीजनानामप्रियत्वसूचकः अपनीयदूरीकृत्य क्षणदे दूतीव चलितासीत्यन्वयः तथाच यथा दूती नायकमानीय नायिकामानमपनीयक्रीड़ोपक्रमं दृष्ट्वान्यत्र गच्छति नतुपरिचारिका सखीवाग्रिमं सर्व्वं संपादयति तथात्वमपि गता मानभङ्गोपिजातः फलं न किमपीति वाक्यार्थः ॥ १३६ ॥

उत्तमवनितैकगतिः करीव सरसीपयः सखीधैर्य्यम् ॥
आस्कन्दितोरुणात्वं हस्तेनैव स्पृशन् हरसि ॥१३७॥

भवत्याः सखी मानिनी कदापि न मया दृष्टेति वादिनं नायकं नायिकासख्याह उत्तमेति त्वं हस्तेनैव करेणैव पक्षे शुण्डादण्डेनैव सखीधैर्य्यमस्मत्कारितमपि सखीधैर्य्यं हरसि दूरीकरोषि पक्षे पिबतीत्यर्थः स्पृशन् स्पर्शमात्रं कुर्व्वन्नालिङ्गनादिकं विनैवेत्यर्थ. आस्कन्दित आक्रान्त ऊरुर्य्येनाजानुगामिनेत्यर्थः पक्षे जङ्घावलम्बिनेत्यर्थः उत्तमा सर्व्वोत्कृष्टा या वनिता स्त्री तस्याः एकः मुख्यः गतिः शरणमित्यर्थः सरसी पयो जलं करीव हस्तीवेत्यर्थः तथाचातिसुन्दरीत्वय्यत्यन्तासक्तामानञ्च करोतीतिभावः ॥१३७॥

ऊढाऽमुनाऽतिवाह्य पृष्ठे लग्नापि कालमचलाऽसि ॥
सर्वंसहे कठोरत्वचः किमङ्गेऽपि कमठस्य ॥१३८॥

जरत्तरपतिकां सख्यादिशनाग्रहेणाप्यनङ्गीकृतपरपुरुषभोगां पतिकृतानादरखिन्नांनायिकामाग्रहकर्त्री सख्यन्योक्त्याह ऊढेति सर्व्वसहे धरणि पक्षे सर्व्वसहन योग्ये जठरपत्न्यौ उभयकुलानास्वायोऽन्दत्वादितिभावः विवाहेऽपि संतानाभावेन यावज्जीवं सर्व्वसहनं तवोचितमेवेति ध्वन्यते अमुना कूर्म्मेण पक्षे वृद्धेन पत्योढ़ा पृष्ठेन धृता पक्षे विवाहिता काले बहुयुगान्तं पक्षे यौवनकालमतिवाह्य गमय पक्षेवृथागमय्येत्यर्थः हेतुमाह अचलासि अन्येन कमठभिन्नेन चालयितुमशक्यासि अचलेतिसार्थकनामासीत्यर्थः पक्षे पतिव्रतास्यस्मत्कथनेनापि परपुरुषभोगविमुख्यसीति यावत् पृष्ठे कूर्म्मपृष्ठे पक्षे वृद्धस्य सर्वदा नायिका विमुखसुप्तत्वेन तत्पृष्ठमात्रलग्नापीत्यर्थः अपिरवधारणे पृष्ठएव लग्नेत्यर्थः अत्र हेतुमाह कठोरत्वच काष्ठसदृशत्वङ्मयस्य पक्षे जरत्तरत्वेन कठिनत्वचः कमठस्य कूर्म्मस्य जराक्रान्तास्याङ्गे अधःप्रदेशेपि पक्षे क्रोड़े अपिना पृष्ठादिसर्व्वशरीरसंग्रहः किमस्तिविशेषः तथाच यथा कामठस्यसर्व्वाङ्गं तथास्यवृद्धस्यापीति साम्मुख्ये. वैमुख्येन च फलं तुल्यमत्र किमर्थं खेदः पातिव्रत्यविरोधात् तथापि यदि खिन्नासि तदामदुक्तएव प्रकारो नान्यइति भावः सर्वंसहा वसुमतीत्यमरः ॥१३८॥

ऊढा मणिमयशिरसा रसेवशेनापि भोगिना यत्त्वम् ॥
तत्तव सर्वसहनजः सुकृतसमूहः समुल्लसति ॥१३६॥

मुखरतां विहाय नायके क्षमाशालिन्या एवोत्तमो नायकोऽधीनो भवतीति बालां शिक्षयतुमन्योक्त्या काचिज्जरत्याह ऊढ़ेति रसे धरणि रसे जले श्रृङ्गारे चेत्यर्थः इतिवा भोगिना फलवता भोगशालिना बहुपत्नीकेन चेत्यर्थः यत्व-मूढ़ा धृता विवाहिताचेत्यर्थः अत्र नायकपक्षे ऊढ़ापदेन सर्व्वदा नायकाधीनत्वं नायिकायां लक्ष्यतेऽतो न पूर्व्वोत्तरविरोधः मणिमयानि शिरांसि यस्य तेन दिव्यमुकुटादिशालिना नायकेनचेत्यर्थः भोगिपदेन बहुवल्लभत्वं मणिमयेत्यादिना महाधनत्वं व्यज्यते अवशेनापि परिश्रान्तेनापि पक्षे तव शुभा दृष्टेनेत्यर्थः तत्र-नागधृतत्वं श्रेष्ठनायकविवाहितत्वं च सर्व्वसहनजः सर्व्वनिन्दितमलमूत्रादिसह-नजः नायकदुश्चेष्टितसहनजश्चे त्यर्थः पुण्यनिकरः शोभते इत्यर्थः तथाच यथाऽस्याः सर्व्वसहनपुण्येनोत्तमनायकवशीकरणं नान्यासां सपत्नीनां तथा स्वस्व-नायकवशीकरणार्थम्भवतीभिरपि सर्व्वसहनं कर्त्तव्यमितिभावः रसा विश्वम्भरेत्यर्थः नायिकाचेयं स्वकीयेमौ श्लोकौ प्रक्षिप्तावित्येके प्रथमः पठितः न द्वितीय इत्य-परे द्वावपि पठिताविति वयम् ॥ १३६ ॥

## इति श्री सचलविरचिते आर्य्यासप्तशतीविवरणे रसप्रकाशे ।

## ॥ ऊकारव्रज्या समाप्ता ॥

ऋजुना निधेहि चरणौ परिहर सखि निखिलनागराचारम् ॥
इह डाकिनीति पल्लीपतिः कटाक्षेऽपि दण्डयति ॥१४०॥

अस्थाने वैदग्ध्यमाचरन्तीं काञ्चित्प्रति काचिदाह ऋजुनेति हेसखि अनेनोपदेशार्हत्वं व्यज्यते चरणौ ऋजुना सरलतया निधेहि पृथिव्यां धारय वैदग्ध्ययुक्तकुटिलन्यासं त्यजेतिभावः सकलं नागराचारं नागरिकविदग्धनाय-कमनोहरिणीं चेष्टां परिहर त्यजेत्यर्थः इह पल्ल्यां नागररहितायां पल्लीपतिः पशुतुल्यः कटाक्षेपि वक्रनिरीक्षणेप्यपिना समीचीनवस्त्रालङ्करणहास्यादिपरिग्रहः डाकिनी मारणकर्त्रीतिबुद्ध्येतिभावः दण्डयति दण्डं करोतीत्यर्थः तथाच नेत्रचेष्टा-मात्रेण दण्डयतिपल्लीपतिरतोत्रकिञ्चिदपि वैदग्ध्यकरणन्न केवलं निष्फलमपित्व नर्थकारकमप्यतः पल्लीं विहाय महानगरे वैदग्ध्यकरणमुचितमिति भावः ॥१४०॥

ऋषभोऽत्रगीयतइतिश्रुत्वास्वरपारगावयंप्राप्ताः ॥
कोवेदगोष्ठमेतद्गोशान्तौविहितबहुगानम् ॥१४१॥

गानशास्त्रवेत्ता कश्चिद्वदति ऋषभइति ऋषभः स्वरविशेषः अत्र गोपग्रामे गीयते अत्रत्यैस्सम्यग्गीयते इतिश्रुत्वा बहुमुखात् स्वराणां सप्तानां पारगा वयं प्राप्ताइत्यर्थः गोशान्तौ वृषभशान्त्यर्थविहितं कृतं बह्वनेकप्रकारकं गानं यत्र एदेतादृशमिदं गोष्ठं गोस्थानमेतदितिकोवेद जानातीत्यर्थः बहुमानमिति पाठे विहितं बहुमानं पूजनं यत्र तदित्यर्थः तथाच ऋषभशब्दस्य स्वरवाचित्वमेवावगतं नतु वृषभवाचित्वमपि प्रथमं जातमतोऽस्माकमेव दोषः नत्वेषां गोपालानामित्यर्थः ऋषभो वृषभो वृषइतिः गोष्ठं गोस्थानकं तत्त्वित्यमरः ॥१४१॥

इतिसचलविरचिते रसप्रकाशे ऋकारव्रज्या समाप्ता ॥

एको हरः प्रियाधरगुणवेदी दिविषदः परे मूढाः ॥
विषममृतं वा सममिति यः पश्यन् गरलमेव पपौ ॥१४२॥

कश्चिदधरं स्तौति एकइति हरः शिवः एकः मुख्यः केवलो वा प्रियाधरस्य ये गुणा माधुर्य्यादयस्तेषां तत्त्वज्ञानवानित्यर्थः अधररसवेदीतिपाठे रसो मधुइत्यर्थः अपरे दिविषदो देवा अमृतलोभेन समुद्रमथनोद्यताः मूढाः अधरामृतयोर्म्मध्ये कुत्राधिकं माधुर्य्यमिति विवेकशून्या अतएवाधरं पीत्वाप्यमृतपाने सयत्नाइतिभावः यः शिवः विषं कालकूटममृतं पीयूषं वा समं प्रियाधरभिन्नत्वात् प्रियाधरमाधुर्य्यशून्यत्वात्तुल्यमित्यर्थः पश्यन्जानन् गरलमेव विषमेव पपौ पीतवान्नत्वमृतं किञ्चिन्मधुरं तथाच यदि मधुररसःपेयस्तदा प्रियाधररस एव नान्यइति परोपकाराय विषपानमेव शिवेन कृतमितिभावः ॥१४२॥

एष्यति मा पुनरयमिति गमने यदमङ्गलं मयाकारि ।
अधुना तदेव कारणमवस्थितौ दग्धगेहपतेः ॥ १४३ ।

काचिद्दुष्टा जारपतितोषार्थं पतिमरणमिच्छन्ती जारमाह एष्यतीति अयं तव शत्रुरूपः पतिः न पुनरागमिष्यतीति हेतोः अस्य गमने विदेशयात्रासमये यदमङ्गलमगस्त्यनामग्रहणाद्यमङ्गलं मयाऽकारि कृतं जातमुत्पन्नन्तदेवामङ्गलमवस्थितौ यात्रांत्यक्त्वा गृहावस्थाने दग्धस्य दुष्टस्य गेहपतेः पत्युः कारणमित्यर्थः तथाच पतिमारणोपायः कर्त्तव्यइतिभावः ॥ १४३ ॥

एकैकशो युवजनं विलङ्घमानाक्षनिकरमिव तरला ।
विश्राम्यति शुभग त्वामङ्गुलिरासाद्यमेरुमिव ॥ १४४ ॥

सर्व्वानुपेक्ष्य त्वय्यासक्ता मम सखीति काचिन्नायकमाह एकैकशः इति प्रत्येकं युवजनं तरुणमनेनस्पृहणीयत्वं व्यज्यते विलङ्घमानान गणयन्तीत्यर्थः पक्षे विलंघ्य गच्छन्तीत्यर्थः अक्षनिकरमिव मालासमूहमिवानेन यूनां समानत्वं अगणनीयत्वञ्च व्यज्यते तरला त्वदर्थं चञ्चलेत्यर्थः पक्षे गुटिकाग्रहणार्थं चञ्चले त्यर्थः हे शुभग सकलनायकसमानत्वेपि मम सख्यास्त्वय्येवासक्तत्वादितिभावः त्वां विश्राम्यति स्थिरा भवतीत्यर्थः पक्षे पुनर्जपार्थ मन्यंनाश्रयतियथा मालामेरुमासाद्याङ्गुलिस्तथेत्यर्थः तव लंघनं न करोतीति समुदायार्थः तथाचानेकनायकालापादिना त्वया शंका न कर्त्तव्या तेषांतावदेव सभोगस्तुत्वय्यैवेतिभावः एकैकशइति एकैकशो ददातीत्यादिवाप्यसिद्धमेव ॥ १४४ ॥

एकः स एव जीवति हृदयविहीनोपि सहृदयो राहुः ।
यः सकललघिमकारणमुदरं न बिभर्त्ति दुष्पूरम् ॥१४५॥

उदरभरणखिन्नो मनस्वी कश्चिदाह एकइति एकः मुख्यः सएव राहुः जीवत्यभिमानरक्षणपूर्व्वं समीचीनवृत्त्या तिष्ठतीत्यर्थः एवकारेणोदरभरणव्यग्रास्सर्व्वे मृततुल्याइति व्यज्यते हृदयविहीनोपि शिरोमात्ररूपत्वादितिभावः सहृदयः उन्नतमना इत्यर्थः हृदयविहीनस्य हृदयशालित्वमितिविरोधेऽप्यर्थः यः राहुः सर्व्वलाघवनिदानं सर्व्वदागोजनदानेऽपि पुनरपूर्णमुदरञ्चदधातीत्यर्थः तथाच भगवताऽमृतपाने राहुः चक्रेण द्विधा कृतइति वृथा प्रसिद्धिः स्वयमेव राहुरुदरपरित्यागार्थं पूर्व्वकायं जहादिति सुरस्यापीयं मर्य्यादा किं वक्तव्यं मादृशां गुणशालिनामित्याशयः ॥१४५॥

एकेन चूर्णकुन्तलमपरेण करेण चिबुकमुन्नमयन् ॥
पश्यामि बाष्पधौतश्रुति विगलद्वारि तद्वदनम् ॥१४६॥

व्यवस्थादिनाऽतिक्रमेणात्यन्तखिन्नो दैदेशिको मनोरथं करोति एकेनेति तद्वदनं तस्या मदेकशरणाया वदनं मुखमित्यर्थः पश्यामि कदेतिशेषः काकुर्व्वा श्रीधरः कदा तद्दिनं करिष्यतीति भावः किंभूतं वदनं वाष्पधौतश्रुतिविगलद्वारीत्येकमेव पदं वाष्पौघेण मम गमनदिवसमारभ्य पुनर्गमनदिनपर्य्यन्तरोदनाश्रुणा धौतं प्रक्षालितं प्रथमतः, पश्चात् श्रुत्योः श्रवणयोर्व्विगलत्

नेत्रपतद्वाष्पंश्रु यस्माद्रुदनात्तदित्यर्थः । वाष्पधौतं श्रुतिचिरलद्वाक्येति कर्मधार यइतिरसिकसरणिः, किं कुर्व्वन् एकेन करेण वामेनेत्यर्थः चूर्णकुन्तलम् असम्माज्र्जनेन चतुर्दिक्षु पतितं केशसमूहमित्यर्थः नतु विन्यासविशेषविशिष्ट-मित्यर्थः, पतिव्रतायाः प्रोषिते भर्तरि केशसम्माज्र्जनानौचित्यात् मच पतिव्रतात्वे किम्मानमितिवाच्यमौचित्यात् वाष्पेत्यादेः प्रमाणत्वाश्चेत्याशयः उन्नमयन् उत्थापयन् अपरेण दक्षिणेन चिबुकमुन्नमयन्नित्यन्वयः तथाचैवंविधायाः प्रियाया एवंप्रकारेण वदनदर्शनं मम कदा भविष्यतीति स्वगतं वैदेशिकश्चिन्तयतीति-वाक्यार्थः विदेशस्थसखायं प्रति वदतीतिवा ॥१४६॥

एकं जीवनमूलं चञ्चलमपि तापयन्तमपि सततम् ॥
अन्तर्व्वहति वराकी सा त्वान्नासेव निश्वासम् ॥१४७॥

नायिकाकृतपूर्ववद्वाह्यशिष्टाचारन्यूनतादोषेणोदासीनं नायकं नायिकासखी वदति एकमिति सा त्वामन्तः हृदि वहति सर्व्वदा धारयतीत्यर्थः अन्तःपदेन हृदयसम्मीलने वाह्यशिष्टाचारो बहुधा नापेक्ष्यते लोकैरिति व्यज्यते तेनच मम सख्या दृढ़प्रेमनिश्चयेनाकृतेपीतरवाह्यशिष्टाचारे औदासीन्यं तव नोचितमिति व्यज्यते, तेनचाधुनेव गन्तव्यं मम सखीसमीपमित्यादि व्यज्यते, वराकी अनन्यशरणा, नासानासिका निश्वासं यथाभ्यन्तरे वहति तथेत्यर्थः उभयं विशिनष्टि एकमनन्यं पक्षेप्रधानं जीवनस्य जीवनसौख्यस्य मूलं निदानं, पक्षे शरीरधारणस्य मूलं निःश्वासविनाशेशरीरधारणासंभवादितिभावः चञ्चलमपि इतस्ततो गच्छन्तमपि अन्यनायिकाभिमुखमपीति वा, पक्षे संचरन्त-मपीत्यर्थः अतएव तापयन्तमपि सखीतापं कुर्वन्तमपीत्यर्थः ॥१४७॥

एकं वदति मनो मे यामि नयामीति हृदयमपरं मे ॥
हृदयद्वयमुचितं तव सुन्दरि हृतकान्तचित्तायाः॥१४८॥

नायकप्रेषितां दूतीं नायिकाऽऽह एकमिति मम मनः स्वत्कथनेन नायकसमीपं यामीत्येवमर्थं वदति विचारयति अहमत्र न गच्छामीत्यपरमर्थं, तदेव हृदयं विचारयतीत्यर्थः एकं मनः अपरं हृदयमिति लोकोक्तिः तथाच त्वं याहि नया-

द्वीतिच द्वयमपि मम मनः कथयत्यतः संशयितास्मीतिभावः अत्र यामि न यामीत्यत्रोभयत्रापि नायिकाया एव कर्त्तृत्वं वक्तृत्वञ्चातो नोत्तमपुरुषप्रयोगानुपपत्तिरितिनायिकाशयः एकं मनः कर्त्तृ यामीति वदति द्वितीयं तवहृदयं कर्त्तृ न यामीति वदतीत्ययमर्थः मनोद्वयं विना न सम्भवतीत्याशयेन दूती नायिकामाह सुन्दरि अनेनबहुमनोहरणसामर्थ्यं नायिकाया द्योत्यते तव हृदयद्वयमुचितं युक्तं कथमेकस्य मनो द्वयमतआह हृतंस्वाधीनं कृतं कान्तस्य नायकस्य चित्तं यया तस्यास्तवैव हृदयद्वयमुचितं कान्तस्यनैकमप्युचितमित्यर्थः तथाच तव चित्तं कान्तेन न हृतं किन्तु तवाधीनमेवेत्येकं मनः कान्तचित्तं त्वय्येव निमग्नं तवाधीनमित्यपरमेवञ्च द्विचित्ता त्वं कान्तचित्तनयामीति सूचितेननयामीतियद्वदसि तदप्युचितमेव परन्तु कान्तोपि स्वचित्तमधीनीकृत्य नायिकान्तरचित्तग्रहणेन द्विचित्तो भूत्वा प्रतीकारं करिष्यति तदा मम दोषो न देय इति वाक्यार्थव्यञ्जना अत्र वदति मनइत्यत्र हृदयपदमेवोचितम् उदेतिसविताताम्रस्ताम्रएवास्तमेतिच सम्पत्तौ च विपत्तौ च महतामेकरूपतेत्यादौ ताम्रपदवत् अन्यथाग्रे हृदय द्वयाभिधाने प्रकृतप्रतीतेरनापत्तेरित्याभाति ॥१४८॥

एरण्डपत्रशयना जनयन्ती स्वेदमलघुजघनतटा ॥
धूलीपुटीव मिलन्ती स्मरज्वरं हरति हलिकवधूः ॥१४९॥

हलिकवधूरतं कश्चित्स्तौति एरण्डेति हलिकस्य वधूस्तरुणी कन्दर्पज्वरं हरतीति सम्बन्धः धूलीपुटी नानाविधचूर्णकृतपोट्टलिका यथा एरण्डपत्रादियोगशालिनी अनलादिसामीप्येन घर्मजनिका ऽङ्गे मिलन्ती सद्वद्धा वातज्वरं हरति एवमेव एरण्डपत्रशयनात्यन्तसुरताधिक्येन नायकघर्मं जनयन्ती पीवरजघनतटा महाकामुकज्वरं हरतीत्यर्थः धूलीपुटीश्लक्ष्णचूर्णकृतापोट्टलिकेतिवैद्यकं रसविशेष इति कश्चित् ॥१४९॥

इति सचलविरचिते रसप्रकाशे आर्य्यासप्तशतीविवरणे स्वरव्रज्यायामेकारव्रज्या समाप्ता ॥

केलिनिलयं राधीमिव नयति नवोढां स्वयं न मां भजते ॥
इत्थं गृहिणीमग्रे स्तुवति प्रतिवेशिना हसितं ॥१५०॥

इयं कश्चिदासक्तेति प्रतिवेशी जानाति गृहपतिरन्यथैव जानातीति कश्चित्काश्चिदाह केलीति । अथवा धूर्त्तपामरोऽयं वैश्यः स्वयं नवोढासंगमलुब्धो जानन्नपि गृहिणीमन्यपुरुषं प्रति प्रेरयति स्वयं नवोढासङ्गं करोतीति प्रतिवेशी जानातीत्याह कश्चित्कञ्चित्प्रति गृहिणी मम क्रीड़ानिलयं क्रीड़ागृहं नयति प्रापयति नवोढां नवीनां पश्चाज्जातविवाहां वा नतु नायिकाप्रभेदरूपां गृहिण्यपेक्षितस्य नायकान्यत्रसुरतलाभस्यासम्भवापत्तेः सखीमिव नयति नतु सपत्नी व्यवहारं करोतीतिभावः । गृहिणी मां कदापि न भजते नवोढ़ाया एव सुरतं सम्यग्भवतु ममतु सर्व्वं संपन्नमेव वर्त्ततेऽत्याशयः इत्थमनेन प्रकारेण गृहिणीं प्रथमनूढामर्थे स्वामिति वैश्ये वा स्तुवति स्तुतिवलप्रतारणार्थं कथयति सति अनया प्रशंसया नागमिष्यतीति नवोढैव प्रत्यहमागमिष्यतीत्याशयेन स्तुति रितिभावः । प्रतिवेशिना सखीवासिना अनेन सकलाभिज्ञत्वं ध्वन्यते हसितं,गृहिणी स्वसुखसंपादनार्थं मेतत्सर्व्वंकरोति, तमेव प्रतारयति, सतु नामिति परस्परप्रतारणा हास्यहेतुरित्याशयः । द्वितीयपक्षे जानन्नपि न जानातीति पामरोयमिति हास्यबीजम् । अन्ये पक्षभेदभिन्ना व्यङ्ग्याः स्वयमूहनीयाविद्वद्भिरिति आर्य्येस्तुवती-तिपाठः लेखकप्रमादकृतः स्यात्अर्य्यःस्वामिवैश्ययोरितिनानार्थेऽमरः प्रतिवेश्यासक्तेयमिति कश्चित्कञ्चिद्वदतीति ऋजवः, स्वकीयजनप्रतारकस्य स्वस्यैव हानिरिति कश्चिद्वदतीति परमार्थः ॥१५०॥

कालक्रमकमनीयक्रोडेयं केतकीति काशंसा ॥
वृद्धिर्यथायथाऽस्यास्तथातथा कण्टकोत्कर्षः ॥१५१॥

केनचिदत्यन्तलावधानेन ऊढां सतीं नवोढ़ां भाविधैवनां संगमप्रत्याशया लालयन्तं कश्चिदाह कालेति. कालक्रमेण किञ्चिद्दिनमतीत्य कमनीयं कामनाविषयः क्रोडमङ्कोऽभ्यन्तरं वा यस्याः सा क्रोड़शब्दस्याङ्काऽभ्यन्तरोभयवचनत्वात् इयं केतकी नवोढ़ाचेति काशंसा प्रत्याशा, शङ्केतिपाठे शङ्कापि न निश्चयस्तु दूरापास्त इत्याशयः । हेतुमाह अस्याः केतक्या नायिकाया वा यथा यथा वृद्धिः पुष्पविकाशो यौवनं वा तथा तथा कण्टकानां रक्षकाणाञ्चेत्यर्थे आधिक्यं भविष्यतीत्यर्थः तथाचेदानीमेव चुम्बनालिङ्गनादिकं यावत्कर्त्तुं शक्नोषि तावदेव कुरु नान्या प्रत्याशेतिभावः ॥१५१॥

कृतकस्वाप मदीयश्वासध्वनिदत्तकर्ण किं तीव्रैः ॥
विध्यसि मां निश्वासैः स्मरः शरैः शब्दवेधीव ॥१५२॥

काचिन्मानिनी प्रियानुनयसमूहानविगणय्य पराङ्मुखी, नायकोऽपि असाध्यां बुध्वा निवृत्तो भूत्वा सुप्तः तं नायिका उत्थापयन्त्याह कृतकेति हे कृत्रिमस्वाप सुप्तोत्थापनं पापजनकं न कर्त्तव्यमित्याशयः । मदीयस्वासशब्दे दत्तौ कर्णौ येन तत्संबोधने अतएव काल्पनिकस्वापेतिभावः तीव्रैः दृढैः निश्वासैः कोपाशान्तिद्विगुणितैः मां विध्यसि । अत्र तीव्रपदेन नायकेऽत्यन्तदुःखत्वं विध्यसीत्यनेन तव दुःखेन ममाप्यतिदुःखं तेन मानभङ्गइति व्यज्यते । शब्दं श्रुत्वा वेधनकर्त्ता मदनइव शरैर्विध्यसीत्यर्थः तथाच मदनादन्य एव शब्दवेधी मदनइति नास्य शरास्सोढव्याइत्याशयः ॥१५२॥

क्व स निर्म्मोकदुकूलः क्वालङ्करणाय फणिमणिश्रेणिः
कालियभुजङ्गविगमाद्यमुने विश्वस्य गम्यासि ॥१५३॥

केनचिद्दुत्तमविटेन नायकेन परित्यक्तां पूर्वमत्यन्ताऽऽग्रहेणाप्यासक्तिरहितां विटपरित्यागे तां कटाक्षयन्नमन्योन्तदा स नायकआह क्वेति यमुने कालिन्दि पक्षे नायिके निर्म्मोकः कञ्चुक एव दुकूलं क्षौमं यस्य स कालियनाग इदानीं क्व,न कुत्रापीत्यर्थः दर्शनमपि तस्य दुर्ल्लभमितिभावः पक्षे निर्म्मोकइव दुकूलं चेदिदेशसंभूतं चारिखानाइति भाषयाप्रसिद्धं यस्य स नायकविशेषस्सर्व्वनायकविरोधीदानीं दर्शनविषयोपि नेत्यर्थः । फणिनां सर्प्पाणां मणिपङ्क्तिरलंकरणाय याऽऽसीत्सेदानीं क्वेति सम्बन्धः पक्षे नायकदत्तालंकरणार्थं मणिपङ्क्तिः क्वेत्यर्थः नायको धनञ्च द्वयमपि गतमित्यर्थः । कालियभुजङ्गस्य कालियनामकसर्प्पस्य विगमादपगमात् पक्षे दुष्टपरित्यागादित्यर्थः विश्वस्य संसारस्य, पक्षे नायकमात्रस्य गम्या संचारयोग्या, पक्षे भोग्या त्वमसीत्यर्थः तथाच वृथा तव गर्व्व आसीत् इदानीन्तु ममैव श्लाघा न किमर्थं मां कटाक्षयसीतिभावः । यद्वा निरुपधिपरोपकारः श्रीकृष्णः येन कालियनिःकाशनेनापि जनानामुपकारमकरोदिति व्यंजनया दुष्टनायकनिवारकं कञ्चन महान्तं कश्चित्स्तौति ॥१५३॥

किञ्चिन्न बालयोक्तं न सप्रसादा निवेशिता दृष्टिः ॥
मयि पदपतिते केवलमकारि शुकपञ्जरो विमुखः ॥१५४॥

वैदग्ध्येन मानपरित्यागकारिणीं नायिकां वयस्याध्यक्षे कश्चित्स्तौति किञ्चिदिति मयि मानापनोदनार्थं बालायाः पदपतिते सति बालया किञ्चित्साध्वमाधु वा नोक्तं प्रसादसूचिका दृष्टिरपि मयि न दत्ता केवलं पञ्जरशुको विमुखः रतिदर्शनायोग्यस्थानस्थितः अकारि कृतः पञ्जरशुकवैमुख्येन रत्यनुज्ञामात्रं दत्तम् ॥१५४॥

कृतहसितहस्ततालं मन्मथतरलैर्विलोकितां युवभिः ॥
क्षिप्तः क्षितौ निपतन्नङ्गे नर्त्तयति भृङ्गस्त्वाम् ॥१५५॥

काञ्चित्सामान्यवनितां काचित्स्तौति सर्व्वेषां यूनां येन केनापि व्यापारेण सुखदाऽसीदित्याह कृतेति त्वां भृङ्गः मधुपः अथच मधुपतुल्यः उपभोगकर्त्ता कश्चिद्विटः नर्त्तयति नानाविधचेष्टायुतां करोतीत्यर्थः, किं कुर्व्वन्नङ्गे नर्त्तनप्रव्रकस्तनाधरादौ निपतन् कमलवन्मुकभ्रान्त्या पातं कुर्व्वन्नित्यर्थः पक्षे हस्ताभ्यां स्तने मुखेनाधरस्य स्पर्शंकुर्व्वन्नित्यर्थः किंभूतो भृङ्गः क्षिप्तः क्षिप्तस्त्वया वारंवारं प्रक्षिप्तः दूरीकृत इत्यर्थः उभयपक्षे समानम् इयान् परं विशेषः नायकपक्षे युवभिस्सहचरैः क्षिप्तःप्रेरितइतिअन्वयोपि, त्वां किं भूतां युवभिरर्थात् त्वन्नृत्यकारकसहचरैर्विलोकितां सस्पृहं दृष्टां किंभूतैः युवभिः मन्मथेन भवद्दर्शनजनितकामेन तरलैः चञ्चलैः। कृतः हसितेन सख्युस्त्वत्स्तनस्पर्शचुम्बनादिदर्शनजनितेन हस्ततालो यस्मिन् विलोकने क्रियाविशेषणत्वाद्द्वितीया एवंस्थिते भ्रमरतुल्यस्य गानकर्तृत्वं नर्त्तनकारयितृत्वं चान्येषां तालदातृत्वं प्रेक्षकत्वञ्चेति तव सर्व्वं सुखदातृत्वमितिस्तुतिरथच एवं निर्ल्लज्जासि नायकसमूहे यथेष्टं भुज्यसे निर्ल्लज्जेनान्यैस्तथाविधैरवलोक्यसे त्वां धिगस्त्वितिभावः १५५

कमलमुखि सर्वतोमुखनिवारणं विदधदेवभूषयति ॥
रोधो रुद्धस्वरसास्तरङ्गिण्यास्तरलनयनाश्च ॥१५६॥

अस्याः पतिरत्यन्त निरोधं करोति केनाविश्वासेनेति वादिनीं काञ्चित्प्रति सुशीला चतुरा काचिदाह कमलेति यद्वा पतिकृतात्यन्तावरोधखिन्नां नायकामेव

काचिदाह कमलेति अत्रकमलमुखीतिपदेनत्वमप्येवं ब्रवोषियत्मन्वैरेव तवाभि-प्रेतानभिप्रेतैः सर्व्वदा विलोक्यते तस्मात्सौन्दर्य्यशालिन्याः संरक्षणं युक्तमेव रोधः प्रतिरोधइत्यर्थः पुल्लिङ्गरोधशब्दस्य रोधवाचकत्वात् पक्षे रोधः तीरं सान्तंमपुंसर्करोधःशब्दस्य तीरवाचकत्वात् तरलनयनाः चञ्चलाक्षोः अनेन सर्व्वथा प्रतिरोधयोग्यत्वं कथ्यतेस्वाभाविकतरलस्वभावत्वादित्याशयः तरङ्गिणोः नानाविध-तरङ्गवतीः अनेनाकस्माद्ग्रामादिप्लावकत्वसूचनेनावश्यं रोधो युक्तमिति ध्वन्यते चकारः समुच्चये तरलनयनास्तरङ्गिणीश्च रुद्धस्वरसाः रुद्धः प्रतिहतः स्वानांरसइच्छा शृङ्गारो यासां ताइत्यर्थः यथेष्टस्वेच्छाचारशून्यो इतिभावः। पक्षे रुद्धः नदीपार्श्वद्वयगमनरहितः स्वानां नदीनीराणां जलं यासां ता इत्यर्थः स्वरसस्य स्वेच्छावाचकत्वं रसमात्रस्य जलवाचकत्वमिति वा प्रतिरोधः चञ्चलाक्षोः तरङ्गिणीः भूषयति सर्व्वगुणेन योजयतीत्यर्थः पक्षे सकललोकमनोहारिणीः करोतीत्यर्थः रोधः किं कुर्व्वन् किं कुर्व्वन् सर्व्वतोमुखस्य जलस्य निवारणं विदधदेव विरुद्धपार्श्वसंचारनिवारणं कुर्व्वन्नेवेत्यर्थः पक्षे सर्व्वतः सर्व्वेभ्यः निवारणीयलोकसमुदायेभ्यइतियावत् मुखस्य वदनस्यार्थादवरुद्धायाःनिवारणम-दर्शनं कुर्व्वन्नित्यर्थः विदधदिति क्लीवे पुल्लिङ्गे च समानरूपा पुल्लिङ्गनपुं-सकसमानरोधस्त्वयीतिभावः येतु रोधोवरुद्धसुरसेतिपाठं कल्पयन्ति ते भ्रान्ताः सुरसशब्दस्य नायिकापक्षे समीचीनेच्छावाचितया तद्रोधानुपयोगात् अनुचिते-च्छाया एव निवारणीयत्वात् स्वनायिकानुरागस्यापिनिवारणीयत्वप्रसंगाच्च तथाच यथा रोधसा नदीपार्श्वद्वयनिरोधेन नदीनां सर्व्वदा समीचीनाखण्डितप्रवाहकरणेन सर्व्वदूरगत्वं पुण्यदातृत्वेन पुरुषार्थचतुष्टयसंपादकत्वं सर्व्वदापतिरूपसमुद्रमात्रा-भिगामित्वेन पातिव्रत्यञ्च संपाद्यते तथैवसुत्तमनायककामितप्रतिरोधेन स्वभावच-ञ्चलानां वामलोचनानां स्वनायकमात्राभिलाषशालित्वेन पातिव्रत्यंसर्व्वलोकाधि-कप्रतिष्ठासंपादनेन पुरुषार्थचतुष्टयभाजनत्वंच संपाद्यते मत्यविश्वासेन वृथा वोत्तमनायकेन स्त्रीप्रतिरोधः क्रियते। पिता रक्षति कौमारे भर्त्ता रक्षति यौवने पुत्राश्च स्थविरे भावे न स्त्री स्वातन्त्र्यमर्हतीत्यादिबहुतरधर्म्मनीतिशास्त्रविहित-त्वेन शिष्टाचारपरिप्राप्तत्वेन रोधस्यावश्यकत्वादितिवलाधिकेन पुंस्कं सर्व्वतो मुखमित्यमरः रोधोवरोधे कूले चेति नानार्थः शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसइत्यत्रादिपदेनान्यरसानामिवेच्छायाअपि संग्रहात् स्वरसइच्छेतिटीका तरङ्गिणीशैवलिनीत्यमरः ॥१५६॥

कितव प्रपञ्चिता सा भवता मन्दाक्षमन्दसञ्चारा ॥
बहुदायैरपि संप्रति पाशकशारीव नायाति ॥१५७॥

पूर्ववद्द्रव्यं मया दीयत एव सा कथन्नायातीति वादिनं नायकं दूत्याह कितवेति सा नायिका संप्रति नायातीदानीं तव समीपं नायात्यग्रे किं भविष्यतीति को वेदेत्यर्थः बहुदायैरपि दीयत इति दायो धनं पूर्व्वदत्तधनशतगुणितधनदानैरपिअपिनाऽसमत्कथनादिपरिग्रहः पक्षे बहुदायैरपि त्रितयमारभ्याष्टादशप्रभेदान्तर्गतैरेकग्रन्थसङ्केतितैस्त्रिचतुरैर्बहुदायैरपि, कुतो नायात्यत्र हेतुमाह भवता कितवेषु धूर्त्तेषु प्रपञ्चिता विविच्यायातीति व्यक्तीकृता यत इत्यर्थः कितवेति नायकसंबोधनं वा, भवता प्रपञ्चिता नायिका गुर्व्वादिज्ञानेन खलज्ञानेनच यथा नायाति तथाप्रपञ्चविषयीकृतेत्यर्थः अतएव धूर्त्तता यद्वा कितवेन भवत्समीपमागच्छन्ती प्रपञ्चिता प्रपञ्चविषयी कृतोपभुक्तेति यावत् कितवपदेन तव निकटे तद्द्रसमुत्का नायकेनावयोः संभोगो ज्ञातइति नायिकानिकटेप्युक्तमिति सूच्यते अत्र भवता हेतुभूतेन नायातीत्यन्वयः भवत्कर्तृकबहुदायैरित्यन्वयो वा पक्षे कितवेन धूर्त्तेन प्रपञ्चिता रचिता अतएव कैतवमिति द्यूतनाम मन्दाक्षेण त्वत्कृतेन कितवकृतेन वा प्रसिद्धिदोषेण लज्जया मन्दः स्वल्पः सञ्चारो गमागमो यस्याः सेत्यर्थः पक्षे मन्दाः त्रिचतुरादिमात्रदायदातारो येऽक्षाः पाशकास्तैः मन्दः द्वित्रिकोष्ठव्यापः संचारश्चलनं यस्यास्सेत्यर्थः यद्वा अमन्दाः समीचीनाः अक्षाः चतुर्द्दशादिदायदापकास्तैः मन्दः विपक्षपटिकातः पञ्चादशद्वादशव्याप्यासः नतुनवमपञ्चदशादिव्यापः संचारो यस्यास्सेत्यर्थः अस्मिन् पक्षे बहुदायैरित्यस्य षोडशसप्तदशादिपातैरपि नायातीत्यर्थः केवलं नायिका नायाति पाशकशारी चतुष्पटीक्रीडनवटिका यथा नायाति तथा सा नायिका नायाति तथाच पाशकशारी नवादिस्थलप्राप्त्या एकाकिन्यानायातस्यदक्षा गुणलवरणं विना नायातिदयातथा तव गमनेन त्वया सहैव कदाचिदायाति एकाकिन्यागमने मध्ये पुनर्विटोपभोग एव स्यादितिभावः धूर्त्तोऽक्षदेवी कितवइत्यमरः मन्दाक्षं ह्रीस्त्रपा व्रीडा देवनाः पाशकाश्चतेइतिचामरः पाशकौ द्वौ पञ्चसंख्यौ दायचिह्नसमन्वितावित्ति चतुरङ्गतरङ्गिणी ॥१५७॥

कः श्लाघनीयजन्मा माघनिशीथेपि यस्य सौभाग्यम् ॥
प्रालेयानिलदीर्घः कथयति काञ्चीनिनादोयम् ॥१५८॥

कश्चित्कञ्चित्पृच्छति कइति श्लाघनीयं श्लाघायोग्यं सर्व्वकामुकानां बहुमत मितियावत् जन्म यस्य स कइत्यर्थः इति प्रश्नं श्रुत्वा द्वितीयउत्तरमाह अयं श्रूयमाणः काञ्चीनिनादः क्षुद्रघण्टिकाशब्दः नतु नूपुरशब्दः यस्य नायिकाधःस्थितस्य कस्यापि पुण्यवतः सौभाग्यं बहुजन्मकृतपुण्यफलं माघनिशीथेपि माघमासीयनिशामध्येपीत्यर्थः माघनिशीथेत्यादिना निशीथकालात्पूर्व्वमेवसायंकालमारभ्य सुरताधिक्येन नायकस्यश्रान्तत्वं तेन विपरीतरतस्यौचित्यं नायिकायाः सुरततृष्णया नायकाज्ञाकारित्वं तेन रात्रिशेषं विनापि नायकातिस्नेहेन निशीथे विपरीतरतकारित्वम् उभयोरनन्तरसुरतासक्तत्वेन शीतभीतिराहित्यं तेनच शीतनिवर्त्तक बहुमानश्रीकतयातिभाग्यवत्त्वं समस्नेहत्वञ्च व्यज्यते कथयति प्रव्यक्तमुच्चारयति काञ्चीनिनादः किंभूतः प्रालेयानिलः हिममयो वायुः तद्वेतुकदैर्घ्यशालीत्यर्थः विपरीते श्रमेपि अतिशीतेन वायुना तन्निरासेन विपरीतदैर्घ्येण काञ्चीनिनाद दैर्घ्यमित्याशयः तथाच योऽस्मिन्समयेप्यधोनुक्रमेणाद्ध विपरीतेन रतेन माघरात्रं नयति स एव श्लाघनीयजन्मेति त्वं जानीहीतिभावः ॥१५८॥

किमकरणीयं प्रेम्णः फणिनः कथयापि या बिभेतिस्म ॥
सा गिरिशभुजभुजङ्गमफणोपधानाऽद्य निद्राति ॥१५९॥

पथि सर्प्पादिभीत्या न गम्यते नायकसमीपमिति व्यञ्जयन्तीं नायिकां दूत्याह किमिति प्रेम्णः किमकरणीयमकर्त्तव्यमित्यर्थः अपितु सर्व्वं करणीयमेवेतिभावः या पार्व्वती फणिनः सर्प्पस्य कथयापि श्रवणादिना विनापि दर्शने सर्व्वथेति कथ्यते बिभेतिस्म भीतासीदित्यर्थः सा सेवाद्याधुना विवाहानन्तरं गिरीशस्य शिवस्य भुजभुजङ्गमः बाहुस्थितकङ्कणरूपःसर्प्पः तस्य या फणा तद्रूपमुपधानमुपवेणीयस्याः एतादृशी निद्राति फणापदेनावश्यपरिहार्य्यत्वं निद्रातीत्यनेन भीतिलेशशून्यत्वं व्यज्यते तथाच तवनायके प्रेमैव न यदि सत्यं प्रेम तदा काभीतिरिति प्रतारयसि माम् अन्यथाऽधुनैव वचनीयमितिवाक्यार्थः यथास्थितवस्तुवर्णनमेतदिति कश्चित् उत्तमनायकयोस्संपर्कानन्तरमेव सर्व्वप्रकारेण समता भवतीति कश्चित्कञ्चित्प्रत्याहेति वस्तुगतिः ॥१५९॥

**कृत्रिम कनकेनेव प्रेम्णा मुषितस्य वारवनिताभिः।**
**लघुरिव वित्तविनाशक्लेशो जनहास्यता महती ॥१६०॥**

सामान्यासङ्गोन कर्त्तव्यइति कश्चित्कंचिदाह कृत्रिमेति। वारवनिताभिः वेश्याभिः प्रेम्णा वाह्यप्रेम्णा मुषितस्य चोरितस्य प्रतारितस्येतियावत् कृत्रिमं हरिताललेपादिना कल्पितं यत्कनकं तेनकनकाकारमापादितेनेवेत्यर्थः यथा कपटकनकं मूलेन गृह्यते पश्चाद्धननाशः लोके ज्ञानशून्यत्वप्रसिद्धिश्च भवति तथा विनाशजनितः क्लेशः लघुरिव कालान्तरेसमाधातुं शक्यत्वादित्याशयः जनानां हास्यतोपहसनीयता महती कालान्तरेपिनगच्छतीति भावः ॥ १६० ॥

**किं पर्व्वदिवसमार्ज्जितदन्तोष्ठि निजं वपुर्न्न मण्डयसि।**
**स त्वां त्यजति न पर्वस्वपि मधुरामिक्षु यष्टिमिव ॥१६१॥**

तव नायकसम्भोगस्सर्व्वदावश्यक एव किं वाह्यब्रह्मचर्य्यारोपेणेति नायिकां सखी हसति किमिति। पर्व्वदिवसे सुरतनिषिद्धाहस्यादौ मार्ज्जिताः दन्ता ओष्ठश्च यस्यास्तत्सम्बोधने निजवपुः शरीरं किं न मण्डयासि किं न भूषयसीत्यर्थः त्वां सकामुकस्तव पतिः पर्व्वस्वपिअष्टम्यादिष्वपि पक्षे ग्रन्थिष्वपि न त्यजति सङ्गताङ्करे त्येवेत्यर्थः किंभूतां निषेधेनातिमधुरां प्रेमास्पदभूतां पक्षे मधुररसामिक्षोर्यष्ठिमिवेत्यर्थः नायिकासाधर्म्यायस्त्रीलिङ्गेन कथनं तथाच यथेक्षुयष्टिरतिमधुरा पर्वस्वपि न त्यज्यते लोकैरेवमेवात्यन्त कामुकेन तव पत्या निषेधेपि त्वन्न त्यज्यसे इत्यवश्यं तर्हि किमर्थं ब्रह्मचारिवद्वेष धारणमित्याशयः अथवा पर्व्वाणि पति प्रतारयन्ती सूपपतिं लब्धवतीति मया ज्ञातं दन्तादि सम्माजर्ज्जनं प्रतारण र्थं भवतु भूषण परिधानमुपपतिपरितोषार्थं कुर्व्वित्याह काचित् सोपपतिरित्यर्थः ॥ १६१ ॥

**कष्टं साहस कारिणि तव नयनार्द्धेन सोऽध्वनि स्पृष्टः॥**

उपवीतादपि विदितो न द्विजदेहस्तपस्वी ते ॥ १६२ ॥

ब्राह्मणदूती प्रथम संगमाय नायिकामाह कष्टमिति कष्टं कष्टजनकं यथास्यात्तथा साहसस्य साहसिकयस्य कारिणीत्यर्थः। एतादृश साहस करण मत्यनुचितन्तवैव महान् दोषो मास्तु तदर्थमेव कथ्यते नतु स्वार्थमित्याशयः स ब्राह्मणः अध्वनि मार्गे यत्र कुत्रापि गच्छन् नतु तवोद्देशे आगतस्तथाच त्वयैव कामवशया नयनार्द्धेन स्पृष्टः दृष्टः नयनार्द्धेनेत्यनेन सरल दर्शनेन सुब्राह्मणस्य विकार एव न स्यादित्याविद्यते तवेत्यनेनानुल्लंघनीयत्वं व्यज्यते तपस्वी ब्राह्मणः शरीरस्थयज्ञोपवीतादपि ते ज्ञातो न अपितु ज्ञात एव तथा च सतु विषय विमुखः किमपि न जानाति कथमयं मृतकल्पे इति प्रश्ने केनचिदुक्तं तथा निरीक्षित एवं जातोयं तच्छ्रुत्वा भीताहं तव समीप मागतास्मि यथा तव सगुणब्राह्मणज्ञानकृतवधजन्यं महापातकं न भवेत्तथोपदेष्टुरतो गत्वा शीघ्रमाश्वासः कर्त्तव्यस्तस्य नोचेदनर्थोभविष्यतीति भावः ।१६२

क्लेशेपि तन्यमाने मिलितेयं मां प्रमोदयत्येव।
रौद्रेऽनभ्रेऽपि नभः सुरापगावारिवृष्टिरिव ॥ १६३ ॥

इदानीं रोगिणस्ते नायिकागमनेनापि किंफलमिति वादिनं सखायं नायक आह क्लेशइति क्लेशेपि ज्वरेपि तन्यमाने वितीर्य्यमाणे मां प्रमोदयत्येव सुखयत्येव संभोगाभावेपि तस्याः स्पर्शमात्रेणैव कृतकृत्यो भवामीति भावः रौद्रे आतपे अनभ्रेपि मेघाभावेपि नभः सुरापगा आकाशगंगा तया कृता वारिवृष्टिः यथातपे सत्यपि सर्व्वान् पुण्यदातृत्वेन मोदयति तथेयमपीत्यर्थः अनभ्रेइत्यस्य प्रयोजनं मेघदर्शनसुखाभावः आकाशगंगा वृष्टिनिश्चयश्च न निवारणं कर्त्तव्यमित्याशयः ॥ १६३ ॥

कूप प्रभवाणां परमुचितमपां पट्टबन्धनं मन्ये ॥

याः शक्यन्ते लब्धुं न पार्थिवेनापि विगुणेन ॥ १६४ ॥

गुणाभि ज्ञानामधमकुलसमुद्भूतानामपि अवरोधोयुज्यते मतूत्तम कुलजानां गुणागुणाविचारशून्यानां स युक्त इति कश्चिदाह कूपेति कूप प्रभावाणां कूपोत्पन्नाना मपामित्यर्थः अत्र कूप पदेन न्यूनाविदित वंशत्वं नायिकानां द्योत्यते पट्टबन्धनमिष्टिका काष्ठादि निर्मितेन पट्टेन बन्धनं चतुर्दिक्षु वेष्टनं पक्षे पट्टस्य काण्डपट्टस्य बन्धनमवरोधनमन्यानवलोकार्थं काण्डपट्टादीत्यर्थः यद्वा पट्टस्य श्रेष्ठत्वसूचकफलकस्य परं केवलं समुचितं मन्ये इत्यर्थः। या आपः पार्थिवेनापि पृथिवीविकारेण घटेनापि अपिनालाभ योग्यतासूच्यतेलब्धुं प्राप्तुन्न शक्यन्ते विगुणेन रज्जुरहितेन पक्षे पृथिवीपा लेनापि नायकगुणशून्येन लब्धुं न शक्यन्त इत्यर्थः तथाच धनलोभशून्यानां विदग्धोत्तमनायकमात्रनिरतानां निवारणार्थमुचितमेवावरोधादिः नतु स-कलविदग्धाविदग्ध साधारण मानुत्तमकुलजानामपरकीयाणां व्यर्थत्वादिति भावः ॥ १६४ ॥

कररुहशिखानिखात भ्रान्त्वा विश्रान्त रजनिदुरवाप ।
रविरिव यन्त्रोल्लिखितः कृशोपि लोकस्य हरसि दृशम् १६५

खण्डिता नायिका नायकमाह कररुहेति हेइत्यादिः कररुहेण नखेन खण्डित अन्यनायिकादत्तनखक्षतशालिन्नित्यर्थः पक्षेकराणां किरणानांप्रा-दुर्भावोयस्मात् तत्संबोधनं हे शिखा निखातोदयाचलशिरस्थेत्यर्थः भ्रान्त्वा नानानायिकास्थानं गत्वा पक्षे मेरुभ्रमणं कृत्वा विश्रान्त सुरतश्रमनिवृत्यर्थं क्षणं विश्रान्त पक्षे अविश्रान्त अनवरतचलनशीलत्वादित्याशयः रजनिदुरवाप रजन्यामस्माकं दुर्लभेत्यर्थः अन्यत्रासक्तत्वादित्याशयः पक्षे रजन्या निशया दुरवाप अप्राप्य निशायाः सूर्य्यसम्बन्धाभावादित्यर्थः यन्त्रोल्लिखितः

यन्त्रवद्यावकरेखाचिह्नितइत्यर्थः नामानायिकाचरणनिपातेन तत्पादारक्तक-चिह्नं तव भाले यावकलिखित यन्त्रवद्भातीत्याशयः पक्षे त्वष्टाख्यकन्यानिगु केन सूर्य्यः यन्त्रे आरोप्याल्पतेजाः कृत इति पुराणोक्तं व्यज्यते कृशोपि सु-रतश्रान्तत्वादित्याशयोवा पक्षे अल्पतेजाअपि यन्त्रारूढत्वादुदयकालिकत्वा च लोकस्य मादृशस्य दृशं नेत्राणि हरसि विचित्रवेषदर्शनाय स्वशरीरल-ग्नानि करोषीत्यर्थः तथाच प्रातः कालिकसूर्य्यइव सर्व्वसुखदोपि भवान् दुरदृष्टशालिन्यामम न सुखदइति ममैव दोषो न भवतइत्याशयः ॥१६५॥

**किं करवाणि दिवानिशमपिलग्ना सहजशीतलप्रकृतिः ।**
**हन्त सुखयामि न प्रियमात्मानमिवात्मनश्छाया ॥१६६॥**

किमर्थंमायकं स्वाधीनं न करोषीति वादिनीं सखीं नायिकाह किमिति अत हन्त खेदे प्रियं प्रेमास्पदं पतिं न सुखयामि न सुखितं करोम्यतस्त्वमे-वोपायं वदअहंकिंकरवाणीत्यर्थः ननुस्वयमेवोपायंकुर्व्वित्यतः स्वयं यावज्जा नामि तावत्करोम्येवेत्याह किमिति दिवानिशमपि सर्व्वकालंलग्ना पतिमात्र सुश्रूषालग्नापीत्यर्थः] अपिनान्यथात्रावस्थानमपि न स्यादित्यर्थः कथ्यते पक्षे सर्व्वदाशरीरसम्बन्धादपीत्यर्थः सहजेन स्वतः शीतला शान्ता प्रकृतिः स्व-भावो यस्यास्तादृशी अहमिति पक्षे छायायाः स्वाभाविकशीतलस्वभाव आ-त्मनः शरीरस्यछाया यथा समीपवर्तिनमप्यात्मानं न सुखयति अन्याछाया-अन्यं सुखयत्येव तथाहं न सुखयामि अन्या सुखयत्येवेत्यर्थः तथाच यस्य सर्व्वदा सुखकारिणी सा नास्यप्रेयसी विद्वेषिणीनिरत एवायमित्याशयः ॥ १६६ ॥

**केशैः शिरसो गरिमा मरणं पीयूष कुण्डपातेन ॥**
**दयित वहनेन वक्षसि यदि भार स्तदिदमाचिकित्स्यम् १६७**

सुरतेपि ममश्रमोभवतीतिनतदपेक्षेतिवादिनीं नायिकां काञ्चित्सखी शिक्षस्य किमसत्यं वदसीत्याह केशैरिति केशैः शिरसो मस्तकस्य गरिमा भारो यदि तादिदमचिकित्स्यं चिकित्साया अयोग्यत्वमित्यर्थः पीयूषकुण्डपवनेन यदि मरणं तदिदमचिकित्स्यं दयितस्य प्रियस्य वक्षस्युरसि वहनेनधारणेन यदि पीडा बाधा तादिदमचिकित्स्यमित्यन्वयः। अचिकित्समिति यकारशून्यः समीचीनः पाठः तत्र न विद्यते चिकित्सौषधिदानादिरूपा यस्य तत् अचिकित्समित्यर्थः। तथाच केशगौरवममृतेन मरणं यदि स्यात्तदा सुरते श्रमेणाद्यचिरापि स्यात्सुनास्त्यव किन्तु औषधमपि मिथ्यैवक्षिपसीत्यस्वरसः अत्यन्तलम्पटा प्रतारयसि इतिभावः॥ १६७॥

कथय स्मितमुखिनियतंकिं करवाणीतिकिंकरेणोक्ता।
रोमाञ्चसञ्चयैः साव्यक्तंविदधे स्वकं चेतः॥ १६८॥

अयं श्लोकः कश्चित्पुस्तके वर्त्तते सुगमत्वान्नव्याख्यातः॥

किञ्चित्कर्कशतामनु रसं प्रदास्यन्निसर्गमधुरं मे।
इक्षोरिव ते सुन्दरि मानस्य ग्रन्थिरपि काम्यः॥ १६९॥

नायककृतदैन्येन रसाभासभीत्या परित्यक्तमानामङ्गीकृतसुरतामप्यप राधस्यातिगुरुत्वेनहृदयग्रन्थिमन्युमिवान्तःकरणे वहिरुदासीनामिव लक्षयित्वा हृदयग्रन्थिविमोचनाय रतानन्तरं नायको नायिकामाह किञ्चिदिति सुन्दरि अनेन त्वत्सदृशी मान्या यस्यामाशंकसे मामासक्तमितिव्यज्यते तव मानस्यग्रन्थिरन्तर्निलीनतया स्थापितः ग्रन्थिः स्थिरः संस्कारादिरूपः अनेन यावज्जीवमस्यग्रन्थेः दुःखदातृत्वमिति ग्रन्थिकरणमपि भवत्येव जानाति मान्येति प्रतीमः काम्यः कामनाविषयः महामानापेक्षयाऽल्पत्वात् वस्तुतो

महामानापेक्षयाऽयमेव दुःखदइत्याशयः अपिना महामानादिपरित्यागादिरपि. काम्यइति सूच्यते इक्षोरिव रसालदण्डस्य यथाग्रन्थिः काम्यस्तद्वदित्यर्थः इक्षुपदेन सर्व्वावयवसरसत्वमनुपेक्षणीयत्वमुत्तरोत्तरसुखदत्वञ्च व्यज्यते किंभूतो ग्रन्थिः रसं मधुररसं पक्षे रसं शृंगारं किञ्चित्कर्कशतां कार्कश्यं किञ्चिदनुत्साहं वा लक्षीकृत्योपलक्षणत्वकथनेनाग्रे काठिन्यमीतिरावेद्यते प्रदास्यन् तथाच यथा मानापनोदनसुखजनको मानः काम्यस्तथाप्रिमभावी मानग्रन्थिरपि विमोचनद्वारा ममैव सुखजनकः काम्यश्च भविष्यति तवतु श्रमाधिक्यमात्रमित्याशयः निसर्गेण स्वभावेन मधुरं विलक्षणसुखजनकमित्यर्थः पक्षेऽक्षुपर्व्वाणि किञ्चित्काठिन्यानुभवानन्तरं स्वाभ विकमिष्टरसं द्रवं ददत्येवेत्यर्थः मधुर इतिपाठे ग्रन्थिविशेषणं तथाच यदि मय्यनुग्रहवशान्महामानपरित्यागो भवत्या कृतः तदा मानग्रन्थिरपि सुखदएव तस्मात्सर्वम्मर्षीयं दुश्चरितंविस्मृत्य पूर्व्ववदेवाचरणीयमिति विज्ञप्तिर्नायकस्य स्वकीयां प्रतीति ॥ १६९ ॥

केन गिरिशस्य दत्ता बुद्धिर्भुजगं जटावनेऽर्पयितुम् ॥
येन रतिरभसकान्ता कर चिकुराकर्षणं मुषितम् ॥ १७० ॥

क्रूरस्य स्थलदाने दातुरप्यनर्थंभवतीति सुतरामन्येषामिति कश्चिदन्योक्त्या कञ्चन प्रभुं दुष्ट संगतं प्रत्याह केनेति गिरिशस्य शिवस्यानेन पर्वताश्रितत्वेन सर्प्पसाजात्यं व्यज्यते भुजंगं सर्पम् एकवचनेन बहुभिः किं वक्तव्यमिति व्यज्यते जटारूपं यद्वनं तस्मिन् अर्पयितुं रक्षितुं यद्वा जटायाअवने रक्षणे अर्पयितुम् नियोक्तुं केनाविदग्धेन दुष्टेन बुद्धिर्दत्ता नतु स्वभावात्तस्य स्थितेत्यर्थः येनार्प्पणेनातिरभसेन रत्यावेशेन सुरतोन्मादवेगेन कान्तायाः करेण यच्चिकुराकर्षणं जटाधारणं तज्जनितंसुखं मुषितम् वञ्चितम् भयादित्यर्थः तथाच शिवस्य भुजगाधिकार दानं केनचिद्दुष्टेन कारयित्वा स्वस्यापि

सुरते चिकुराकर्षसुखनाश: कारित: यथा तथा तवापि दुष्टदत्तबुद्ध्या दुष्टाधिकारदाने स्वस्यान्यस्यापि पराभव: संभविष्यतीति तन्न कर्त्तव्यमित्याशय: यद्वा सर्वज्ञस्यापि सुबुद्धिमत्पुरुष संगतिरेव ज्ययसी कथमन्यथा वृषभ दत्तयाबुद्ध्या शिवस्येयमवस्थेत्याह ॥ १७० ॥

**करचरणकाञ्चिहारप्रहार मविचिन्त्य बलगृहीतकच: ।**
**प्रणयी चुम्बति दयितावदनं स्फुरदधरमरुणाक्षम् ॥ १७१ ॥**

प्रत्यहं सखीमाम्मानं कर्तुं शिक्षयन्ति मया न क्रियते तत्तासां परितोषार्थं मया काल्पनिको मान: कर्त्तव्य: यथार्थ माने तु. अवकाश एव न दीयते भवतेति नायिकया पूर्व्वमुक्तो नायको बहिरवस्थिता: सखी: सखी मानदर्शनोत्सुका: बुद्ध्वाआगतां प्रियां यश्चुम्बति स एव प्रणयि पदवाच्यो नायकोत्तम: अन्ये नायकाभासा एवेति कश्चित् कश्चित्प्रत्याह करेति दयिताया: कदाचजातप्रेमभंगकारणाया यद्वनंकाल्पनिक कोपेन स्फुरन्नधरो यत्र काल्पनिक कोपेनैवच अरुणे रक्ते अक्षिणी नयने यत्र तथयास्यात्तथा चुम्बति नतु तासां दर्शनाग्रंकया रतिं अकरोतीत्यर्थ: [बलात्कारेण गृहीत: कचो येन करयोश्चरणयो: काञ्च्या: मुक्ताहारस्य वा प्रहारं ताड़नमविचिन्त्य अगणयित्वा सखीजनलज्जया तदारतेरनभिप्रेतत्वेन ताड़नं नतु वास्तव मानेन नायकोपि पूर्वमुक्त एव तथा करोति न त्वरितो भवतीत्याशय: तथाचैवं विश्वस्तो यश्चुम्बति स एव प्रणयि पद वाच्य इति वाक्यार्थ: यत्तु वास्तव मानिन्या महासाहसिक नायको न बलेनैव वदन चुम्बनमिति वाक्यार्थं माह तच्च विदग्ध मनोवक्तव्यं यदि तदा सम्यगेवेतिध्येयम् ॥ १७१ ॥

**कुरुतां चापलमधुना कलयतु सुरसासियादृशी तदपि ।**
**सुन्दरि हरीतकीमनुपारिपीता वारिधारेव ॥ १७२ ॥**

सकलकलासम्पन्नां नायिकां प्रथमतो नायक कृते मान्य नायिकावलोकमेन विनां नायक तत्वज्ञा काचित्सखी समाधत्ते कुरुतामिति स नायक श्चापलं

नायिकान्तरसुरताय मितस्ततोवलोकनदूतीप्रेषणादि कुरुतां करोतु नायिका- न्तरसुरतसुखज्ञानमस्य भवत्वित्यर्थः अधुनेदानीं पश्चात्स्वयमेव न करिष्य- तीत्याशय. कुतइत्याह त्वं यादृशी यत्स्वभावा सुरसा समीचीनसकलगुणासि न त्वासौः तदपि वाक्यार्थभूतं वस्त्वपि अपिनान्यनायिका यादृशी तदपि वस्तु कलयतु जानातु सुन्दरि आन्तरं वैदग्ध्यं दूरेवतु बाह्यरूपमेव तवेदृशं येननायिकान्तरांगप्रत्यंगदर्शनेनैव निवृत्तो भविष्यतीत्याशयः न्यूनोपभोगं विनाधिकं न ज्ञायतेऽति लोकसिद्धं केव हरीतकीमनु हरीतक्याः पश्चात् हरीतक्याः भक्षणानन्तरमिति यावत्परिपीता हृदयपर्य्यन्तगामिनी वारिधारा जलधारा यथा तथेत्यर्थः तथाच सैव जलधारा हरीतकीभक्षणानन्तरं पीता यथा रोचते अन्यदा न तथा नायिकान्तरपरिचये तावत्तस्य सति सर्वप्रकारेण सर्वनायिकापेक्षया त्वमेव समीचीना नान्येति ज्ञास्यति तदा सहजत एव भवत्याअधीनं भविष्यतीति नान्यथान्यनायिकातृष्णा गमिष्यतीति भावस्त्व- स्कर्त्तव्यमेवानेन स्वयमेव कृतं त्वया खेदो न कर्त्तव्य इत्याशयः ॥ १७२ ॥

कज्जलतिलककलङ्कितमुखचन्द्रे गलितसलिलकणकेशि ।
नवविरहदहनदग्धो जीवयितव्यस्त्वया कतमः ॥ १७३ ॥

साहजिकस्नातायाः नायिकायास्सौन्दर्य्यं वर्णयन्ती सखी नायिकामाह कज्जलेति कज्जलस्य कज्जलमात्रस्य यस्तिलकः दृष्टिदोषनिवारकः ललाट मध्ये सूक्ष्मविन्दुरूपः तेन कलङ्कितः तथाच कृत्रिमकलङ्ककथनेन स्वाभावि कचन्द्रातिरिक्तत्वं व्यज्यते मुखमेव चन्द्रो यस्यस्तस्यास्संबोधने तथाच सक- लभूषणानुलेपनादिशून्या कज्जलबिन्दुमात्रभूषणा वारविलासिनी त्वं तव दर्शनमात्रेण कस्यापि न धैर्य्यमित्यावेद्यते गलिताः पतिताः सलिलकणाः स्नानजलबिन्दवः केशेभ्यो यस्याः सा गलितसलिलकणकेशी तत्संबोधने सद्यः स्नानेनात्यन्यकान्तिशालित्वं दाहनिवारणसामर्थ्यञ्च व्यज्यते नवीन- स्तव दर्शनमात्रजनितो यो विरहाग्निस्तेन दून उपतप्तः कतमस्त्वया जीवयि

तव्यः एतादृशसुन्दरशीतलशरीरस्पर्शेन जीवनीयस्तथा च पूर्व्वमुपभोगाभावेपि इदानीं तव विलक्षणरूपदर्शनेन बहवः कामुकाः मदनशरोपतप्ताः जातास्तन्मध्ये कस्तवाभिप्रेत इति सखी परिहासः नवविरहेत्यत्र नवपदस्वरसादवगम्यते ॥ १७३ ॥

**कृच्छ्रात्मवृत्तयोपि हि परोपकारं त्यजन्ति न महान्तः।**
**तृणमात्रजीवना अपि करिणो दानद्रवार्द्रकराः ॥१७४॥**

महतोपि विपदापन्नस्यास्योपकारं किमर्थमेते कुर्व्वन्तीतिवादिनं कञ्चन कश्चिदन्योक्त्याह कृच्छ्रेति महान्तः महापरिमाणाः पक्षे महाशयाः हि निश्चयेन परोपकारं निरुपधिपरेषामुदासीनानामुपकारं मनसा वाचा कर्म्मणा हिताचरणं न त्यजन्ति स्वाभाविकत्वादित्याशयः कृच्छ्रेण कष्टेन आत्मवृत्तिरात्मभरणं येषां ते पक्ष आत्मवृत्तिः आत्मवर्त्तनं येषां ते यद्वा कृच्छ्रं दुःखमेवात्मवर्त्तनं येषां स्वाभिमानरक्षणवशाद्दुःखमात्रजीवनाइत्यर्थः तृणमात्रं जीवनं येषां ते पक्षेत्यल्पनिर्व्वाहा अपीत्यर्थः करिणो गजाः पक्षे तत्तुल्याः सज्जनाः दानेन मदजलेनार्द्रःकरःशुण्डा दण्डा येषां ते पक्षे दानेन महादानादिना तदसम्भवे स्वल्पदानेनार्द्राः करा हस्ता येषान्ते तथा च स्वभावाद्वदान्याः अन्यजीव्युपकारं सुतरामेव विपद्यपि कुर्व्वन्तीत्याशयः स्यात्कष्टं कृच्छ्रमा भीलमित्यमरः ॥ १७४ ॥

**किं हसथ किं प्रधावथ किं जनमाह्वयथ बालका विफलम्।**
**तदयं दर्शयति यथाऽरिष्टः कण्ठेमुना जगृहे ॥१७५॥**

काञ्चिदालिङ्ग्यस्थितं श्रीकृष्णं दृष्ट्वा विविधाः चेष्टाः कुर्व्वतो बालान्निरीक्ष्य बालकदर्शनात् सर्व्वज्ञातमेवेदं वृत्तं भविष्यतीति बालकप्रतारणार्थं तान् नायिका सखी वदति किमिति हेबालकाः विफलं निरर्थकं किं हसथ हास्यमाचरथ किं प्रधावथ शीघ्रधावनमाचरथ किं जनमाह्वयथ जनाह्वानमाचरथ अमुना कृष्णेनारिष्टः असुरविशेषः यथा येन प्रकारेण कण्ठे कण्ठदेशे जगृहे गृहीतो मारणाय तत् स्वकृतारिष्टमारणरूपमरिष्टगलग्रहणं कथमरिष्टगलग्र-

हरणं कृतम् तद्दर्शयतीति मत्सख्योक्तः श्रीकृष्णः सख्यैतद्दर्शयति नत्वन्यत्किमपि करोत्यतः आलिङ्गनशङ्कया हास्यं सुरतादिदर्शनार्थं धावनपूर्वकं जनाह्वानञ्च विफलं भवद्भिः क्रियत इति बालकप्रतारणेन गोपी श्रीकृष्णसम्भोगगोपनं करोति ॥ १७५ ॥

कातरताकेकरितस्मरलज्जारोषमसृणमधुराक्षी।
मोक्तुं न भोक्तुमथवा वलतेसावर्द्धलब्धरतिः ॥१७६॥

नायिकायाः सुरतमध्यावस्थारूपवर्णनं कविराह कातरेति असौ नायिका अर्द्धलब्धरतिः सुरतार्द्धशालिनी मोक्तुं नायकं परित्यक्तुं न वलते न प्रवर्त्तते न वा भोक्तुमुपभोक्तुं वलते पक्षान्तरे बलात् प्रवृत्ता भवतीत्यर्थः नायकपरित्यागमपि न करोति न वा नायकस्य सुरतं कर्त्तुं ददातीत्याशयः असौ किंभूता कातरताभीतिजावस्था तया केकरिते वक्रीभूते स्मरलज्जया स्मरोन्मादकृतस्वकीयचापल्यपरिज्ञानकृतलज्जया रोषेण मसृणमधुकरे स्निग्धसुन्दरे अक्षिणी लोचने यस्याः सेत्यर्थः यद्वा कातरतया नायकदर्शनप्रतिहतत्वेन केकरिते स्मरे सत्यपि या लज्जा सुरतप्रतिरोधिनी तस्यां यो रोषस्तेनेत्यर्थः तदुक्तं कामशास्त्रे ऽतृप्तनारीलक्षणकथनप्रकरणे, न ददाति च मोक्तुं सा विधातुं वा परिक्रियामित्यादिना प्रथमपक्षे परकीया द्वितीयपक्षे स्वकीयापि ॥ १७६ ॥

केतकि गर्भे गन्धादरेण दूरादमी द्रुतमुपेताः।
मदनस्यन्दनवाजिन इव मधुपा धूलिमाददते ॥१७७॥

परिचितानेव नायकानुपचरन्तीं नानादिगन्तागतान्महतोप्यनुपचरन्तीं वारवधूं माता शिक्षयति केतकीति हे केतकि गौरांगि सानुनयसम्बोधनं गन्धः सौरभ्यं ख्यातिरित्यर्थः तेन य आदरः अभिलाषा तेन दूरात् देशान्तरात् अमी तवद्वाररथा द्रुतं शीघ्रमुपेता आगता इत्यर्थः अत्र गन्धादरपदेन त्वत्सदृशी रन्याः संप्रति नाङ्गी कुर्वन्ति तवानादरे करिष्यन्त्येवेति दूरपदेनान्यपरिचयशून्यत्वम् अमीपदेन प्रत्यक्षसिद्धसर्वनायकोत्तमत्वं द्रुतपदेनातिकामुकत्वमुपेता इत्यनेनोपेक्षायां वारवधूनां स्वधर्म्मत्यागः द्रव्यादिलाभाभावेन सर्वथा

दुःखदत्वं व्यज्यते मदनस्यन्दनस्य स्मररथस्य वाजिनोऽश्वा इवेत्यर्थः साक्षादेव स्मर एतेषु दृश्यत इति यद्येते न स्युस्तर्हि मदनः पंगुरेव भवेदिति हृदयं मधुपा भ्रमरतुल्या रसज्ञा इत्यर्थः यद्वा मधुपा मद्यपः तेनास्य बहुव्ययकारित्वं अतोऽनुपेक्षणीयत्वं व्यज्यते धूलिं द्वारधूलिम् आददते गृह्णन्त्युपवेशनार्थं त्वया शय्यापि न दत्तेत्याशयः अथवा वारंवार गमनेन द्वारदेशे धूल्यपहारः कृत इत्यर्थः धूलिं तव चरणधूलिमिति वा तथा च सर्वान् परिचितानपि विहाय द्रव्यार्थं सुखार्थं वैदग्ध्यसंरक्षणार्थञ्च एतानुपचर इति रसिकाः केचित्तु केतकी पुष्पाभ्यन्तरे गन्धग्राहकेण बाह्यहेतुना आगताः मदनसहकारित्वेन मदन-रथाश्वा इव भ्रमराः परागमात्रान्धा जाता नान्यं किञ्चिदपि फलमेषां यथा तथा यशःश्रवणमात्रेणाविदग्धसमीपमागतानामुपवेशनमपि न का कथान्यलाभ-स्येत्यन्योक्तिरिति प्राहुः ॥ १७७ ॥

को वक्रिमा गुणाः के का कान्तिः शिशिरकिरणलेखानाम्।
अन्तः प्रविश्य यासामाक्रान्तं पशुविशेषेण ॥१७८॥

मूढपरिगृहीतानामवश्यमूढत्वं नायिकानामतस्तदीया गुणा अपि निरर्थका एवे त्यन्योक्तया कश्चित्कञ्चिद्वदति क इति शिशिरकिरणस्य चन्द्रस्य लेखानां षोडशक-लानां शिशिरपदेन जडत्वं बहुवचनेन कस्या अपि चातुर्य्यं नास्तीति व्यज्यते वक्रिमा वक्रताकः न कोपीत्यर्थः। अस्थानगतत्वादित्याशयः यद्वा कः किमर्थः निर-र्थक इत्यर्थः। एवमग्रेऽपि गुणा आह्लादकत्वादयः। हेतुमाह यासां कलानामन्तर्म्म-ध्यं चन्द्रमिति यावत्। चन्द्रस्य कलामध्यवर्त्तित्वात्। पशुविशेषेण मृगेणाक्रान्तं गृहीतं प्रविश्येत्यर्थः। अथ च शिशिरकिरणलेखातुल्यानां नायिकानां वैदग्ध्यं विविधाः कलाः सौन्दर्य्यञ्च सर्वं निरर्थकमेव यतस्तासामन्तरन्तःकरणं पशुवि-शेषेण पशुतुल्येन नायकाभासेन प्रविश्य प्रकर्षेण स्थिरतया चिरकालमुपविश्याक्रान्त-मधीनं कृतमित्यर्थः। तथा च नैव विदग्धयोग्या अत एवासां गुणा अपि विफला एवे त्याशयः ॥ १७८ ॥

कृतविविधमथनयत्नः पराभवाय प्रभुः सुरासुरयोः ॥
इच्छति सौभाग्यमदात्स्वयंवरेण श्रियं विष्णुः ॥१७९॥

नीतिविदो बलिनोऽपि महान्तो रसिका नायका रसिकोपदिष्टोपायेनैव नायिकामधीनां कुर्व्वन्ति न तु वैवश्यकारकधनविमत्तप्रभुवत् बलात्कारेणातो मामेव नियोजय समीपस्थितामिमां सर्वनायिकामौलिभूतां प्रति बलात्कारं माकार्षीरिति सर्व्वनायकमौलिभूतं धनमत्तं प्रति दूत्याह कुर्तोति कुतः मथने समुद्रमथने विविधः मन्दरायनादिरूपः यत्नो व्यापारो येन स विष्णुः सुरासुरयोः पराभवाय जयाय प्रभुः समर्थोऽपि अनेन सर्व्वाधिकसामर्थ्यकथनेन बलात्कारसामग्र्यामपि बलात्कारं नाकरोद्विष्णुरिति सूच्यते। सौभाग्यमदात् सौन्दर्य्यदर्प्पात्। स्वयम्बरेण लक्ष्मीकृतस्वयम्बरविधानेनैव श्रियं लक्ष्मीमिच्छति इच्छाविपर्याभूतां करोति। तथा च यथा बलात्कारसमर्थोऽपि सौभाग्येन लक्ष्मीम्परितोष्य स्वयम्बरेण गृहीतवान्। तथा त्वमपि मां दूतीं प्रेषय मया तत्प्रेम सम्पाद्य स्वारस्येन सा नवाधीना क्रियते वैरस्यं न कर्त्तव्यमित्याशयः। यद्वा काञ्चित्कन्यकां दृष्ट्वा राक्षसविवाहप्रवृत्त कञ्चनब्राह्मविवाहमेव युक्तया कुरु न राक्षसादिकमिति कश्चित् शिक्षयति ॥ १७९ ॥

किं पुत्रि गण्डशैलभ्रमेण नवनीरदेषु निद्रासि॥
अनुभव चपलाविलसितगर्ज्जितदेशान्तरभ्रान्तीः ॥१८०॥

चिरविरहखिन्नां माताश्वासयति किमिति हेपुत्रि गण्डशैलभ्रमेण पर्वतात्पतितस्थूलभाषाणभ्रमेणानेन पर्व्वताधः स्थितत्वेनायोग्यता व्यज्यते। न वा ये नीरदा मेघाः तेषु किन्निद्रां करोषि नवमेघेषु गण्डशैलभ्रमेण निद्रानोचितेत्याशयः। निद्रात्यागे हेतुमाह चपलाविलसितं सौदामिनीक्रीडितं गर्ज्जितं घनगर्ज्जितं देशान्तरं तव पतिसमीपे भ्रान्तीः मेघभ्रमणानि अनुभव विचार्य्य परिशीलयेत्यर्थः। तथा च नवमेघेन वर्त्मनः शैत्यं सति चपलादिदर्शनजनितविरहाधिक्ये तव पतिः सर्व्वपथिकागमनसमयेऽवश्यमायास्यति। एतत्परं पश्य यत्र तव पतिरस्ति तत्र नवमेघो वर्त्तते नवेत्याशयः। यद्वा नायिका सखी नायकस्यान्यनायिकासम्भोगं वर्त्तमानमेव नायिकांप्रति सर्व्वसमक्षमेवाह। मेघपक्षे व्याख्या पूर्व्ववत्। चपलायाः चञ्चलायाः पुंश्चल्या इत्यर्थः विलसितं चेष्टितमस्मिन्नपि रसमये तव आश्रम एव तव पत्याकर्षणं गर्ज्जितं वल्गनं त्वामुद्दिश्य निन्दाकरणं देशान्तरे भ्रान्तीः। तव पतिमादाय यदा कदाचिद्भ्रमणानीत्यर्थः। तथा च यत्र कुत्रचित् सा तव पतिनङ्कुर्ङ्करोति मयोक्तं त्वया न प्रतीतमधुनात्रैव तयोः

सङ्गं दृष्ट्वा मदुक्तदेशान्तररतमप्यनयोर्ज्ञातं किं वृथा दिवा स्वापेनेत्याशय इति वयम् ॥ १८० ॥

**कान्तः पदेन हत इति सरलामपराध्य किं प्रसादयथ।**
**साप्येवमेव सुलभः पदप्रहार प्रसादः किम् ॥१८१॥**

नायकाप्ता काचिन्नायिका सखीराह कान्त इति कान्तः पदेन हतस्ताडितः कोपेनेत्यर्थः। इत्यनेन प्रकारेण सरलामवक्रामनेन मत्सख्याः कोप एव न तु कौटिल्यमित्याशयः। अपराध्य सापराधां कृत्वा किं प्रसादयथ तस्याः प्रसादनमाचरथ वृथा प्रसादनं न नायकसुखायेत्याशयः। ननु प्रसादः कुतो न सुखायेत्यत आह सपदप्रहारप्रसादः पदप्रहाररूपः अतिसुखजनकत्वेन नायके प्रसादः अपि: किमित्यनन्तरं योज्यः किमपि अनिर्वचनीयसुखद इत्यर्थः। एवमेव इमां सरलां कोपयित्वैवेत्यर्थः सुलभः सुखलभ्यः तथाचातिरसिकेनानेन नायकेन नायिकापादस्पर्शलाभार्थमियं कोपिता पुनः नः कोपयिष्यत्यतो युष्माभिरत्र विघ्नो न कर्त्तव्य इत्याशयः। यद्वा नायकतत्वज्ञा नायिका सखीनायिकाप्ता नायिका प्रस्वादनपराः अन्या आह सोपि नायकोऽपि एवमेव ताडनतर्ज्जनादिनैव सुलभः प्राप्यः। अन्यथा अप्राप्य एवेत्याशयः। नायकः किंभूतः पदानां चरणानां प्रहारस्सम्यक् ताडनं प्रसादकारणं यस्य स इत्यर्थः। किं वितर्क्के तथाच मया पादेन सम्यगस्य ताडनं क्रियते। तदधीन एवायमिति मयैव ज्ञायते न भवतीभिरिति मर्म्मज्ञये वा मया सर्वं कृतं न स्वेच्छयेत्याशयः। एवञ्च भवत्यो यदि मध्यस्थाः सोप्यन्यनायिकातो निवारणीयः अन्यथा तूष्णीं स्थेयमित्याशयः ॥ १८१ ॥

**कर्णगतेयममोघा दृष्टिस्तव शक्तिरिन्द्रदत्ता च ॥**
**सानासादितविजया क्वचिदपि नापार्थपतितेयम् ॥१८२॥**

स नायकधीरः मत्कथनमात्रेणाकृतचापलायास्तव समागमं प्रति विश्वासं न करोत्यतस्तं स्निग्धेन नयनप्रान्तेन सकृदपि पश्येति दूत्युक्ता नायिका तथा करोति। ततो नायकं विश्वस्तं बुद्ध्वा दूती नायिकामाह कर्णेति तव दृष्टिरियं एतत्पूर्व्वं चापल्यबुद्ध्या कुत्राप्यपतितेत्यर्थः। कर्णगता श्रवणपर्य्यन्तगामिनी अमोघा सार्थकनिपातैक-

मात्रकारिणी,एकघ्नीतुल्या । इन्द्रेण परमैश्वर्य्यशालिना मदनेन परमेश्वरेण वा दत्ता-कृतत्वात् । च पुनः सा अनासादितः अप्राप्तः विजयः सौन्दर्य्यादिना जयो यस्याः सेत्यर्थः सौन्दर्य्येण सकलनयनजयकर्त्री शक्तिरेकघ्नीराधेयहस्तगताऽमोघाऽवश्यमारणकर्त्री देवराजदत्ता च एतैर्द्धर्म्मैस्समाना तव दृष्टिः कर्णशक्तिश्च यद्यपि तथापि साकर्णशक्तिरनासादितो प्राप्तः विजयोऽर्ज्जुनो यया सेत्यर्थः । अनासादितः विजयो युद्धजयो यया चेत्यर्थः । कर्णार्ज्जुनीये कर्णपराजयादित्याशयः । इयं तव दृष्टिः क्वचिदपि कुत्रापि अपार्थे धनञ्जयभिन्नेन पतिता अर्ज्जुनमात्रपतितेत्यर्थः । अथ च अपगतोऽर्थः प्रयोजनं यस्याः साच पतिता चेति निष्प्रयोजनं न पतितेत्यर्थः । यद्वा अपार्थे अप्रयोजने भाग्यहीन इति यावत् । न पतिता महापुण्यशालिन्येकस्मिन्नेव पतितेत्यर्थः । तथाच सार्थकैकनिपातशालिनी तव दृष्टिरेकघ्नीव तव अन्यत्र न पतिष्यत्येव एकस्मिन्नेव नियमनिपातेन नायकस्तव दासो भवति सर्व्वप्रकारेणत्वा-मनुवर्त्तते विश्वासञ्च करोति प्रथमप्रेमकरणप्रवृत्तयोर्युवयोरर्थसिद्धिर्जातेति दूती वाक्यार्थः व्यतिरेकोऽयमलङ्कारः ॥ १८२ ॥

क्लेशयसि किमिति दूतीर्य्यदशक्यं सुमुखि तव कटाक्षेण ॥
कामोपि तत्र सायकमकीर्त्तिशङ्की न संधत्ते ॥१८३॥

प्रतारणायपरत्वेन प्रसिद्धां नायिकां दूत्याह क्लेशयसीति दूतीः किमिति किमर्थं क्लेशयसि वृथाव्यापारयसीत्यर्थः वह्वीभिरदूतीभिः प्रतारिकायास्तव कार्य्यं कर्त्तुं न शक्यत इत्याशयः । तर्हि उपायो वक्तव्य इत्यतआह सुमुखि सुन्दरवदने तव कटाक्षेण यन्नायकवशीकरणादि न सिद्धं तत्र वस्तुनि कामोऽपि अपिना मनुष्यव्यापारव्यव-च्छेदः सायकं शरं न सन्धत्ते शरसन्धानं न करोतीत्यर्थः । अकीर्त्तिशङ्की कार्य्य-सन्देहे नाकीर्त्तिशङ्कीत्यर्थः । तथा च तव कटाक्षस्य कन्दर्पशरादप्यधिकत्वेन तेनैव नायकोऽधीनः कर्त्तव्यः । नास्माभिर्न्न वा केवलमदनेन तव कार्य्यं कर्त्तुंशक्य-मित्याशयः ॥ १८३ ॥

को वेद मूल्यमक्षय्य ते प्रभुणा पणीकृतस्य विधोः ॥
प्रतिविजये यत्प्रतिपणमधरं धरनन्दिनो विदधे ॥१८४॥

सुधाकरामृतादप्यधिकममृतमधरेऽस्तीति कश्चिदाह कोवेद इति अक्षक्रीडायां प्रभुणा शिवेन पणायितस्य स्वपराजये कृतपणस्य विधोः मूल्यं को वेद न कोपीत्यर्थः। पत्युः शिवस्य विजये सति यत् प्रतिपणं पतिकृतविधुरूपपणोपमर्द्दकमधरं शिवनन्दिनी पार्व्वती विदधेऽकरोदित्यर्थः। तथाच विधोरेव शून्यं न केपि जानन्ति सुतरां तदुपमर्द्दकस्याधरस्येत्यधरे सुधाधिक्यमितिभावः ॥ १८४ ॥

**कुपितां चरणप्रहरणभयेन मुञ्चामि न खलु चण्डि त्वाम् ॥**
**अलिरनिलचपलकिसलयताडनसहनो लतां भजते ॥१८५॥**

सुरतमात्रापेक्षी कश्चिन्नायिकामाह कुपितामिति चरणप्रहरणभयेन पादताडनभीत्या चण्डिकोपने खलु निश्चये त्वां न मुञ्चामि न परित्यजामीत्यर्थः। कुपितामिदानीं विशेषेण कोपशालिनीमित्यर्थः। तेन आधिक्यवाचकेन सम्बोधनपदेन न पुनरुक्तिः दृष्टान्तयति अनिलेन वायुना चपलं यत्किसलयं सरसपल्लवं तेन यत्ताडनं तत्सहनशील एवालिः भ्रमरः लतां वल्लीं भजत इत्यर्थः। तथाच किसलयसदृशमृदुना तव चरणेन ताडने मम सौख्यमेवेत्याशयः ॥ १८५ ॥

**कोपाकृष्टभ्रूस्मरशराशने संवृणु प्रिये पततः ॥**
**छिन्नज्यामधुपानिव कज्जलमलिनाश्रुजलबिन्दून् ॥१८६॥**

प्रणामादिना परित्यक्तमानां नायिकां नायक आह कोपेति प्रिये प्रेयसि अनेन मदुक्तकरणमुचितमितिव्यज्यते। किं भूते कोपेन मद्विषयककोपेन आकृष्टमाकर्षितं स्वकीयभ्रूस्वरूपं स्मरस्य मदनस्य शराशनं श्यामपुष्पकृतं धनुर्यस्याः तत्संबोधने अनेन ज्याभङ्गस्य सुयोग्यता गम्य ते कज्जलेन मलिनान् अश्रुजलविन्दून् अश्रुजलशब्दस्य समुदितस्याश्रुवाचकत्वात्पर्य्यायशब्दे लाघवगौरवानवकाशात्। अन्यथा पर्य्यायमध्ये गुरुशब्दस्याप्रयोगापत्ते राधिक्यसूचकं जलपदमित्यप्याहुः। संवृणु संवृतान् कुर्व्वित्यर्थः। कोपपरित्यागे किमर्थं रोदनमिति भावः पततः नेत्रात्पतत इत्यर्थः। छिन्ना या ज्या शिञ्जिनी तद्रूपा ये मधुपा भ्रमराः श्यामस्य धनुषो गुणः श्यामो भ्रमर एवेत्याशयेन तानिवेत्यर्थः। तथा च कोपेन धनुराकर्षणे सत्येव ज्याभङ्गो जातस्तस्मा-

द्रोदनेन भ्रुकुटीकरणे वा न किमपि फलमित्याशयः । यद्वा सखी नायिकामाह प्रिये प्रियस्यांगे पततः प्रियाङ्कस्थितायास्तव नेत्राश्रुजलबिन्दून् संवृणु कोपशान्तिस्तु प्रथमत एव प्रियेण ज्ञाता बहुरोदनं किमर्थमित्याशयः । किं भूते प्रिये कोपाकृष्टं भ्रूरूपं स्मरशराशनं यस्मिन् तस्मिन्नित्यर्थः ॥ १८६ ॥

कामेनापि न भेत्तुं किमु हृदयमपारि बालवनितानाम् ॥
मूढविशिषप्रहाराच्छूनमिवाभाति यद्वक्षः ॥१८७॥

किञ्चित्स्तेनोद्धदर्शनेन बालाहृदयहरणाय कृतयत्नोऽलब्धफलः खिन्नः कश्चित्सखायमाह कामेनेति बालवनितानां हृदयं हृदयदेशं भेत्तुं भिन्नं कर्तुं कामेनापि न अपारि न पारितं कामेनापि तस्या हृदये स्थानं न लब्धमित्याशयः । किमूत्प्रेक्षायामुत्प्रेक्षते यद्वक्षः यस्याः वक्षःस्थलं मूढाऽतीक्ष्णः स्थूलाग्रः वंशग्रन्थिर्विनिर्मिताग्रइति यावत् । यो विशिषः शरविशेषः तत्प्रहारेणोच्छूनमिव किञ्चित्पुष्टमिवाभाति शोभत इत्यर्थः । यदि मदनशरेण हृदयंभिन्नं स्यात्तदा नोच्छूनं भवेदित्याशयः । तथा च वक्षस्युच्छूनतां दृष्ट्वा रतियोग्या जातेयमिति भ्रममात्रं जातं वास्तवं रतियोग्या नेत्याशयः स्वरूपवर्णनमात्रमेतदित्यपरे ॥ १८७ ॥

किं परजीवैर्दीव्यसि विस्मयमधुराक्षि गच्छ सखि दूरम् ॥
अहिमधिचत्वरमुरगग्राही खेलयतु निर्विघ्नः ॥१८८॥

सङ्केतसमये तद्विस्मरणाशङ्कया दूती नायिकां स्मारयति किमिति परस्य सर्पस्य जीवैः प्राणैः क्रीडसि प्राणत्यागस्तु तत् क्रीडादर्शनमित्यर्थः । तथा च परजीवैः नायकप्राणैः दीव्यसि संकेतसमये तवानागमने तत्प्राणा एव गमिष्यन्तीत्याशयः । अद्भुतदर्शनेन सुन्दराक्षि सखि यावत्कालं सर्व्वेऽत्रैव वर्त्तन्ते तावदेव गच्छेति हितं वर्त्मानि सखि पदं त्वं दूरं तत् स्थानात् दूरं गच्छेत्यर्थः । विस्मयेत्यादिना विस्मरणयोग्यता सूच्यते । उरगग्राही आहितुण्डकः अधिचत्वरं चत्वरमध्ये सावकाशे सर्प्पं निर्व्विघ्नः खेलयत्वित्यर्थः । अथवाऽवरोधशालिनी क्षण गुप्तं व मया सह द्रष्टव्यमिति व्यवस्थया श्वश्र्वाद्यनुमत्या सख्या सह

सर्पदर्शनार्थमागता तां सख्याह विस्मयमधुराक्षिस्वाभाविकसौन्दर्य्यशालिन्या इदानीं विस्मयेनातीवसौन्दर्य्यन्तवेति दर्शकानामुरगग्राहिणाञ्च तव सौन्दर्य्यदर्शनमेव न तु नृत्यदर्शनं करणं वा मया सहागमनेन मम श्वश्रादिपरिज्ञानेन तवाप्यनर्थशंकेति शीघ्रं गच्छेति भावः॥ १८८ ॥

करचरणेन प्रहरति यथा यथाङ्गेषु कोपतरलाक्षी ॥
रोषयति परुषवचनैस्तथा तथा प्रेयसीं रसिकः ॥१८६॥

नायिकाकटुवचनखिन्नं नायकं सखी समाधत्ते करचरणेति यथा यथा शरीरेषु नायकशरीरेषु कोपचञ्चलाक्षी करेण चरणेन च प्रहरति ताडयति तथा तथा कटुवचनैः प्रेयसीं रसिकः रोषयतीत्यर्थः। अधिकताडनार्थमित्याशयः। तथाच रसिकानां ताडनाधिक्येपि रुचिरेव तव तु कटुवचनमात्रेणोदास्यं का तव नायकतेति भावः ॥ १८६ ॥

कस्तां निन्दति लुम्पति कः स्मरफलकस्य वर्णकं मुग्धः ॥
को भवति रत्नकण्टकममृते कस्यारुचिरुदेति ॥१६०॥

नायिका सखी स्वनायिकाया निन्दां कुर्व्वाणं नायकमाह कस्तामिति तां मम सखीं को निन्दति न कोपीत्यर्थः। मम शङ्कया मदग्रेऽन्येनापि तन्निन्दा कर्त्तुं न शक्येत्याशयः। तन्निन्दाकरणं सर्व्वस्यैवाश्चर्य्यमित्याह स्मरफलकस्य मदनपटस्य वर्णकं निर्म्मितं चित्रमित्यर्थः। कः मुग्धः मूढः लुम्पति लुप्तं करोति यथा प्रातरुत्थाय समीचीनवस्तुदर्शनार्थं पट्टलिखितं राधाकृष्णमूर्त्तिस्वरूपं जनः पश्यति तथा मम सखी मूर्त्तिचित्रं मनोविनोदार्थं कामस्सर्वदा पश्यति तन्निन्दाकरणे मदनकोप एव स्यादित्यर्थः। रत्नस्य स्वस्वजात्युत्कृष्टस्य कण्टकं शत्रुः को भवति न कोपीत्यर्थः। तन्निन्दकः रत्नशत्रुरेवेत्याशयः। अमृते पीयूषे अरुचिरनिच्छा कस्योदेति भवतीत्यर्थः। तथा च तन्निन्दको प्रसिद्ध एव विना प्रकृतिविपर्य्ययग्रस्तं जनमतस्तदेकशरणाया ममाग्रे तन्निन्दाकरणमत्यन्तमनुचितमित्याशयः। कण्टकशब्दस्य नपुंसकत्वमेव लिङ्गानुशासने ॥ १६० ॥

कोपवति पाणिलीला चञ्चलचूतांकुरे त्वयि भ्रमति ॥
करकम्पितकरवाले स्मर इव सा मूर्च्छिता सुतनुः ॥१६१॥

संकेतस्थले नायिकाया अगमनेन खिन्नं नायकं दूती समाधत्ते कोपवतीति त्वयि नायके भ्रमति. मत्सखीदर्शनयोग्ये चतुष्पथादावित्याशयः । भ्रमतीत्यनेन यावत्कालं मम, सख्या न दृष्टस्तावन्न ततश्चलितस्त्वमित्याशयः। त्वयि किंभूते कोपवति संकेतस्थले मत्सख्या अनागमात्। कुपिते इत्यर्थः । पुनः किंभूते त्वयि पाणेर्य्या लीला क्रियाविशेषः तया चञ्चलो यश्चूतस्य संकेतवृक्षस्याम्रस्यांकुरः नवपल्लवो मञ्जरी वा यस्य तस्मिन्नित्यर्थः। मया संकेतस्थलमागतमन्यथा न कथ्यते तत्प्रमाणं तदाम्रमञ्जरीं पश्य त्वं नागतेति कथनाय तव भ्रमणं सख्या ज्ञातमित्याशयः। सा सुतनुर्मूर्च्छिता करेण कम्पितः करवालः कृपाणः येन तस्मिन् स्मरे इवेत्यर्थः। तथा च मदनकरवालकम्पेन यथा मूर्च्छा भवति तथा मदनसदृशभवद्धस्तांकुररूपकरवालकम्पेन मूर्च्छिता तव दर्शनं विना प्राणधारणमेव न करिष्यतीत्यपराधः क्षन्तव्य इत्याशयः ॥ १६१ ॥

कौलिन्यादलमेतां भजामि न कुलं स्मरः प्रमाणयति ॥
तद्भावनेन भजतो मम गोत्रस्खलितमनिवार्य्यम् ॥१६२॥

अत्यन्तकुलीनाया अस्यास्सुरते बहुधा तवाकुलीनाया द्वितीयपत्न्या नामग्रहणरूपं गोत्रस्खलनमनुचितमितिवादिनीं काञ्चिच्चतुरां प्रतारयितुमशक्यत्वेन नायको यथार्थमाह कौलिन्यादिति कौलिन्यात् कुलीनत्वादेव द्वितीयनायिकासदृशी नेयं केनापि प्रकारेणेत्याशयः। तां कुलीनां अलमत्यर्थं भजामि स्मरः कुलं न प्रमाणयति सुरतसुखदाने कुलस्य हेतुत्वं न मन्यते किन्तु सौन्दर्यवैदग्ध्यादेरेव तदस्यां नास्त्येवेत्याशयः । तस्याः अकुलीनाया भावनेन चिन्तनेनैव कुलीनां भजतः मम अन्यथा भजनमेव न भवतीत्याशयः। गोत्रस्खलनं नामस्खलनं कुलीनासुरतेऽकुलीनानामग्रहणमनिवार्य्यं । निवारयितुमशक्यमित्याशयः। कौलिन्यं कुलीनभावः कुलीनतेत्यर्थः। कौलीनादितिपाठे जनवादात् लोकापवादादित्यर्थः। कौलीनं जनवादः स्यादित्युत्पलिनी गोत्रं नाम्नि कुले चेति नानार्थः ॥ १६२ ॥

कुत इह कुरङ्गशावक केदारे कलममञ्जरीं त्यजसि ॥
तृणबाणस्तृणधन्वा तृणघटितः कपटपुरुषोऽयम् ॥१६३॥

नायिकापतिरक्षितरक्षकभीतं कञ्चन दूत्याह कुत इति इह केदारे क्षेत्रे कलमानां शालीनां सस्यानां वेत्यर्थः। मञ्जरीं त्यजसि केदारमञ्जरीत्यागे तत्र प्राणरक्षणमपि कथमित्याशयः। कुरङ्गशावकहरिणबालकपदेनानभिज्ञत्वं भीतियोग्यत्वञ्च व्यज्यते ननु रक्षितोऽयं पुरुषो दृश्यते कथम्भक्षणीयमित्यत आह तृणबाणः तृणकल्पितशरः, तृणकल्पितधनुर्युक्तः तृणघटितः तृणरचितः कपटपुरुषः कल्पितपुरुषोऽयं प्रत्यक्ष इत्यर्थः। अनेन किमपि न कर्त्तुं शक्यत इति त्वया निर्भीतेन भोक्तव्या मञ्जरीत्याशयः। अथ च यथा त्वं नवीनयौवनस्थेयमपि सर्वथा वयोः प्रेम समुचितं न चास्य रक्षकस्य भीतिर्यतोऽयं सकलपुरुषधर्म्मशून्यः ज्ञास्यत्येव न, यदि ज्ञास्यति तदापि न विघ्नं करिष्यतीत्याशयः ॥ १६३ ॥

इति श्रीभवानीनाथनाम्नो मिश्रश्रीसचलविरचिते आर्य्यासप्तशतीविवरणे रसप्रकाशे ककारव्रज्या समाप्ता।

खलसख्यं प्राङ्मधुरं वयोऽन्तराले निदाघदिनमन्ते ॥
एकादिमध्यपरिणतिरमणीया साधुजनमैत्री ॥१६४॥

सर्व्वथा सज्जनेन मैत्री कर्त्तव्येति पिता पुत्रमुपदिशति खलेति खलेन दुष्टेन सख्यं प्राक्करणात्प्रागेव न तु मध्ये शेषे वा मधुरं प्रियमित्यर्थः। अन्तराले यौवने वयोमधुरं सुखदं सुन्दरं वेत्यर्थः अन्ते शेषे निदाघदिनं ग्रीष्मदिवसं सुन्दरमित्यर्थः। एतत्त्रितयमपि सर्व्वदानमधुरमिति पूर्व्वार्धार्थः। ननु तर्हि कालत्रयमधुरं किमित्यत्राह एका मुख्या केवला वा साधुजनेन सज्जनेन सह या मैत्री मित्रता सा आदौ प्रथमतः मध्ये करणसमये परिणतौ शेषे च रमणीया सुखदात्रीत्यर्थः-तथा च सा सर्व्वात्मना कर्त्तव्येति भावः॥ १६४ ॥

॥ इति कखारव्रज्या समाप्ता ॥

गुणमधिगतमपि धनवान्न चिरान्नाशयति रक्षति दरिद्रः ॥
मज्जयति रज्जुमम्भसि पूर्णः कुम्भः सखि न तुच्छः ॥१६५॥

विद्यादिगुणशालिना पुंसा गुणरक्षणविरोधिनि धने यत्नो न कर्त्तव्यः किन्तु गुणरक्षणाविरोधेन प्राप्तमात्रपरिपालनं कर्त्तव्यमिति सकलविद्याविशारदोयं धनार्थं कञ्चनमपि व्यापारं न करोतीति मम दुःखं न गतमितिवादिनीं पण्डितपत्नीं प्रति पण्डितपत्न्येव काचिदुपादिशति गुणमिति धनवान् धनपरिपूर्णः गुणं विद्यादिकं न चिरान्नाशयति किन्तु शीघ्रमेव नाशयतीत्यर्थः। गुणमधिगतमपि प्राप्तमपि नाशयति अपिना अप्राप्तस्यार्ज्जने का शंकेति ध्वन्यते। दरिद्रः धनशून्यः गुणं रक्षत्यपि अपिरन्नापि योज्यः अनधिगतमप्यर्ज्जयतीत्यर्थः। पक्षे गुणं दामधनवान् गुरुभूतः केनचिद्वस्तुना दरिद्रो लघुरित्यर्थः। रज्जुं गुणं पूर्णः कुम्भः जलपरिपूर्णो घटः अम्भसि जले मज्जयति यावदधः गन्तुं शक्नोति तावदधो नयतीत्यर्थः। सखि न तुच्छः जलशून्यः कुम्भः रज्जुं न मज्जयति किन्तु पर्य्यवस्थापयतीत्यर्थः। तथाच धनमत्तः स्वयमप्यधो गच्छति गुणमपि नाशयति गुणनाशेन धनमदेन च इह लोके परलोके च निन्द्यो भवति दरिद्रस्तु गुणरक्षणेनानपवादेन चोभयत्र लोके सुखी भवति दरिद्र एव श्रेयानिति त्वया विषादो न कर्त्तव्यः कर्म्मानुसारेण यथाकालं धनमपि भविष्यत्येव पण्डितोचितमेव तव पतिः करोतीत्याशयः। यद्वा नायिका दारिद्र्यं दृष्ट्वा पीड़ितां नायिकासखी गुणवान् त्वं धनव्यापारं कथन्नकरोषीति नायकं प्रति वदन्तीं नायक आह हेसखीतिसम्बोधनं नायकोक्तं नायिकासखीत्वात्। सम्यगेव नाटकेषु तथा दर्शनात्। यद्वा बहुगुणवता दरिद्रेण केनापि नायिकां संयोजयितुं धनापेक्षाशून्यायास्तव सधननिर्द्धनविचारो निरर्थकः वस्तुविचारे तु परोपकाराविस्मरणरूपगुणशाली दरिद्र एव प्रेमकरणे श्रेयान् न तु तद्विस्मरणशाली धनवानिति दूत्याह ॥ १६५ ॥

गुरुरपि लघूपनीतो न निमज्जति नियतमाशये निहितः॥
वानरकरोपनीतः शैलो मकरालयस्येव ॥ १६६ ॥

गुणिना महता महाप्रभुदर्शनं प्राथमिकं स्वसमानशीलद्वारपण्डितद्वारेणैव कर्त्तव्यं न तु द्वारपालादिद्वारेण इति विशेषतः सामान्यतश्च महद्भिर्महतां प्राथमिकदर्शनं महत्वाश्रितजनद्वारेणैव कर्त्तव्यं नाल्पजनद्वारेणेति वा कश्चिदुपादिशति गुरुरिति गुरुः विद्वान् महान् वा अपिना लघोरपि गुरुद्वारेण महत्त्वं भवतीति सूच्यते। लघुना

द्वारपालादिना क्षुद्रजनेन वा उपनीतः प्रभुसमीपं महत्समीपं वा आनीतः। नियतं निश्चितं महतः प्रभोः महाशयस्य वा आशये हृदयेऽभ्यन्तरे वा न निमज्जति न प्रीतिपात्रं महत्वेन ज्ञातं वा भवति । अथच निमग्नो न भवतीत्यर्थः । दृष्टान्तयति वानरस्य मर्कटस्य करेण हस्तेनोपनीतः । समुद्रबन्धनार्थमानीतः शैलः पर्व्वतः मकरालयस्य समुद्रस्याशयेन निमग्नः यथा तथेत्यर्थः । तथाच जलमात्रे निमग्नता स्वभावस्यापि गुरोः पर्व्वतस्य वानरकरोपनीतत्वेन स्वभावोऽपि गतः । तेन स्वाभाविकमहत्त्वमपि लघूपनीतता नाशयतीति सर्व्वथा तन्न कर्त्तव्यमित्याशयः ॥ १६६ ॥

**गौरीपतेर्गरीयो गरलं गत्वा गले जीर्णम् ॥**
**जीर्य्यति कर्णे महतां दुर्व्वादो नाऽल्पमपि विशति ॥१६७॥**

केषाञ्चिद्दुर्व्वादो न वक्तव्यो न वा श्रोतव्यः कदाचिच्छ्रवणेऽपि तस्मिन् सत्यमिति विश्वासो न कर्त्तव्य इति कश्चित्कञ्चिदुपदिशति गौरीपतेरिति शिवस्य गले गलान्तिके कण्ठदेशे इत्यर्थः । गरलं विषं जीर्णं निलीनमित्यर्थः । कीदृशम् गरीयः अत्यन्तदुष्टमित्यर्थः । गत्वा समुद्रादागत्य गत्वापदेन दुष्टसमीपं न गन्तव्यं तदागमने तन्नाशोपायः कर्त्तव्य इति व्यज्यते । तेन च दुर्वादश्रवणं न कर्त्तव्यं यदि कश्चिदागत्य श्रावयति तदा तद्गोपनमेव कर्त्तव्यमित्यावेद्यते । गले गरलं जीर्णं न तु शिवस्य हृदयग्राहितं जातमित्यर्थः । विशेषदृष्टान्तेन सामान्येन साधयति महतां सज्जनानां कर्णे दुर्व्वादः अकस्मात्केनचित्केषामपि दुर्वादः श्रावितः जीर्य्यति जीर्णो भवत्यल्पं यथास्यात्तथा न हृदयं विशति विश्वासविषयो न भवतीत्यर्थः । तथाच महान्तः केषामपि दुर्वादं न शृण्वन्ति अकस्माच्छ्रवणेऽपि न वदन्ति न वा विश्वासं कुर्व्वन्तीत्याशयः ॥१६७॥

**गृहपतिपुरतो जारङ्कपटकथाकथितमन्मथाऽवस्थम् ॥**
**प्रीणयति च पीडयति च बाला निःश्वस्य निःश्वस्य ॥१६८॥**

कश्चित्कञ्चिदाह गृहपतीति कृष्णं गृहपतिपुरतः गृहस्वामिनोऽध्यक्षमनेन गृहपतेरनभिज्ञत्वेन प्रतार्यत्वं ध्वन्यते कपटकथया द्व्यर्थकथया त्वया रामोपयोगो मम बहुधा कारितः परन्तु मालती नाद्य लब्धा अतो मनः प्रसादो न जात इत्यादिरूपया कथिता मन्मथावस्था स्वकीयमन्मथकारितावस्था येन तमित्यर्थः । मन्मथारम्भमिति

पाठे कथितो मदनविकारारम्भो येन तमित्यर्थः । जारमुपपतिं बाला षोडशवार्षिकी- त्यर्थः । निःश्वस्य निःश्वस्य क्षुद्रं मालतीपुष्पं तदपि न लब्धं भवतेतिपीडया वारं वारं पतिपुरत एव प्रव्यक्तं श्वासं कृत्वेत्यर्थः । अथ निःश्वस्य तव विरहेण प्राणाः गमिष्यन्त्येवेति श्वासेन सूचयित्वाप्रीणयति तृप्तं करोतीत्यर्थः । दृढ़प्रेमनिश्चयादि- त्याशयः । पीडयति दुःखितं करोति निःश्वस्य निःश्वस्येत्यन्वयः । स्वस्यापि निः श्वासेन समन्मथत्वसूचनेनेत्याशयः । प्रीणनपीडनयोः परस्परसमुच्चयं चकार- द्वयं तथाच आरामस्य रामाया वा उपयोगकथनेन समन्मथं जारं विज्ञाय निःश्वासेन बालापि स्वविकारं सूचयतीतिपुरतस्तस्मात् स्त्रियाऽसाध्यं किमपि नेत्याशयः ॥१९८

गतिगञ्जितवरयुवतिः करी कपोलौ करोतु मदमलिनौ ॥
मुखबन्धमात्रसिन्धुर लम्बोदर किं मदं वहसि ॥ १९९ ॥

सुरतप्रवीणं समीचीननायकस्पर्द्धाशालिनं तत्सामर्थ्यतरक्षा काचित्सामा- न्याह गतीति गत्या चलनेन गञ्जिता न्यूनतां नीता वरा श्रेष्ठा युवतिर्येन सः पक्षे गत्या कामशास्त्रोक्तेन इभगत्या गञ्जिता सुरते पराजिता युवतिर्येन स इत्यर्थः । करी हस्ती तत्तुल्यो नायकः स्वकपोलौ गण्डस्थलरूपौ मदेन मदजलेन मलिनौ करोत्वित्यर्थः । मुखबन्धमात्रेण गजाकारः न तु गजकार्य्यकारीत्यर्थः । न वा समीचीननायककार्य्य- कारीत्यर्थः । लम्बोदरगणेशपक्षे सुतार्थमुत्थानेप्यसमर्थः मदं मदजलं पक्षे सन्नायक- समानोऽस्मीति गर्व्वं किं वहसि तव गतिरेव न सम्यगित्यर्थः पक्षे सुरतसामर्थ्य- मपि नेत्यर्थः ॥ १९९ ॥

गेहिन्याः कलयन्ती गोत्रस्खलितापराधतो मानम् ॥
स्निग्धां प्रिये सगर्व्वां सखीषु बाला दृशं दिशति ॥२००॥

काचित्काञ्चिदाह गेहिन्या इति गेहिन्याः ज्येष्ठपत्न्या गोत्रस्खलितापराधतः बालानामग्रहणरूपगोत्रस्खलितापराधतः स्खलितं स्खलनमित्यर्थः । मानं पतिं प्रति- मानं कलयन्ती शृण्वन्तीत्यर्थः । प्रिये पत्यौ स्निग्धां स्नेहयुक्तां गोत्रस्खलनेन नामग्रह- णात्प्रेमनिश्चयादित्यर्थः सखीषु सगर्व्वामहमेवैतादृशीनान्येत्याशयः । दृशं नयनं

बाला पश्चाद्भिर्वाहिता दिशति ददातीत्यर्थः । तथाच प्रमादकृतेनापि पतिप्रेमप्रकाशादिना स्त्रीणां महामान इत्याशयः ॥ २०० ॥

**ग्रीष्ममये समयेऽस्मिन् विनिर्म्मिते कलयकेलितरुमूले ॥**
**अलमालवालवलयच्छलेन कुण्डलितमिव शैत्यम् ॥२०१॥**

त्वत्कुचगतं शैत्यमतस्सम्यगालिङ्गनं देहि कुचभिन्ने प्रयासेनापि शैत्यं नास्तीति नायको नायिकामुपवनगतामाह ग्रीष्मेति हेप्रिये इति पूरणीयं संबोधनमनुपादानन्तुनायके कामार्त्तत्वं व्यञ्जयति ग्रीष्ममयेऽस्मिन् समये महाप्रौढग्रीष्मकालइत्यर्थः । विनिर्म्मिते प्रत्यहं सिक्तेपीत्यर्थः । क्रीडावृक्षमूलेऽन्यशैत्यमत्रस्थितमेवातो रतकरणमुचितमिति व्यज्यते । आलवालस्य पुष्पजलरक्षार्थनिबद्धस्य यद्वलयं वेष्टनं तस्य कपटेन छलेनालमत्यर्थे शैत्यं कुण्डलितं कुण्डलनाप्रापितमिव शैत्याभावसूचनार्थं कृतकुण्डलमिव कलय पश्य तथाच त्वत्कुचस्पर्शं विना ग्रीष्मशान्तिर्न्नेति त्वयावश्यमालिङ्गनन्देयमित्याशयः । अथवा तरुमूलं संकेतस्थानं शङ्कितं खलैरतस्तत्यजेति नायिकां प्रतिसख्युक्तिः केलितरुमूलस्थितमुपपतिं पश्येति दूत्यूक्तिरित्यपरे ॥ २०१ ॥

**गुणबद्धचरण इति मा लीलाविहगं विमुञ्च सखि मुग्धे ॥**
**अस्मिन् वलयितशाखे क्षणेन गुणयन्त्रणं त्रुटति ॥२०२॥**

सर्व्वनायिकाधिकमदीयगुणनिबद्धोयं कस्या अपि स्वाधीनो न भविष्यतीति विश्वासशालिनीं नायिकामन्योक्त्या सखी वदति गुणबद्धेति लीलाविहगं क्रीडापक्षिणं तत्तुल्यनायकञ्च सखि उपदेशयोग्ये मुग्धे मूढे विहगमोक्षणात् नायकजिज्ञासया वा गुणेन सूत्रेण पक्षे कामकलादिना बद्धः निरुद्धगमनादन्यनायिकासमीपगमनाद्वा चरणो यस्य स इति विश्वासादित्यर्थः मा विमुञ्च अस्य मोक्षणं न कर्त्तव्यमित्याशयः अस्मिन् वृक्षे नगरे च वलयिता वेष्टिता शाखा यस्मिन् वहुशाखे इत्यर्थः वलयिता व्याप्ता शाखा शाखातुल्या दूत्यादिर्य्यत्र तस्मिन्निति नगरपक्षे क्षणेन गुणयन्त्रणं सूत्रबन्धनं कामकलाधीनत्वञ्च त्रुटति नश्यतीत्यर्थः यथा बहुशाखवृक्षे विहगसूत्रभङ्गः तथा नायकस्य त्वदधिकनायिकादूत्यादिदर्शनेन तवानधीनत्वं स्यादेव गर्व्वं विहाय तदधीनत्वे यत्नं कुर्व्विति भावः ॥२०२

गुरुगर्जसान्द्रविद्युद्द्वयमुद्रितकर्णचक्षुषां पुरतः ॥
बाला चुम्बति जारं वज्रादधिको हि मदनेषुः ॥२०३॥

कयोश्चिद्वृत्तं दृष्ट्वाश्चर्य्यं सखायं सखाह गुरुगर्ज्जेति बाला षोडशहायना जारं चुम्बति हि यतः वज्रात् वज्रपातात् मदनेषुः कामशरः अधिकः वज्रपातमङ्गीकृत्यपि कामशरनिवारणाय चुम्बनं करोतीत्यर्थः गुरुगर्ज्जो मेघशब्दः गुरुगर्ज्जपदेनाकालिकत्वं तेन वज्रपातावश्यकत्वं व्यज्यते सान्द्रा निविड़ा या विद्युत्सौदामिनी तद्द्वयेन मुद्रितं कर्णचक्षुर्य्येषान्तेषां गुरुजनानां पुरतः अग्रे तथाच न लज्जा न मर्य्यादा न प्राणभीरपीत्याशयः ॥ २०३ ॥—

गृहिणीगुणेषु गणिता विनयः सेवा विधेयतेति गुणाः ॥
मानः प्रभुता वाम्यं विभूषणं वामनयनानाम् ॥ २०४ ॥

नायको वयस्यमाह गृहिणीति गृहिण्या गृहकर्म्मणि युक्तायास्संतानादिशालिन्या गुणेषु बहुषु गणयितुमशक्येष्विति यावत् गणिताः विदग्धेन परिगणिताः प्राधान्येन निर्दिष्टा इत्यर्थः तान् क्रमेणाह प्रथमं विनयः नम्रता गुरुकुटुम्बस्वामिसामाजिकादौ सर्व्वदा विनयकरणमित्यर्थः सेवा गुरुस्वाम्यादिसेवनं यथोचितभोजनादिदानेन तेषां प्रीणनमित्यर्थः विधेयता आज्ञाकारिता स्वाम्यादेरित्यर्थः इति गुणा इति त्रयो गुणास्साव्वंधिकाः अपेक्षिता इत्याशयः ननु मानादयः कुतो न गणिता इत्यत आह मानः सापराधे प्रिये मानकरणं प्रभुतात्यन्तसुरततृप्तौ रतसामर्थ्यं मम दासोऽसीत्यादिवाक्यैर्वा प्रभुता वाम्यं कौटिल्यं द्वितीयनायिकाशंकया सर्व्वदा सङ्गोपेन पत्या मिलनमित्यर्थः वामनयनानामुत्तमस्त्रीणां भूषणं भूषणवत् स्वेच्छया गृह्णाति स्वेच्छया परित्यजतीत्यर्थः तथाच मानद्वयोऽस्वाभाविकः कदाचिदुत्तमानाम्भवत्येवेति न ते गणिताः सर्व्वसिद्धा इत्याशयः विशेषास्त्वङ्गना भीरुः कामिनी वामलोचनेत्यमरः अत्र बहवः पक्षा विस्तरभयान्न लिख्यन्ते ॥२०४॥

गुणमान्तरमगुणं वा लक्ष्मीर्गङ्गा च वेद हरिहरयोः ॥
एका पदेऽपि रमते न वसति निहिता शिरस्य परा ॥२०५॥

अस्याः सुनायकेपि कथमौदास्यमिति वादिनीं काञ्चित्काचिदाह गुणमिति आन्तरं गुप्तमुदासीनाऽवेद्यमिति यावत् गुणं नायकगुणम् अगुणं नायकदोषं लक्ष्मीः हरेः गुणं गङ्गा हरस्यागुणं दोषं वेदेत्यर्थः एका लक्ष्मीः पदेऽङ्गुष्ठे रमते क्रीडति निहितापि शिरसि जटायां स्थापितापि गङ्गा न वसति न तत्रैव निवसति बहिर्गच्छतीत्यर्थः तथाच विष्णुगुणपरिचयशालिनी लक्ष्मीः विष्णुं सकलान्तरगुणभाजनं बुद्ध्वा बाह्यसमादराभावेपि पदे वसति गङ्गा बाह्यं समादृतापि आन्तरगुणशून्यं बुद्ध्वा शिवं त्यजति यथा तथेयमस्य नायकस्य गुणं ज्ञास्यति तदा सुप्रीता भविष्यतीत्याशयः वस्तुतस्तु नायकानां बाह्यसौन्दर्य्यधनादयो गुणाः क्षणस्थायिनो विषयाः आन्तरा एव सार्व्वादिका नायकगुणा नायिकाचित्तहारिण इत्यन्वयव्यतिरेकाभ्यामाह ॥ २०५ ॥

**गत्वा जीवितसंशयमभ्यस्तः सोढुमतिचिराद्विरहः**
**अकरुण पुनरपि दित्ससि सुरतदुरभ्यासमस्माकम् ॥ २०६ ॥**

चिराद्विदेशादागतं प्रथमसुरतप्रवृत्तं नायिकाऽऽह गत्वेति जीवितसंशयं जीवनसन्देहं गत्वा प्राप्य यौवनमध्य एव भवद्गमनेनेत्यर्थः अतिचिरात् बहुकालात् विरहवियोगः सोढुं सहिष्णुताविषयं कर्त्तुमभ्यस्तः शरीरशोषणादिनाऽधीनः कृतइत्यर्थः अकरुण परवेदनानभिज्ञ अत एव चिरंविलम्बितः परदेशे इत्याशयः पुनरपि यथाविरहाभ्यासायसुरताभ्यासंमामकारयः पूर्व्वं तथाधुनाऽपि सुरतस्य दुरभ्यासं दुष्टाभ्यासं दित्ससि दातुमिच्छसि तन्न युक्तमितिभावः मम इत्येव वक्तव्ये बहुवचनं किञ्चिद्गोपनाय तथाच पुनर्य्यदि गन्तु समयो वर्त्तते तदा सुरतं मास्तु यदि सुरतापेक्षा तदा कदापि नैव गन्तव्यमित्याशयः ॥२०६॥

**गोत्रस्खलितप्रश्नेप्युत्तरमपिशीलशीतलं दत्वा ॥**
**निश्वस्य मोघरूपे स्ववपुषि निहितं तया चक्षुः ॥२०७॥**

कस्याश्चित् शृङ्गारवृत्तं कश्चिदाह गोत्रेति गोत्रस्खलितेन अन्यनायिकासमक्षमन्यनायिकानामसंग्रहणेन यः प्रश्नः तस्मिन् सत्यपि कोपकारणे इत्यर्थः उत्तरं प्रश्नोत्तरम् अतिशीलेन अतिसमीचीनचरितेन शीतलं मधुरं यथोचितं दत्वा नायकं गोत्रस्खलितपृच्छकं प्रति दत्वेत्यर्थः निश्वस्य खेदात् श्वासं कृत्वेत्यर्थः मोघं व्यर्थं रूपं सकलनायिकारूपाधिकं रूपं यस्य वपुषः तस्मिन् स्वस्य वपुषि तया नायिकया

चक्षुर्निहि ' दत्तमित्यर्थः ईदृशमपि सर्वोत्तमं रूपं मम नायकवशीकरणसमर्थं न यतः अतो मां धिक् नायकोयं यदि स्वभावचपलस्तथापि तत्सङ्गतां मामेवं धिगित्याशयः ॥ २०७ ॥

गन्धग्राहिणि शालोन्मीलन्निर्य्यासनिहितनिखिलाङ्गि ॥
उपभुक्तमुक्तभूरुहशतेऽधुना भ्रमरि न भ्रमसि ॥ २०८ ॥

काञ्चित्सामान्यामन्योक्त्या कश्चिदाह गन्धेति गन्धग्राहिणि सौरभाघ्रानकारिणि पक्षे यौवनलेशानुसारिणि शालात् वृक्षविशेषात् उन्मीलन् सम्भवन् यो निर्य्यासः श्लक्ष्णघनीभूतरसविशेषसार इत्यर्थः तस्मिन् निहितं दृढसंयुक्तं निखिलमङ्गं यस्यास्तत्संबोधने पक्षे केनचित्प्रतिबोधिते इत्यर्थः उपभुक्ताः मुक्ताश्च भूरुहाः वृक्षाश्च ते शतं तस्मिन् पक्षे एकैकवारं भुक्ताः परित्यक्ताश्चेत्यर्थः भूरुहशते नवीननायकशते न कुत्रापि तव स्थैर्य्यमित्याशयः अधुना निर्य्यासलग्ना नायकाभासेन रुद्धा भ्रमरि भ्रमरपत्नि नायकमात्राभिमुखभ्रमणशीले वा न भ्रमसि भ्रमणं कुर्व्वित्यर्थः उचितमेव सर्व्वैरुपेक्षितायास्तव जातमित्याशयः ॥२०८॥

गुरुषु मिलितेषु शिरसा प्रणमसि लघुषून्नता समेषु समा ॥
उचितज्ञासि तुले किं तुलयसि गुञ्जाफलैः कनकम् ॥२०९॥

केनापि नायकेन नायिकां योजयितुं स्वैरकथायां यथा स उत्तमस्तथायमपीतिवादिनीं नायिकां स्तुतिमात्रशक्यां स्तुवन्तीमन्योक्त्या दूत्याह गुरुष्विति तुले स्वर्णादितोलनयन्त्ररूपे इत्यर्थः पक्षे तुलासदृशि नायिके इत्यर्थः एकवचनेन चतुर्द्दशभुवने नान्या त्वत्सदृशी उचितज्ञेति सूच्यते उचितज्ञासि उचितमेव करोषीत्यर्थः पक्षे उचितं लोकवेदसिद्धमेव जानासीत्यर्थः अत इति शेषः कुतः यतः गुरुषु अधिकभारशालिषु पक्षे श्रेष्ठेषु मिलितेषु आरूढेषु पक्षे आगतेषु शिरसा अग्रभागेन पक्षे मस्तकेन प्रणमसि प्रकर्षेण नता भवसि पक्षे प्रणामं कुरुषे लघुषु अल्पगुरुताशालिषु पक्षे न्यूनजनेषु उन्नता ऊर्द्ध्वंगता पक्षे साभिमानासीत्यन्वयः समेषु द्वितीयभागधृतवस्तुपरिमाणसमानपरिमाणेषु समा अवनत्युन्नतिशून्येत्यर्थः पक्षे समव्यवहारा एतादृशी त्वं गुञ्जाफलैः कनकं सुवर्णं पक्षे सर्वोत्तमवर्णवन्तममुं नायकशिरोमणिं गुञ्जाफलैरन्यापेक्षयोत्तमैरप्येतदपेक्षयो-

ऽतिन्यूनैः किं तुलयसि तोलनं करोषि पक्षे समं करोषीत्यर्थः अन्या अवि-दग्धा नायिका एवं कुर्व्वन्तु वदन्तु वा तव तु सर्व्वथानुचितमतस्सर्व्वोत्तमा-यास्सर्व्वोत्तमेन समागम एव सुखकारीत्याशयः ॥२०६॥

**गेहिन्या ह्रियमाणं निरुध्यमानं नवोढ़या पुरतः ॥**
**मम नौकाद्वितयाऽर्पितपद इव हृदयं द्विधा भवति ॥२१०॥**

एका सकलगृहभारसमर्था परा च नवोढ़ा सकलसुखकारिणीति-पत्नीद्वययुतस्य तस्य तत्र कथं खेद इति वयस्येन पृष्टः अनेनैव हेतुना खिन्नोऽस्मीति नायको वयस्यमाह गेहिन्येति मम हृदयं चित्तं द्विधा द्विभागम् अथच द्विप्रकारकं कदाचिन्न-वोढ़ाधीनं कदाचिद्गृहिण्यधीनं चेत्यर्थः कस्येव नौकाद्वितये नौकायुगले अर्पितम् एकैकं दत्तं चरणं येन तस्येवेत्यर्थः गेहिन्या प्रथमपत्न्या ह्रियमाणं पश्चादाकृष्यमाणं प्राथम्यात् नवोढ़ापश्चाज्जातविवाहया पुरतः अग्रतः निरुध्यमानं स्वाभिमुखं कर्त्तुमन्यतः प्रतिरोधितं हृदयमित्यर्थः नौकाद्वयारूढ़स्यापि हृदयं वक्षस्थलं निरु-द्धगामिनौकाद्वितयविपाटने विदीर्णं भवतीतिजातिः तथाचानेनैव प्रकारेण मम खेद इत्यर्थः केचित्तु द्वितीयविवाहप्रवृत्तं सखायं निवारयितुम् द्विपत्नीको नायक-स्सखाह विवाहद्वयं न कर्त्तव्यमित्याशय इति प्राहुः ॥२१०॥

**गुण आकर्षणयोग्यो धनुष इवैकोपि लक्षलाभाय ॥**
**लूतातन्तुभिरिव किं गुणैर्विमर्द्दासहैर्बहुभिः ॥२११॥**

किञ्चित्किञ्चिदनेकगुणवत्त्वेन गर्वशालिनं सुशिक्षितकविय आह गुण इति गुणः विद्यादिः रज्जुविशेषो वा आकर्षणयोग्यः श्रवणयोग्यः अमुकस्य गुण ईदृश इति श्रवणमात्रेण श्लाघ्यः आकृष्यते कर्णपर्य्यन्तमानीयते यत्तदाकर्षणं तत्र योग्य इत्यर्थः आकर्षणेन कर्णपर्य्यन्ताकर्षणेन योग्य इतच कार्य्यकारीतिच एकोपि लक्ष-लाभाय लक्षसंख्यकद्रव्यविजयादिलाभायेत्यर्थः शरव्यलाभाय चेत्यर्थः धनुष इव धनुर्गुणः कर्णपर्य्यन्ताकृष्टःशरव्यलाभाय यथा तथेत्याशयः विमर्द्दासहैः अभिघा-तासहनैः विचाराक्षमैः बहुभिरपि गुणैः विद्यादिभिः तन्तुरूपैर्वा मकरीतन्तुतुल्यैः किंन किमपीत्यर्थः तथाच विचारक्षमाः श्रवणयोग्याः बहवो गुणाः सम्पाद्याः तद-संभवे एका विद्या सुशिक्षिता संपादनीया विमर्द्दासहश्रवणयोग्याः बहुगुणसंपादनं

निरर्थकमेवेत्याशयः लक्षं लक्ष्यं शरव्येपीत्यमरः लूता स्त्री तन्तुवायोर्णलाभसंकट-कास्समा इत्यपि ॥ २११ ॥

**गायति गीते शंसति वंशे वादयति सा विपञ्चीषु**
**पाठयति पञ्जरशुकीस्तवसंवादाक्षरं बाला ॥२१२॥**

नायिकासक्ति नायके दूती वदति गायतीति बाला षोडशवार्षिकी अनुपेक्षणीये-त्यर्थः तव संवादाक्षरं मामागतमेव जानीहीति परिचारिकादिद्वारेणाकर्णितं वाक्या-क्षरमित्यर्थः एकत्वं विवक्षितं तथाच तव संवादाक्षरमेकं संवादवाक्यं वा प्रेमा-तिशयेन तव स्मरणार्थं पाठयतीत्यर्थः पञ्जरशुकम् एकमेव पंजरशुकेम् अयमपि पठिष्यति तदा पुनरन्यमुखादपि संवादश्रवणं भविष्यतीत्याशयः गीते गाने गायति संवादाक्षरगानमेव करोतीत्यर्थः वंशे वेणुवाद्ये शंसति विपञ्चीषु वीणासु वाद-यति तथाच नानाप्रकारेण संवादाक्षरस्मरणमेव करोति मत्सखी तस्माच्छीघ्रमेव भवता दर्शनं देयमिति भावः ॥ २१२ ॥

**गणयति न मधुव्ययम यम विरतमापिवतु मधुकरः कुमुदम् ॥**
**सौभाग्य मानवान् परम भूपति द्युमणये चन्द्रः ॥२१३॥**

उत्तमस्पर्द्धया नीचस्यापि प्रतिष्ठा भवतीति कश्चिदाह गणयतीति अयं नीचमतिः चन्द्रः मधुव्ययं कुमुदिनी मधुव्ययं न गणयति जानन्नपि भ्रमरकृतं न निवारयति न केवलं निवारणाभावमात्र किन्तु मधुकरः कुमुदं कुमुदिनीं कुमुच्छ-ब्दस्य हलन्तस्त्रिलिङ्ग रूपं पिवतु मधु पिवत्विति कथितव्ये कुमुदं पिवत्विति कथनं निर्विघ्न मधुपानं यथेष्टनायिकोपभोगञ्च व्यक्तयति भ्रमरस्य मधुपानं कुमुदिन्याम् स्वनायिकायां नायकान्तरोपभोगं कारयन् तस्याः शीलव्ययमपि न गणयत्यतो नायकापसदश्चन्द्रः द्युमणये सूर्य्याय असूयति यतस्तस्मादिव कारणात् सौभाग्यवान् मानवान् मानशाली चेत्यर्थः चन्द्रः सर्व्वेषामाह्लादकः तथाच सूर्य्य स्पर्द्धामात्रेण सौभाग्यादिशालित्वेन चन्द्रः प्रसिद्धः अन्यथा भास एवेत्याशयः अथवा नायिकायाः पतिविनोदासक्तायास्संकेतस्थलगमनाभावादुदासीन-मुपपतिं प्रति यथोचितकरणं न त्याजयति विदग्धो नायको न वा तत्करणेनोदासी-नोपि भवति यथा मधुकरं मधु पायत्येव द्युमणिमुपपतिमेव निवारयति सौभा-

ग्यादिशाल्यपि भवत्येवातिविदग्धश्चन्द्र इतिदृष्टान्तेन त्वमप्युपपतिनिवारक एवासि न पुनः पतिसंगमनिवारक इति पत्यनुरोधेन संकेतस्थलेऽनागमेपि सख्या औदासीन्यमनुचितमेवेति नायिकासखी नायकमाहेत्याशयः ॥ २१३ ॥

**गुणविधृता सखि तिष्ठसि तथैव देहेन किन्तु हृदयन्ते ॥**
**हृतममुना मालायाः समीरणेनेव सौरभ्यम् ॥२१४॥**

अत्यन्तरमणीयगुणमूर्त्तिं कञ्चननायकं स्वस्यामतिसश्लाघं बुद्ध्वा स्वभावसत्यपि दैवात् मदनचलहृदया जातेति बुद्ध्वा तां प्रति सखी परिहासं करोति गुणेति सखि अनेन तत्वज्ञता व्यज्यते गुणेन सतागुणेन पक्षे सूत्रेण विशेषेण धृता रुद्धा पक्षे ग्रथिता देहेन वपुषा स्वरूपेणच तथैव अविकारदशावत् तिष्ठसि निर्व्यापारासि कण्ठादौस्थापितासिच अन्यवेद्यबहिर्व्विकारशून्या सती गुणेनासीति समुदायार्थः किन्तु प्रकारान्तरं ते तव हृदयं अमुना प्रत्यक्षेण नायकराजेन हृतं स्वाधीनं कृतं गुणगौरवेण ते चित्तं बलेनैव वस्तुस्वभावाद्गृहीतं नतु त्वया स्वेच्छया दत्तमित्याशयः कस्याः केन किमिव मालत्याः सौरभ्यमामोदमिव समीरणेन वायुना इत्यर्थः समीरणपदे नादृश्यता सामर्थ्यमनिच्छयापि स्पर्शयोग्यत्वं देवदत्ततुल्यत्वं तापापनोदकत्वं द्वयोस्समत्वेन प्रेमकरणौचित्यं लज्जाहेत्वभावं नायकाश्वासकाङ्क्षविक्षेपकरणौचित्यमस्मत्समक्षमपि रतौचित्यमित्यादि व्यंजयति तथाच उद्यतस्य हि कामस्य प्रतिवादो न शस्यत इति न्यायेन यदि कुत्रापि कदापि प्रेमकरणं तदास्मिन्नेवोत्तमनायके तदुचितं नान्यत्रेति सखीपरिहासः यथार्थकथनं वा ॥२१४॥

**गुरुशदने नेदीयसि चरणगते मयि च मूकयापि तया ॥**
**नूपुरमपास्य पदयोः किं न प्रियमीरितं प्रियया ॥२१५॥**

नायको वयस्यमाह गुर्व्विति गुरुगृहे निकटवर्त्तिनि सति मानापनोदनार्थं मयि पदपतिते च सति मूकया वचनशून्ययापि गुरुसान्निध्यात् तया नायिकया पदयोः नूपुरयुगलमपास्य शब्दभीत्या परित्यज्य प्रियया मम प्राणभृतया किं प्रियमपेक्षितं न ईरितं कथितं तथाच नूपुरत्यागेन रतिरेवाङ्गीकृता यदि तदा सर्व्वमङ्गीकृतमित्याशयः नायिका स्वकीया विरोधाभासालङ्कारः ॥ २१५ ॥

**ग्रन्थिलतया किमिक्षोः किमपभ्रंशेन भवति गीतस्य ॥**
**किमनार्ज्जवेन शशिनः किं दारिद्र्येण दयितस्य ॥ २१६ ॥**

सधननायकसमागमाय दरिद्रे कि लग्नासीति वादिनीं दूतीं नायिकाह ग्रन्थिलेति इक्षोर्ग्रन्थिलपर्व्वयुतत्वे किं का हानिरपि तु नेत्यर्थः एवमग्रे रसाधिक्येन ग्रन्थिदोषो नेत्याशयः गीतस्य गानस्य अपभ्रंशेन नानादेशीयभाषारूपत्वेन न किमपीत्यर्थः स्वरमात्रोपयोगात् शशिनः कलारूपिणः अनार्ज्जवेन वक्रत्वेन किं भवतीत्यन्वयः अधिकाह्लादकत्वमेवेत्याशयः दयितस्य प्रेमपात्रस्य दारिद्र्येण निर्द्धनत्वेन किं भवति न किमपीत्यर्थः तथाच यदि सत्यं दृढं प्रेम तदा धनानुपभोगाभावः अन्यथा धनेनापि न किमपि मम दरिद्र एव श्रेयान्न धनवानित्याशयः ॥ २१६ ॥

**गेहिन्या चिकुरग्रहसमयसशीत्कारमीलितदृशापि ॥**
**बाला कपोलपुलकं विलोक्य निहितोस्मि शिरसि पदा ॥२१७॥**

कश्चिद्वयस्यमाह गेहिन्येति चिकुरग्रहसमये वदनचुम्बनार्थकेशपाशग्रहणोपक्रमे सशीत्कारं शीत्कारसहितं यथास्यात्तथा मीलिता दृक् यया तयापि गेहिन्येत्यर्थः सशीत्कारमिलितेत्यादिना सोन्मादत्वं चुम्बनसुखास्वादनं च व्यज्यते अपिना हननायोग्यसमयेपि हनने कोपाधिक्यं व्यज्यते शिरसि मस्तके पदा चरणेन निहतोस्मि ताडितोस्मीत्यर्थः बालाया नयननिमीलनसमये निकटस्थितायाः कपोलपुलकं मत्कृतचुम्बनसुखजनितं विलोक्येत्यर्थः बालाक्रीडाकरणे कदापि निषेधो न कृतः तथापि मम चुम्बनसमय एव बाला चुम्बनं मत्प्रतारणञ्च किमिति कोपेनेत्याशयः ॥ २१७ ॥

**गुरुपक्ष्म जागरारुण घूर्णत्तारं कथञ्चिदपि वलते ॥**
**नयनमिदं स्फुटनखपदनिवेशने कोपकुटिलभ्रु ॥ २१८ ॥**

नायिकां सखी वदति गुरुपक्ष्मेति इदं तव नयनं कथञ्चित्कष्टेन वलनेपि परावृत्तमपि कष्टं न भवतीत्यर्थः स्वाभाविकनिरीक्षणस्य का चर्चेत्याशयः गुरुपक्ष्म जागरणातिशयात् जागरेण अरुणं रक्तम् अत एव घूर्णन्ती तारा अक्षिकनीनिका यस्मिन् ततस्सर्वेषां कर्म्मधारयः स्फुटो यो नखपदनिवेशः नखविहारस्थानं स्फुट व्यक्त यन्नखपदं नखचिह्नं तत्र निवेशः नेत्रपात्र इति वा तत्कृतस्तज्जनितो

यः कोपः पत्युर्न्नखक्षत ज्ञानमित्याकोपः तेन कुटिला भ्रूर्य्यत्र तन्नयनमित्यर्थः तव नखक्षतानि बहूनि सन्ति तवाङ्गे तानि नेत्रापाटवेन न पश्यामि अस्माभिः दृश्यन्त एव रात्रौ रतिसमये समीचोनमेव लग्नं सर्व्वमधुना कोपो निरर्थक इ-त्याशयः ॥ २१८ ॥

इति श्रीसचलविरचिते आर्यासप्तशतीविवरणे रसप्रकाशे
गकारव्रज्या समाप्ता



## घकारव्रज्या

**घटितजघननिपीडितपीनोरुन्यस्तनिखिलकुचभारम् ॥**
**आलिङ्गन्त्यपि बाला वदत्यसौ मुञ्च मुञ्चेति ॥ २१९ ॥**

नायको वयस्यमाह घटितेति असौ बाला आलिङ्गन्त्यपि आलिङ्गनं कुर्वन्ती अपि मुञ्च मुञ्च इति वदति घटितं रतार्थं घटितं जघनं यथा भवति नि-पीडितपीनोरु यथा भवति न्यस्तो निक्षिप्तः निखिलकुचभारो यत्र तद्यथा स्यादेव-मालिङ्गन्त्यपि तथा चात्यन्ताभिप्रेतेपि वस्तुनि स्त्रीणां निषेधो विधिरेवेत्याशयः तदुक्तम् आलिङ्गने चुम्बनादौ नेति यद्वदति प्रिया स निषेधो महीपालविधिरेव प्रवर्त्तते इति महाराज ग्रन्थे यद्वा नायिकाया नवोढ़ाया निषेधेन श्लथं नायकं नवो-ढ़ापीडनार्थं प्रेरयति सखी असौ षोडशवार्षिक्यपि मुञ्च मुञ्चेति वदति स्त्रीमा-त्रस्वभावोयं निषेधः तेन श्लथेन त्वया न भवितव्यं सम्यक्पीडनमस्याः कर्त्तव्य-मित्यर्थः ॥ २१९ ॥

**घटितपलाशकपाटं निशिनिशिखिनो हि शेरते पद्माः ॥**
**उज्जागरेण कैरव कतिशक्या रक्षितुं लक्ष्मीः ॥ २२० ॥**

संसारोचितव्यापारेणैव लक्ष्मीरायाति स्थिरा च सर्व्वदृश्या च प्रशंस्या चोत्तमानां पुरुषाणां भवति अन्यथा नायाति आगतापि न स्थिरा स्थिरापि न लोकदृश्या दृश्यापि न प्रशंस्येति कश्चित्कञ्चिदन्योक्त्याह घटितेति पद्माः कमलानि उत्तमाः पुरुषाश्च घटितं निर्म्मितं पलाशानां पद्मपत्राणां कपाटं

यत्र नत्वथास्यात्तथा निशि निशि सर्व्वासु निशासु हि यतः सर्व्वलोको-चितरात्रिशयनार्थार्गलव्यापारादित्यर्थः सुखिनः सर्व्वलोकदृश्यप्रशस्यस्थिरल-क्ष्मीशालिनः कार्य्येण कारणाक्षेपात् शेरते सुप्तास्सर्वभोगान् कुर्व्वन्तीत्यर्थः तथाच पद्मानामुचितव्यापारेण रात्रिसौख्यं दिवालक्ष्मीप्रकाशः सूर्य्यविकाशित्वा-द्भवति कैरवाणामनुचितव्यापारशालिपुरुषाणां रात्रिविकाशित्वात् दिवाशयननि-शाजागरणरूपविरुद्धव्यापारवत्वेन लक्ष्मीर्न्नागता न लोकदृश्या प्रशस्यास्थिरेत्याशयः उज्जागरेण रात्रिजागरेण लक्ष्मोः विकाशः संपच्च कति कियत्पर्य्यन्तं रक्षितुम् आनेतुं स्थिरयितुं वा शक्या अपितु नेत्यर्थः अथवा अनुपद्रुतेपि देशे न्यायागतस्व-संपत्प्रकाशोपि यथोचितसमय एव कर्त्तव्यो नत्वयथोचितसमये इति कश्चिदाह तथाच पत्रकवाटेनापिसौख्यं पद्मानां कैरवाणां सकलनिशाजागरणापि नेत्याशयः ॥ २२० ॥

घूर्णन्ति विप्रलब्धाः स्नेहापायात्प्रदीपकलिकाश्च ॥
प्रातः प्रस्थितपान्थस्त्रीहृदयं स्फुटति कमलं च ॥२२१॥

प्रातर्गमिष्यामीति वादिनं नायकं नायिकासख्याह यद्वा कश्चित्प्रातःकालं वर्णयन्नाह घूर्णन्तीति विप्रलब्धाः वियोगिन्यः यद्वा संकेतस्थले सायंकालेऽनागत-प्रियतमानायिकाप्रभेदरूपा इत्यर्थः प्रदीपकलिकाश्च दीपशिखाश्चेत्यर्थः प्रातरिति सर्व्वत्र संबध्यते स्नेहापायात् प्रेमापगमात् तैलक्षयात् घूर्णन्ति मयि प्रेमाभावे व्यवस्थातिक्रमेपि संकेते नियनेपि वा किमिति नागतस्स कदागमिष्यति मिलि-ष्यति वेत्यादिचिन्तनेन संपूर्णनिशां जागरेण घूर्णितचित्तस्वभावेन भ्रमणशीलाश्च भवन्तीत्यर्थः प्रस्थितस्य गन्तुमुद्यतस्य नतु गतस्य स्त्रीहृदयं स्वभावमृदु स्फुटति द्विधा भवति कमलं च स्फुटति विकसतीत्यर्थः तथाच त्वद्गमनावसर एव मम सख्याहृदयं विदीर्णं भविष्यतीति न गन्तव्यं नोचेत्प्रेमापायोवश्यं भविष्यतीत्यव-श्यन्न त्वया गन्तव्यमित्याशयः ॥ २२१ ॥

इति श्रीसचलविरचिते आर्य्यासप्तशतीविवरणे रसप्रकाशे
घकारव्रज्या समाप्ता

चपलस्य पलितलांछितचिकुरं दयितस्य मौलिमवलोक्य ॥
खेदोचितेपि समये संमदमेवाददे गृहिणी ॥२२२॥

काचित्प्रार्थयथेष्टस्वपतिसमागमा लब्धसन्ताना गलितयौवना नायिका तस्या वृत्तान्तं काचित्काञ्चित्प्रत्याह चपलस्येति दयितस्य प्रियस्यापि अनेन हर्षाभावयोग्यता सूचिता मौलिं मस्तकं पलितेन जराशौक्ल्येन लाञ्छिताः चिह्निताः चिकुराः केशा यस्मिन् तमित्यर्थः ननु दुःखयोग्यसमये कथं हर्ष इत्यतो हेतुगर्भविशेषणं चपलस्य पराङ्गनाशतलंपटस्य तथाच मम यौवनं गतमेवान्योपयोगार्थं यौवनमस्य दुःखदमेव तदुत्तरं तन्नाश एव श्रेयानित्याशयः अतएव खेदोचिते खेदयोग्ये समयेपि पतियौवननाशसमयेपीत्यर्थः संमदमेव हर्षमेव नतु दुःखलेशमपीत्यर्थः आददे सम्यक् जग्राह गृहिणीयं गलितयौवनेत्यर्थः मुत्प्रीतिःप्रमदो हर्षः प्रमोदामोदसम्मदा इत्यमरः ॥२२२॥

चण्डि प्रसारितेन स्पृशन् भुजेनापि कोपनां भवतीम् ॥
तृप्यामि पंकिलामिव पिबन्नदीं नलिननालेन ॥२२३॥

नायको मानिनीमाह चण्डीति चण्डि कोपने प्रसारितेन भुजेनापि वक्षसा स्पर्शाभावेपीत्याशयः कोपनां मृदुशरीरां भवतीं स्पृशन् भीत्या दूरात्स्पृशन्नपि तृप्तो भवामीत्यर्थः तथाच दूरस्पर्शेपि मम सुखं जायत एव मद्दुःखार्थं तव कोपकरणं वृथेतिभावः नलिननालेन कमलनालान्तर्द्वारेण कर्दमशालिनीं नदीं पिबन् यथाऽविलं जलमपहाय दूरात्पङ्कालग्नः स्वच्छं जलं पिबति एवमेव ताडनादिपराभवशून्यस्तवाङ्गस्पर्शजां तृप्तिमनुभवामीत्यर्थः ॥२२३॥

चपलभुजङ्गीभुक्तोज्झित शीतलगन्धवह निशि भ्रान्त ॥
अपराशाः पूरयितुम्प्रात्यूषसदाऽगते गच्छ ॥२२४॥

खण्डिता प्रातरागतं नायकं समीरनाभेदेन वर्णयन्त्याह चपलेति प्रात्यूषसदागते अहर्मुखवारायो अथच प्रात्यूषे सर्व्वानिशामतीत्यसर्व्वदा आगतिरागमनं यस्य तत्संबोधने प्रातरागतेत्यर्थः प्रत्यहमप्रियमेवाचरसि कियत्सोढव्यमित्याशयः अत एव गच्छ सदागतेर्गमनमेवोचितम् अथच मन्निकटात् दूरं गच्छेत्यर्थः चपला विषज्वालाचञ्चला या भुजङ्गी सर्पिणी तया ताभिर्व्वा भुक्तउज्झित त्यक्त अथच बहुविधवेश्याभुक्तोज्झित अनेन स्पर्शानर्हत्वम् उपभोगा-

सामर्थ्यञ्च व्यज्यते शीतलगन्धवह दक्षिणानिल शीतलशान्तकामरेश्याङ्गगन्धवह निशाभ्रमणशील दूरागतत्वात् अन्यथा प्रातर्दर्शनानुपपत्तिः अपराशा उत्तरादिशः पूरयितुं वातपूर्णाः कर्त्तुं गच्छेत्यन्वयः अथच अपराशाः नायिकानामाशाः रतेच्छाः पूरयितु गच्छेत्यर्थः तथाच बह्वीनामाशापूरणेपि बह्वीनामवशिष्टमेव वर्त्तते तत्पूरणमेव तवांचितं मार्गानुबांधेन वाघवदागतेन त्वया न किञ्चिदपि मम प्रयोजनमतो दूरं गच्छेत्यर्थः ॥२२४॥

चिरपथिकद्राघिममिलदलकलता शैवलावलिग्रथिता ॥
करतोयेव मृगाक्ष्या दृष्टिरिदानीं सदानीरा ॥२२५॥

बहुकालमादाय परदेशस्थितं नायकं प्रति वर्षाकालात्प्रागेवागन्तव्यमित्यर्थकं नायिकावृत्तान्तकथकं पत्रं सखा लिखति चिरेति पथिकस्य तवद्राक्षिम्ना दीर्घत्वेन बहुकालगतत्वेनेत्यर्थः मिलन्तोऽसंस्काराज्जटाभूता येऽलकाः केशाः त एवातिदीर्घतया लता सैव शैवलस्यावलिः पंक्तिः तया स्थगिता व्याप्तेत्यर्थः चिरेत्यस्य स्थगितेत्यत्रान्वयः यद्वा चिरपथिकेतिसखीकृतं नायकसंबोधनं मिथ्यापथिकेत्यर्थः व्यवस्थाया अतीतत्वादित्याशयः पक्षे पथिकानां द्राघिम्ना दीर्घत्वेन चिरकालविलम्बितत्वेन वाटपाटच्चरभीत्या चिरदीर्घकालमादयानागमनेनेतियावत् मिलन्ती मार्गे मिलन्तीअलकलतातुल्याशैवलावलिः तयाव्याप्तेत्यर्थः करतोयानिकटे चोरदोषेण बहुधा वर्त्मप्रतिरोधादित्याशयः मृगाक्ष्या दृष्टिः नयनम् इदानीं ग्रीष्मान्ते सदानीरम् अश्रु यस्याः तादृशीत्यर्थः वर्षाकालेपि यदि नायास्यति तदा प्राणा एव गमिष्यन्तीति धिया संप्रति रोदनमेव करोत्यतो यदि तत्प्राणापेक्षा तदा वर्षाकालात् प्रागेवागन्तव्यमितिध्वनिः पक्षे सदानीरानाम्नीत्यर्थः करतोया इव नदीविशेष इवेत्यर्थः करे हस्ते तोयम् अश्रु यस्याः सेत्यर्थः कपोलन्यस्तवामहस्ताया अनिद्रावलम्बिताया वियोगदुःखञ्चिन्तयन्त्या रुदत्या अश्रुपातः कर एव भवतीति जातिः इवशब्दस्य एवकारार्थत्वादित्याशयः ईदृशी पतिव्रता यौवनसौन्दर्य्यादिसकलगुणशालिनी लक्षलाभार्थमपि नोपेक्ष्येति पत्रार्थः करतोया सदानीरेत्यमरः ॥२२५॥

**चण्डि दरचपलचेलव्यक्तोरुविलोकनैकरसिकेन ॥**
**धूलिभयादपि न मया चरणहतौ कुञ्चितं चक्षुः ॥२२६॥**

नायको नायिकामाह चण्डीति चण्डि कोपने ईषच्चञ्चलवस्त्रे व्यक्तो य ऊरुस्तद्विलोकने एकः मुख्यो रसिकस्तेन तया चरणेन ताडनसमये धूलिभयादपि नेत्रे चरणधूलिपातभयादपि अपिना ताडनभीत्यभावः कथ्यते मया उत्तानशायिना चक्षुर्न कुञ्चितं न संकुचितमित्यर्थः अत्यन्तासक्ते मयि मानकरणमनुचितमित्याशयः ॥२२६॥

**चलकुण्डलवलदलकस्खलदुरसिजबसनसज्जदूरुयुग् ॥**
**जघनभरक्लमकूणितनयनमिदं हरति गतमस्याः ॥२२७॥**

स्वरूपवर्णनमाह चलेति अस्या यौवनोद्धतायाः गतं गमनं इदं प्रत्यक्षं कर्तृ- हरति मम मनो हरतीत्यर्थः गतं किंभूतं चलकुण्डलं वलदलकं स्खलत्उरसिजयोः वसनं यत्र तदित्यर्थः सज्जदेकत्रीभूतमुरुयुगं यत्र तदित्यर्थः जघनभरेण च क्लमः श्रमः तेन कूणितं पीडितं नयनं यत्र तदित्यर्थः ॥२२७॥

**चरणैः परागसैकतमफलमिदं लिखसि मधुप केतक्याः ॥**
**इह वसति कान्तिसारे नान्तःसलिलापि मधुसिन्धुः ॥२२८॥**

कस्याश्चिद्रूपदर्शनमुग्धं तत्समीपगमनभृत्यादिप्रेषणादिनानाव्यापारासक्तं कञ्चननायकं काचिदन्यास्त्याह चरणैरिति इदं सिकतामयं हे भृङ्ग मधुपानमत्त केतक्याः चरणैः पादैः बहुवचनेनानेकव्यापारवत्ता व्यज्यते अफलमनर्थकं लिखसि चालयसि इहपरागसैकते कान्तिसारे कान्तिमात्रसारे नान्यः कोपि वामलोचनागुणलेशोत्रास्तीत्याशयः नन्वन्यगुणा मा सन्तु स्वभावसिद्धो मकरन्दः पुष्पगुणो भविष्यत आह अन्तस्सलिलापि अन्तर्जलापि अपिना बाह्यमधुव्यवच्छेदः मधुसिन्धुर्मधुनदी न वहतीत्यर्थः तथाच वालुकाखननमन्तर्जलग्रहणार्थं कर्त्तव्यम् अत्र बहिरन्तर्वा मधुजललेशोपि नेति यथा वृथा भ्रमरव्यापारः केतक्यां तथास्यां गुणसामान्यरहितायां कान्तिमात्रं नान्यत्किमपि वृथाव्यापारं करो-

णीत्याशयः कस्या अपि प्रभुत्वशालिन्यास्समीपवर्त्तिकृपणपुरुषाभिप्रायेणेदमित्यपरे वदन्ति ॥२२८॥

चिरकालपथिक शङ्कातरंगिताक्षः किमीक्षसे मुग्ध ॥
त्वन्निस्त्रिंशाश्लेषव्रणकिणराजीयमेतस्याः ॥२२९॥

नायिकाया नखक्षताकारकिणपरम्परादर्शनशङ्काकुलं चिराद्विदेशादागतं नायकं नायिकासखी वदति चिरकालेति चिरकालपथिक बहुकालमादाय विदेशस्थित अनेन शङ्का योग्यता कथ्यते शङ्कया नखक्षतशङ्कया तरङ्गिते अतिदूरचिन्ताचपले अक्षिणी यस्य स इत्यर्थः किम् इक्षसे पश्यसि मुग्ध सुन्दर अनेन त्वत्सदृशः कोन्यः यथा शङ्कसे इति सूच्यते तर्हि किमिदमतआह त्वदीयो यो निस्त्रिंशः द्वात्रिंशदंगुलप्रमाणः खड्गविशेषस्तस्य विकोषस्य त्वदीयत्वेन विरहापनोदनार्थं य आश्लेषः वारंवारमालिङ्गनं तेन व्रणकिणराजीक्षतचिह्नपरम्परा सेयं मम सख्या ननु नखक्षतानीत्यर्थः तथाच तव खड्गाश्लेषेणैवानया वियोगकालो नीतः नेयं दुष्टेत्याशयः ॥२२९॥

चपलां यथा मदान्धः छायामयमात्मनः करी हन्ति ॥
आस्फालयति करं प्रतिगजस्तथायं पुरो रुद्ध ॥२३०॥ः

इयं प्रतिवेशिन्यासक्तेति काचित्काञ्चिदाह चपलामिति मदान्धोयं करी आत्मनः शरीरस्य मत्ततया चपलस्य छायां यथा येन प्रकारेण चपलां शरीरचालनरूपस्वदोषचपलामित्यर्थः हन्ति ताडयति अयं प्रतिगजः अग्रे रुद्धः कर शुण्डादण्डमास्फालयति निवारणार्थं प्रसारयतीत्यर्थः तथाच एकेनानेन स्वस्त्रीताडने क्रियमाणे अयंप्रतिवेशी निवारणार्थं स्वतोपि लोकलज्जारुद्धोपि न तथा करोत्यतो ज्ञायतेऽयमस्यामासक्तइत्याशयः ॥२३०॥

चुम्बनलोलुपमदधरकृतकास्मीरं स्मरन्न तृप्यामि ॥
हृदयद्विरदालानस्तम्भं तस्यास्तदूरुयुगम् ॥२३१ ॥

कश्चित्सखायं वदति चुम्बनेति तस्याः तत् अनुभूतम् ऊरुयुगं स्मरन्न तृप्तो-

भवामीत्यन्वयः किंभूतं चुम्बने कामशास्त्रोक्तसकलस्थलचुम्बने लोलुपस्य सतृष्णस्य मम योऽधरः तेन चुम्बनेन कृतकास्मीरं कृतकुंकुमलेपनमित्यर्थः नायिकाकपोलाधराणां कुंकुमानां चुम्बनेन सकुंकुमेन मदधरेण चुम्बितत्वादूरुयुगलेपि कास्मीसम्बन्ध इतिभावः कामशास्त्रेण तत्रापि चुम्बनविधानात् हृदयरूपो यो द्विरदो हस्ती तस्य यत् आलानं वर्द्धनं तस्य यस्तम्बः तमित्यर्थः लाधातोः करणल्युडन्तस्य बन्धनवाचकत्वम् अधिकरणल्युडन्तस्य बन्धनस्तम्भवाचकत्वमिति तथाच तदूरुयुगस्मरणमुन्मादकमेवेत्याशयः आलानं बन्धनस्तम्भ इत्यमरः ॥२३१॥

चिकुरविचारणतिर्य्यङ्नतकण्ठी विमुखवृत्तिरपि बाला ॥
त्वामियमंगुलिकल्पितकचावकाशा विलोकयति ॥२३२॥

त्वयि नायिका सस्नेहा मया कृतेति नायकं दूत्याह चिकुरेति त्वां नायकम् इयं या तव स्लाघ्या सेत्यथः विलोकयति प्रेमकरणार्थं निरूपयतीत्यर्थः बाला अकृतान्यप्रेमा विमुखा त्वद्विपरीतदिगभिमुखा वृत्तिरवस्थानं यस्याः सेत्यर्थः अनेन लोकलोचननिवारणं चिरकालसम्यगवलोकनेच्छाच व्यज्यते चिकुराणं स्नानादूर्द्राणां विचारणाय भिन्नभिन्नकरणाय तिर्य्यङ्नतः वक्रीभूयनतः कण्ठो यस्याः अङ्गुल्या कल्पितो निर्म्मितः कचानामवकाशः निर्व्विघ्नं तव दर्शनार्थं द्वाररूपो यया सेत्यर्थः तथाच त्वयापि सम्यगवलोकयतां येन प्रेमस्थैर्य्यम्भवेदित्याशयः यद्वा मां दृष्ट्वा किमिति विमुखी मम श्रेयसीति पृच्छन्त नायकं नायिकासख्याह त्वदवलोकनार्थमेव विमुखा न मानिनीत्याशयः ॥२३२॥

चुम्बनहृताञ्जनार्द्धं स्फुटजागररागमीक्षणं क्षिपसि ॥
किमुषसि वियोगकातरमसमेषुरिवार्द्धनाराचम् ॥२३३॥

उषःकाले नायकशय्योत्थापितो नायकं कटाक्षयन्तीं गुरुगेहं व्रजन्तीं परिचारिकासखी परिहासं करोति चुम्बनेति ईक्षणं नयनं क्षिपसि नायके क्षिपसि किमिति प्रश्ने इदानीमपि रतेच्छा वर्त्तते एवं किं तवेत्याशयः चुम्बनेन नायककृतेननेत्रचुम्बनेन हृतमपहृतम् अञ्जनस्यार्द्धं यत्र तदित्यर्थः अनेन एकदेवनेत्रचुम्बनमिति-

सूच्यते नचैकचुम्बनेन रतालपत्वव्यञ्जनया रसहानापत्तिरितिवाच्यं बहुषु स्थलेषु चुम्बनविधानेन बहुधान्यत्र चुम्बने सकृन्नेत्रचुम्बनेपि रतबाहुल्यसंभवात् पदान्तरप्रतिपाद्यत्वाच्च स्फुटः जागररागो यत्र वारंवाररतासक्तत्वादित्याशयः उषसि प्रातर्वियोगकातरं भाविनायकावियोगभीतम् असमेषुर्विषमशरः स्मरः अर्द्धनाराचं शरविशेषाद्धमिवेत्यर्थः तथाच सर्व्वासामेव प्रातः प्रियवियोगो जायत एव नैवं ताः कातराः संभोगातिवाहितसकलनिशाद्या अपि गमनसमये प्रियविलोकनं कामाधिक्यं प्रेमाधिक्यं वा कथयतीति तु न जानामीत्याशयः ॥२३३॥

॥ इतिसचलविरचिते चकारव्रज्या समाप्ता ॥

छायाग्राही चन्द्रः कूटत्वं सततमम्बुजं वहति ॥
हित्वोभयं सभायां स्तौति तवैवाननं लोकः ॥२३४॥

केनापि नायकेन नायिकासंयोजनाय दूतीकथितं श्रुत्वा किञ्चित्कुपितवदनां नायिकां पुनः प्रसन्नाङ्कर्त्तुं दूत्याह छायेति चन्द्रः छायाग्राही कलङ्कीत्यर्थः अम्बुजं कमलं कूटत्वं कौटिल्य संकुचितत्वमिति यावत् सततं सकलनिशायां व्रजति इति सभायाम् उभयं चन्द्राम्बुजोभयं हित्वा त्यक्त्वा लोकः रसिकगणः तवैवाननं वदनं स्तौति कलङ्कशून्यम् अप्रमादशून्यंच कथयतीत्यर्थः तथाच इदानीमपि सुखप्रसाद एवोचित इत्याशयः यद्वा सभायां मत्सौन्दर्य्यकथनेन खलावकाश किं ददासीतिवादिनीं नायिकां मदध्यक्षेऽन्ये तव वदनं स्तुवन्ति उदासीनेन श्रूयते न किञ्चिदपि साध्वसाधुवा कथ्यत इति नायक आह ॥२३४॥

छायामात्रं पश्यन्नधोमुखोप्युद्गतेन धैर्य्येण ॥
तुदसि मम हृदयमिषुणा राधाचक्राङ्किरीटीव ॥२३५॥

नायिका नायकं प्रति वदति छायामात्रमिति त्वं ममछायामात्रं भूमिपतितं पश्यन् लोकभयेनेत्याशयः अधोमुखोपि छायादर्शनार्थमधोमुखोपीत्यर्थः मम हृदयं तुदसि व्यथयसि केनोद्गतेन समुद्भूतेन पक्षे ऊर्द्धगतेन धैर्य्येण छायादर्शनपरितोषेण ममाभिलषित सिद्धिरवश्यं भविष्यतीति दृढविश्वासकृतवीरत्वेनेत्यर्थः तथाच पुरः

स्थितामपि लोकलज्जया मां न पश्यसि मर्य्यादासक्तत्वेन छायां पश्यसि अतः सर्व्वाधिकधीरत्वेन मम हृदयं चारितं त्वयेतिभावः तुदतीतिपाठे सखीं प्रति नायिकोक्तिः इषुणा शरेण अर्ज्जुनः राधाचक्रं द्रौपदीस्वयम्बरकृतमिवेत्यर्थः ॥ इति-छकारव्रज्यासमाप्ता ॥२३५ ॥

जलबिन्दवः कतिपये नयनाद्गमनोद्यमे तव स्खलिताः ॥
कान्ते मम गन्तव्या भूतैरेव पिच्छिलता ॥२३६॥

विदेशगमनोद्यतो नायकोऽमङ्गलभियाऽश्रुनिवारयन्तीमपि दृढप्रेमस्वभावात् त्रिचतुराश्रुविन्दुयुतपक्ष्मशालिनीं श्रेयसीं न गमिष्यामीत्याह जलबिन्दव इति कतिपये त्रयः चत्वारो वेत्यर्थः जलबिन्दवः अश्रुबिन्दवः नयनात् तव नयनादेकत्वं विवक्षितं तथाचामङ्गल्यभयेनैकत्र नयने प्रातरोधेऽन्यस्मात्केवलं स्खलिताः पक्ष्मलग्नाः जाता नतु पतिता अत्रापि निवारितत्वादित्याशयः गमनोद्यमे मम यात्रासमय इत्यर्थः कान्ते सुन्दरि अनेनापरित्याज्यत्वं ध्वन्यते सगन्तव्योऽवश्यगन्तव्यापीत्यर्थः भूमिरेतैरेव त्रिभिः चतुर्भिर्वाश्रुबिन्दुभिरित्यर्थः पिच्छिलता पदार्प्पणायोग्येत्यर्थः तथाचाश्रुसम्बन्धाभावेपि पृथिव्याः अकालवृष्टिपिच्छिलत्वेन मया न गन्तव्यमतः किमर्थं रोदनमित्याशयः ॥२३६ ॥

जृम्भोत्तम्भितदोर्य्युगयन्त्रितताटङ्कपीडितकपोलम् ॥
तस्याः स्मरामि जलकणलुलिताञ्जनमलसदृष्टि मुखम् ॥२३७॥

विदेशस्थितो नायको वयस्यमाह जृम्भेति तस्याः नायिकाया मुखं स्मरामीत्यन्वयः अलसा शयानतया घूर्णिता दृष्टिः नेत्रं यत्र तदित्यर्थःजलकणेन निद्राकृताश्रुबिन्दुना लुलितं किञ्चिद्विगलितम् अञ्जनं यत्र तदित्यर्थः जृम्भया हार्षिकया उत्तम्भितं दोर्य्युगं परस्परसम्बन्धांगुल्यूर्द्ध्वक्षिप्तबाहुयुगलं तेन यन्त्रितं नियन्त्रितं यत्राटङ्कौ ताभ्यां पीडितौ कपोलौ यत्र तदित्यर्थः सर्व्वदा चिन्तित एवास्मीति भावः ॥२३७॥

जागरयित्वा पुरुषं परं वने सर्व्वतो मुखं हरसि ॥
अयि शरदनुरूपन्तव शीलमिदं जातिशालिन्याः ॥२३८॥

लोकसमूहे लज्जां नाटयन्तीश्च्छलामुत्तमकुलसम्भूतां काञ्चित्काचिदन्योक्त्या वदति जागरयित्वैति अयिशरत् ऋतु विशेषरूपे पक्षे शुक्लाभिसारिकात्वेन शरत्तुल्येइ-त्यर्थः तव इदं शीलं पूर्वार्द्धोक्तम् अनुरूपं शद्धूशामित्यर्थः सर्व्वतः प्रकाशकरणरूपं वेत्यर्थः पक्षे अनुरूपं विरीतलक्षणयात्यन्तविरुद्धमित्यर्थः जातिशालिन्याःमालती-पुष्पशालिन्याः पक्षे कुलीनाया इत्यर्थः वने जले पक्षे कानने जागरयित्वा देवोत्थाने-कादश्यामुत्थाप्य पक्षे रक्षार्थमुन्निद्रं विधायेत्यर्थः परं पुरुषं पमेश्वरं पक्षे उप-पतिं सर्व्वतो मुखं जलं हरसि विनाशयसीत्यर्थः शरदाजनक्षयादित्यर्थः पक्षे सर्व्वे-भ्यो जनेभ्यो मुखं वदनं गोपयसीत्यर्थः तथाच कुलीनायास्तव चापल्यमत्यनुचितं चपलाया अत्यन्तलज्जाप्रकटनमत्युपहासकारकमित्याशयः ॥२३८॥

जीवामि लङ्घितावधिदिनेति लज्जावशेन गेहिन्या ॥
मयि निह्नुतापि वाष्पैरसंवरैर्व्याञ्जतो मानः ॥२३९॥

विदेशादागतो नायको गृहिणीवृत्तान्तं वयस्यं प्रति प्रातराह जीवामीति लंघितम् अवधिदिनं पत्यागमनव्यवस्थादिनं यया एतादृश्यहं जीवामीति लज्जा-वशेन लज्जाधीनत्वे हेतुनामपि निह्नुतापि गोपितोपिमानः सम्वरणं कर्त्तुमशक्यैः वाष्पैःअस्रैः वञ्जितः व्यक्तः कृत इत्यर्थः तथाच लज्जया प्रेमापि सूचितमिति ॥२३९॥

जाल्मो गुरुः सुधृष्टो वामेतरचरणभेद उपदेशः ॥
ख्यातिगुणधवल इति भ्रमसि सुखं वृषभ रथ्यासु ॥२४०॥

कस्यचिद्धूर्त्तस्यातिलंपटस्य पराङ्गनापरद्रव्यापहरणाय पुरुषार्थचतुष्टयसंपा-दकयन्त्रमन्त्रबहुविधौषधप्रागल्भ्यं शिष्यद्वारेण प्रकटयतस्तपस्विवेषधारिणःस्वप्र-योजनमनपेक्ष्य गुरुवचसा सर्व्वदा गेहे गेहे भ्रमन्तं सुवेषं शुद्धस्वभावं शिष्यं काचिद-न्योक्त्याह जाल्म इति गुरुः वृषभनर्त्तकः पक्षे कपटतपस्वी जाल्मः धूर्त्तः मूर्खोवा सुधृष्टः वृषभनर्त्तनेन उदरपूरकः पक्षे शिष्यद्वारेण पराङ्गनाद्रव्याद्यपहारकः सुधृ-ष्ट इतिपाठे सम्यगभ्यस्त इत्येकमुपदेशविशेषणं वामं वक्रम् इतरत् सरलं यच्चरणं तस्य यो भेदः क्रमेण स्थापनादिः वामदक्षिणचरणयोर्भेद इतिवा परितोषे दक्षिण-

चरणोत्थापनमन्यथा वामस्येत्यर्थः पक्षे विचित्रवैदग्ध्यसूचकचरणन्यास इत्यर्थः यद्वा वामानां सकलस्त्रीजनानां इतरेषां पुरुषाणां चरणेषु पदेषु भेदः संभेदः मिलनं प्रणाम इति यावत् शिवशक्तिस्वरूपत्वकथनेन सर्व्वेषां प्रणिपात इति समुदायार्थः वाममार्गे पामराणां ज्ञानभेदे वोपदेशः ज्ञाप्यः यस्य गुरोः स इत्यर्थः यस्य वृषभस्य शिष्यस्य वेत्यर्थः गुणधवल इति ख्यातिः श्वेतवृषभ इति ख्यातिः नन्दितुल्यत्वसंपादनार्थमित्याशयः पक्षे गुणैर्व्वस्त्रयज्ञोपवीतादिबाह्यगुणैः धवलः शुभ्र इति ख्यातिः रूढिः नतु योगार्थोपीतिभावः भ्रमसि प्रतिद्वारगमनार्थं नर्त्तकगुरुकपटतपस्विकार्य्यार्थं नतु स्वस्यापि प्रयोजनमित्याशयः सुखं सुखार्थमन्येषामित्यर्थः वृषभनन्द्याकारनर्त्तकवृषभपक्षे तत्तुल्यरथ्यासु प्रतालीषु तथाच स्वप्रयोजनं विनैव नर्त्तककार्य्यार्थं यथा ज्ञानशून्यः प्रसाधितो वृषभो भ्रमति तद्दर्शनार्थागतनानाविधदिव्याङ्गनादर्शनं द्रव्यलाभादिसौख्यं नर्त्तकस्य न वृषभस्य तव न किमपि फलं किन्तु कपटतपस्विन एवेति तव न कोपि दोषः स एव तपस्वी कापटिक इत्याशयः यद्वा सुवेषचपलकामातुरछात्रेण नानाविधकुत्सितचेष्टया कोपिता काचित्साध्वी गुरुछात्रम् अन्योक्तया भर्त्सयन्त्याह ॥२४०॥

ज्वर वीतौषधिवाधस्तिष्ठ सुखं दत्तमङ्गमखिलन्ते ॥
असुलभलोकाकर्षणपाषाण सखे न मोक्ष्यसि माम् ॥२४१॥

वैद्यासक्ता वैद्यस्य समक्षं ज्वरं संबोध्याह ज्वरेति हेज्वर वीता व्यतीता औषधिवाधा औषधिदानजनिता पीडा यस्य स त्वं तिष्ठ चिरं तिष्ठेत्यर्थः अखिलमङ्गं शरीरं तव दत्तं सर्व्वाङ्गव्याप्तः सुखं तिष्ठेत्यर्थः हेतुमाह असुलभः दुर्ल्लभो यो लोको वैद्यः तस्याकर्षणहेतुपाषाणस्वकमणि इत्यर्थः सखे प्रियसंगमदूतमां न मोक्ष्यसि मां न त्यजेत्यर्थः तथाच लब्धमदीयाखिलाङ्गो निर्व्वाधोपि रहस्यपि दुर्लभो लौहवत्कठिनायं गुरुजनसंनिधावपि संहतः कृतः स इति हे ज्वर सुखं तिष्ठेत्याशयः ॥२४१॥

जीवनहेतोर्म्मिलिता मुञ्चति करकर्षणेपि न खलु त्वाम् ॥
नौरिव निम्नं सुन्दर मुग्धा तद्विरसतां मा गाः ॥२४२॥

कश्चिदुत्तमनायिकासङ्गतं परदेशगमनोद्यतं नायकं नायिकासखी वदति जीवनेति सुन्दर तथाच तव सौन्दर्य्यमेव विचारितं मम सख्या ननु कुलादिक-मित्याशयः मुग्धा अज्ञातयौवना अनुपेक्षणीयेत्याशयः जीवनहेतोः प्राणरक्षार्थं स्मरतीति मिलिता त्वया सहैकीभूतेत्यर्थः पक्षे जलहेतोरित्यर्थः त्वां करण कषणेऽपि उन्मोचनेऽपि पक्षे श्रुतं त्वां न त्यजति निम्नं गम्भीरं देशं नौकेवेत्यर्थः निम्नपदेन नायके नीचत्वं व्यज्यते तत एतादृशस्य तव ईदृशनायिका दुर्लभा विरसतां विदेशगमनेन वियोगं पक्षे जलशून्यत्वं मागाः मा गच्छेत्यर्थः केचित्तु जीवनहेतोः निर्व्वाहार्थं द्रव्यार्थमित्यर्थः विरसतां द्रव्यदानवैमुख्यम् इतिकुलटा-सख्युक्तिरित्यप्याहुः ॥२४२ ॥

जघनेन चापलं तव वितन्वतेयं तनूकृतापि तनुः ॥
शाणेनेव क्षीणा स्मरासिपुत्री मनो विशति ॥२४३ ॥

नायको नायिकामाह जघनेति तव जघनेन चापलं विपरीतरते बहुधा व्यापारं तनुता विस्तारयता ममात्यन्ताभिलखितसौख्यार्थं बहुधा विपरीतं संपाद-यतेत्यर्थः इयं स्वभावादल्पकृशा तव तनुः तनूकृतात्यन्तकृशा कृतेत्यर्थः तथा चातिकृशायाः नवोढायाः विपरीतरतनिषेधेऽपि मम मम हृदयं विशति अत्यन्त-विकारकारिणीभवतीत्यर्थः पुनर्व्विपरीतं संपादयेत्यर्थः शाणेनास्त्रादितीक्ष्णता-संपादकयन्त्रविशेषेण चापलं भ्रमणं कुर्वता स्मरासिपुत्री मदनक्षूरिका स्वभावाद-ल्पक्षीणा अत्यन्तक्षीणीकृता यथा तथेत्यर्थः ॥ २४३ ॥

ज्योत्स्नाभिसारसमुचितवेशे व्याकोषमल्लिकोत्तंसे ॥
विशसि मनो निशितेव स्मरस्य कुमुदत्सरुच्छुरिका ॥२४४॥

संकेतस्थलमागतां शुक्लाभिसारिकां नायक आह ज्योत्स्नेति यद्वा त्वमसि-सारिणीति मया ज्ञातमिति नायिकां सखी वदति ज्योत्स्नाभिसारे शुक्लाभिसारे समुचितो योग्यः वेशो वस्त्रभूषणादिर्य्यस्यास्तत्संम्बुद्धिः व्याकोषा किञ्चित्प्रकाशिता या मल्लिका तया कृतमुत्तंसः शिरोलङ्करणं यया तत्संबुद्धिः इदञ्च कुमुदत्सरू-

साम्यार्थं निशिता शाणिता स्मरस्य कुमुदस्यत्सरुः मुष्टिः यस्याः सा क्षुरिका यथा विशति तथा त्वं मन्मनसि नायकमनसि वा विशसीत्यर्थः ॥२४४॥

जड सुखयसि परतरुणीं गृहिणीं कारयसि केवलं सेवाम् ॥
आलिङ्गति दिशमिन्दुः स्वान्तु शिलां वारि वाहयति ॥२४५॥

तव गृहिणी साध्वी द्वितीयाऽसाध्वोति गृहिणीसखी नायकमाह जडेति जड ज्ञानशून्य परां श्रेष्ठां सुन्दरीं युवतिम् अथच परस्य जारस्य सुखयसि तस्याः सेवासक्तो भवसि गृहिणीं सर्व्वदा गृहासक्ततया निर्दोषां केवलं सेवां शुश्रूषां कारयसि कदापि न सुखयसीत्यर्थः दृष्टान्तयति दिशं इन्द्रस्य पूर्वदिक्पतित्वेन माहेन्द्रीमालिङ्गति तस्यामुदितो भवतीत्यर्थः स्वशिलां चन्द्रकान्तमणिरूपां वारि जलं वाहयतीत्यर्थः तथाच स्वमात्रासक्तां शिलां विहाय परकीयां दिशमालिङ्गन् यथा चन्द्रः कलङ्की तथा त्वमप्यसीत्याशयः ॥२४५॥ ॥ ॥

ज्योत्स्नागर्व्वितसैकतमध्यगतः स्फुरति यामुनः पूरः ॥
दुग्धनिधौ नागाधिपतल्पतले सुप्त इव कृष्णः ॥२४६॥

कश्चित्काञ्चित्प्रति संकेतस्थलं कथयति ज्योत्स्नेति यामुनः यमुनासंबन्धी पूरः प्रवाहः स्फुरति शोभते ज्योत्स्नया चन्द्रिकया गर्भितं संमिलितं यत्सैकतं सिकतामयं तन्मध्यवर्तीत्यर्थः अनेन वालुकामयस्थले कार्य्याभावेन नैर्ज्जन्यं सूचितं मृदुत्वं शुक्लवेशेन गमनञ्च उत्प्रेक्षते दुग्धे समुद्रे शेषरूपशय्यातले सुप्तः कृष्ण इवेत्यर्थः यमुनायाः पुरुषरूपत्वकथनेन विपरीतेन तत्र क्रीडितव्यमिति भावः ॥२४६॥

॥ इति जकारव्रज्या समाप्ता ॥

झंकृतकङ्कणपाणिक्षेपैः स्तम्भावलम्बनैर्म्मौनैः ॥
शोभयसि शुष्करुदितै रपि सुन्दरि मन्दिरद्वारम् ॥२४७॥

नायको नवोढ़ां वदति झङ्कृतेति झङ्कृतकङ्कणयुक्तपाणिविक्षेपै

सखीहेतुपाणिक्षेपैरित्यर्थः द्वारस्थितस्तम्भधारणै मौनैः शुष्करुदितैः अपि समुच्चये हे सुन्दरि मम मन्दिरस्य द्वारं शोभयसि एतादृशचेष्टयापि मम सौख्यं जायते शय्यागमने रतं विनापि अधिकं सौख्यं भावीति सखीजनैरवश्यं भवती शय्यापर्य्यन्तमानीयतामित्यावेद्यते ॥२४७॥ इति झकारव्रज्या समाप्ता ॥

**ढक्कामाहत्य मदं वितन्वते करिण इव चिरं पुरुषाः ॥**
**स्त्रीणां करिणीनामिव मदः सदा स्वकुलनाशाय ॥२४८॥**

नायकस्योन्मत्तस्य निःसंकोचतां दृष्ट्वोन्मत्तां नायिकां सखी शिक्षयन्त्याह ढक्कामिति पुरुषा युवानः मदं मत्ततां वितन्वते विस्तारयन्ति ढक्कां यशःपटहं वादयित्वा करिणः गजाः यथा मदं विस्तारयन्ति तत्पुरोगाः लोकपलायनार्थं ढक्कां वादयन्ति स्त्रीणां मदः स्वकुलनाशाय स्ववंश्यापमानाय यथा हस्तिनीनां मदः परस्परयुद्धद्वारेण गजनाशाय करिण्या मदे सकलगजयूथनाशो भवतीति गजशास्त्रं तथाच गजमदस्य प्रसिद्ध्यर्थं यथा ढक्काताडनं जनाः कुर्व्वन्ति नान्येषां पलायनादिप्रतीकारेण पराभवो भवति तथा यूनां मदः प्रसिद्धो न लोकपराभवाय स्त्रीणान्तु मदोऽप्रसिद्धस्सोपि यदि स्यात्तदा पराभवः स्यादेव तस्मात् स्त्रीभिः सर्व्वथा मदो न करणीय इत्याशयः ॥२४८॥

॥ इति ढकारव्रज्या समाप्ता ॥

**तां तापयन्ति मन्मथबाणास्त्वां प्रीणयन्ति वत सुभग ॥**
**तपनकरास्तपनशिलां ज्वलयन्ति विधुं मधुरयन्ति ॥२४९॥**

नायिकायामुदासीनं नायकं पुनःसंबद्धुं नायिकासखी वदति तामिति मदनशराः तां सखीं तापयन्ति त्वद्वियोगात् त्वां प्रीणयन्ति अन्यनायिकासंगतत्वात् मत्सखी व्याकुलीकरणाच्चेत्याशयः सुभग सुन्दर सूर्य्यकिरणाः सूर्य्यकान्तं ज्वलयन्ति विधुं चन्द्रं मधुरयन्ति लोकानां प्रियं कुर्व्वन्ति कलाप्रदत्वात् आतपाधिक्य एव चन्द्रस्य प्रियत्वाच्चेतिभावः तथाच मदनसूर्य्ययोर्व्यवहारदर्शनेन त्वमपि प्रेयसीं तापयसि अन्यां सुखयसि तन्नोचितमित्याशयः ॥२४९॥

तव सुतनु सानुमत्या बहुधातुर्जानितम्बरागायाः ॥
गिरिधरभुव इव लाभे नाप्नोमि द्व्यङ्गुलेन दिवम् ॥२५०॥

नायको नायिकां नितम्बं वर्णयति तवेति हे सुतनु तव सानुमत्या यथारोचते तथा कुर्व्विति अनुमतिसहितायाः पक्षे पर्व्वतैकदेशशालिन्या बहुधा वारंवारं तु निश्चयेन जनितो नितम्बे पश्चाद्भागे रागः प्रीतिर्य्यया तस्या इत्यर्थः पक्षे बहुभिर्द्धातुभिः गैरिकादिभिर्ज्जनित उत्पादितः नितम्बे कटके रागो लौहित्यं यया तस्या इत्यर्थः कस्या इव गिरिवरस्य सुमेरोः भुव इव पृथिव्या इवेत्यर्थः लाभे प्राप्तौ सत्यां दिवं स्वर्गं द्व्यङ्गुलेन द्वाभ्यामङ्गुलिभ्यां नाप्नोमीति लोकोक्तिः यथा मेरुसमभूमिष्ठो जनः स्वर्गसमीपवर्त्ती स्वर्गसुखमनुभवति तथा तत्प्रसादान्ममापि स्वर्गसुखलाभ इति नितम्बमहिमा यद्वानाप्नोमीति काकुः आप्नोम्येवेत्यर्थः यद्वा लाभेनेति तृतीयाकटकोस्त्रीनितम्बोद्रे स्नुः प्रस्थः सानुरस्त्रियामित्यमरः ॥२५०॥

त्यक्तो मुञ्चति जीवनमुज्झति नानुग्रहेपि लोलत्वम् ॥
किं प्रावृषेव पद्माकरस्य करणीयमस्य मया ॥२५१॥

अस्मिन्ननुग्रहं वैमुख्यं वा एकमेव किं न करोषीति वादिनीं सखीं नायिकाह त्यक्त इति त्यक्तः परित्यक्तः मुञ्चति त्यजति जीवनं प्राणं जलं च अनुग्रहे पक्षपाते लोलत्वं चापल्यं समीपदेशप्लावनञ्च नोज्झतीत्यर्थः पद्माकारस्य तडागस्य प्रावृषा वर्षासमयरूपया अस्य पद्माकरसदृशनायकस्य मया किं करणीयम् किमपि कर्त्तुं न शक्यते इत्यर्थः समयानुसारेण द्वयमपि क्रियते इत्याशयः ॥२५१॥

त्वद्विरहापदि पाण्डुस्तन्वङ्गी छाययैव केवलया ॥
हंसीव ज्योत्स्नायां सा सुभग प्रत्यभिज्ञेया ॥२५२॥

त्वद्विरहादतिक्षीणा मम सखी शीघ्रं त्वया दर्शनन्देयमिति नायकं नायिकासखी वदति त्वद्विरहेति हे सुभग सुन्दर त्वदीयविरहरूपायामापदि पाण्डुवर्णा कृशाङ्गी छाययैव केवलया श्यामरूपया हंसीव चन्द्रिकायां सा मम सखी सुभग

ज्ञातव्या नान्यथेत्यर्थः हंसीवेत्यनेन शुचित्वकथनेन तदेकचित्तत्वं नायिकायां-व्यज्यते ॥ २५२ ॥

त्वयि विनिवेशितचित्ता सुभग गता केवलेन कायेन ॥
घनजालरुद्धमीना नदीव सा नीरमात्रेण ॥२५३॥

ममागमनात् प्रागेव कथमागतेति नायकेन पृष्टा दूती त्वामदृष्ट्वा संकेतस्थलगुरुजनभीता स्वकीयाभरणादिकं मन्निकटे स्थापयित्वा त्वद्वियोगाद्रुदन्ती सा गतापि पुनः शीघ्रमेवायास्यतीति नायकं संकेतस्थलस्थिता दूती वदति त्वयीति त्वयि विनिवेशितं विशेषेण दत्तं हृदयं यया सा गतेत्यन्वयः केवलेन शरीरेण गुरुजनपरिज्ञानाशङ्कया ममाज्ञयैव नतु त्वयि दत्तं चित्तमपि गृहीत्वा गतेत्यर्थः केवलपदेन गुरुदर्शनायोग्यभूषणान्यपि बहुमूल्यान्यपि पुनरागमनविश्वासार्थं दूतीनिकटेऽवस्थापितानीति व्यज्यते सुभग सर्व्वोत्तम नायिकायाः प्रेमास्पदत्वेन भाग्यशालिन्नित्यर्थः नीरमात्रेण संकेतस्थले तवादर्शनेनाश्रुविशिष्टेत्यर्थः पक्षे जलमात्रेण घनं निविड़ं यज्जालं तेन रुद्धाः प्रतिरुद्धा मीनदयः यस्याः सा नदी यथा गच्छति प्रवाहविच्छेदं न करोति तथैव द्रुतमेवायाति तथागतापि अधुनैव पुनरायास्यति सेति त्वया किञ्चित्कालं स्थेयमिति समुदायार्थः यद्वा मत्कथनं विना सा किंगृहं गतेति पृच्छकं नायकं बहुदर्शनावकाशाभावेन गुरुजननियुक्ता चित्तं प्राणश्च त्वय्येव संस्थाप्य त्वद्वियोगादश्रुनेत्रा केवलेन शरीरेण गता परन्तु निश्चितं त्वदेकचित्तेति नायिकासख्याह ॥२५३॥

त्वयि संसक्तं तस्याः कठोरतरहृदयमसमशरतरलम् ॥
मारुतचलमञ्चलमिव कंटकसंपर्कतः स्फुटितम् ॥२५४॥

नायिकायामुदासीनं नायकं दूत्याह त्वयीति हेकठोरतरं कन्दर्पशरचपलं नायिकाया हृदयं त्वयि नायके संलग्नं तत् वायुचञ्चलं वस्त्रान्तमिव कंटकसंबन्धात् स्फुटितं विद्धमित्यर्थः तथा च यथा कंटके वेधनसामर्थ्यमेव न सुखदानसामर्थ्यं तथा तवापि नायिका चित्तहरसामर्थ्यमेव नतु मदन बाधाहारकत्वमित्याशयः ॥२५४॥

त्वमसूर्य्यंपश्या सखि पदमपि न विनापवारणं भ्रमसि ॥
छाये किमिह विधेयं मुञ्चति न मूर्त्तिमन्तस्त्वाम् ॥२५५॥

लज्जाधिक्यं नाटयन्तीं प्रसिद्धिभयेन तेजस्विनायकविमुखीं पामरासक्तां काञ्चिदवरोधवधूमन्योक्त्या सखी वदति त्वमिति त्वमसूर्य्यंपश्या सूर्य्यदर्शनमपि न करोषि सूर्य्यविमुखत्वं छायास्वभावः सखि छाये अपवारणं तेजोन्तरालं विना पदमपि किञ्चिदपि न चलसि एतत्सर्व्वं यद्यपि करोषि तथापि मूर्त्तिमन्तः घनीभूताः पदार्थाः त्वां न त्यजति अस्मिन् विषये किं कर्त्तव्यं स्वभावाविकत्वात्किमपि कर्त्तुं न शक्यते इत्यर्थः अथच तेजस्विजना दृश्यन्ते एवापवारणं तेजस्विजननयनवञ्चनं विना न भवति मूर्त्तिमात्रधराः शरीरमात्रधारिणः पामराः द्वारपालादयस्त्वां न त्यजन्ति किन्तूपभुञ्जत एवेति वृथा लज्जाप्रकटनमित्याशयः ॥२५५॥

तव विरहे विस्तारितरजनौ जनितेन्दुचन्दनद्वेषे ॥
विसिनीव माघमासे विना हुताशेन सा दग्धा ॥२५६॥

विरहिण्या दुःखातिशयं नायकं प्रति नायिकासखी वदति तवेति तव कठोरस्यात्यन्तासक्ताया मम सख्याउपेक्षया कठोरत्वं विरहे तव वियोगेसतीत्यर्थः किंभूते विरहे विस्तारिता विस्तृता कृता विरहजागरणेन दीर्घा कृता रजनी रात्रिर्य्येन तस्मिन्नित्यर्थः जनितोत्पादितः इन्दौ चन्द्रे चन्दने च द्वेषो येनोद्दीपकयोरिन्दुचन्दनयोर्व्विरहकालेत्यन्तदुःखदत्वादित्याशयः माघमासे विसिनी पद्मिनी वह्निना विना यथा दग्धा भवति तथा मत्सखी अग्निं विनैव दग्धा जातेत्यर्थः माघेपि दीर्घा रात्रिः शैत्येन चन्द्रचन्दनाद्द्वेषश्च भवति अत्र विसिनी उपलक्षणं तेन पुनः प्ररोहः शैत्यापगमे यथा तथा तव संभोगे मम सख्याः पुनः पूर्व्वावस्था तेन शीघ्रमेवागन्तव्यमित्यादि व्यज्यते ॥ २५६ ॥

तरुणि त्वच्चरणाहतिकुसुमितकंकेलिकोरकप्रकरम् ॥
कुटिलचरिता सपत्नी न पिबति वनशाकविकलापि ॥२५७॥

सकलसपत्नीमध्ये त्वमेव धन्यासीति नायिकां सखी वदति तरुणीति तरुणि

त्वदीया त्वत्कृता या चरणहतिः चरणताडनं तया कुसुमितः आरब्धकुसुमः आदि कर्म्मणि क्तः यः कंकेलिरशोकः तस्य कोरकाणाङ्कलिकानां प्रकरं समूहं तव सपत्नी वत आश्चर्य्ये खेदे वा न पिबति न जलेन सह पिबतीत्यर्थः शोकेन त्वयि सर्व्वप्रकार-काधिक्यदर्शनन विकलापि खिन्नापि कुटिलरचिता सर्व्वदा कौटिल्यशालिनीत्यर्थः तथाचाशोककलिकापानेन शोको न भवतीति धर्म्मशास्त्रोक्तधर्म्मं तव द्वेषान्न करोतीतिधर्म्महानिं शोकञ्च सहते इति तव स्वाभाविकाचरणेन सर्व्वास्सपत्न्यो जिता इत्याशयः ॥२५७॥

**तल्पे प्रभुरिव गुरुरिव मनसिजतन्त्रे श्रमे भुजिष्येव ॥**
**गेहे श्रीरिव गुरुजनपुरतो मूर्तेव सा व्रीडा ॥ २५८ ॥**

नायको वयस्यनिकटे नायिकां स्तौति तल्पे इति तल्पे मम शय्यायां प्रभुरिव यथा यथा प्रभुर्दर्शनमात्रेण सर्व्वश्रेष्ठोयमिति स्वरूपभूषणाज्ञाकारित्वादिभिर्ज्ञायते तथेयमपीत्यर्थः तन्त्रे शास्त्रे मनसिजस्य मदनस्य गुरुरिव शिक्षक एवेत्यर्थः तथाच येन प्रकारेण कामशास्त्रोक्ता सर्व्वापि रतिप्रक्रिया संपद्यते शिक्षां विनैव स्वाभाविकगुणेन तथा व्यवहरतीत्यर्थः श्रमे मम रतश्रमेऽन्यविधश्रमे वा भुजिष्या दासी यथा तथेत्यर्थः श्रमापनोदनेन ममाभिप्रेतकार्य्यकारित्वेनाभिमानशून्या सकलकर्म्मनिपुणेति भावः गेहे सदने श्रीर्य्यथा तथेत्यर्थः तथाच सर्व्वै र्दर्शनमात्रेणैव सर्व्व श्रेष्ठेयमिति बुध्यते न मम कथनापेक्षेतिभावः गुरुजनानाम् अग्रे मूर्त्तिमती शरीरधारिणी व्रीडा लज्जा यथा तथा सेत्यर्थः तादृशी नान्येति भावः ॥ २५८ ॥

**त्वमलभ्या मम तावन्मोक्तुमशक्तस्य संमुखं व्रजतः ॥**
**छायेवाऽपसरन्ती भित्या न निवार्य्यसे यावत् ॥ २५९ ॥**

नायकः चुम्बनोद्यतः पुष्पितामाह त्वमिति मम अलभ्या अप्राप्या त्वं तावदेवासि त्वां त्यक्तुमसक्तस्य पुष्पिताया अपि तव चुम्बनं कर्त्तव्यमेवेतिभावः त्वाभिमुख-मागच्छतः अनेन पलायनमशक्यमिति कथ्यते अपसरन्ती चुम्बननिषेधार्थं मम गमनक्रमेण मदभिमुखवदनापि स्वपश्चाद्भागं गच्छन्तीत्यर्थः भित्या कुड्येन यावत्कालं त्वं न निवृत्ता क्रियसे तावदेवेत्यन्वयः पश्चादपशरणस्थलं नास्त्येव पुरतो मयैव रुद्धासीत्यतोऽवश्यं मम चुम्बनं भविष्यति वृथा तव पलायनमितिभावः

यथा छाया शरीरप्रतिरूपकरूपा संमुखं गच्छतो जनस्य गमनक्रमेण गच्छन्ती अलभ्यापि कुड्यादिसमीपे मिलति तथेत्यर्थः ॥२५६॥

**तपसा क्लेशित एषः प्रौढ़वलो न खलु फाल्गुनेऽप्यासीत् ॥**
**मधुना प्रमत्तमधुना को मदनं मिहिरमिव सहते ॥२६०॥**

वसन्ते विशेषणप्रवसनमत्यन्तमनुचितमिति नायिका सखी नायकमाह तपसेति एषः मदनः सूर्य्यश्च खलु निश्चयेन तपसा तपश्चर्य्यया पक्षे माघमासेन क्लेशितः विषयविमुखं दृष्ट्वा पीडितः यद्वा मार्कण्डेयादिकृततपसा तद्विकारकरणे इत्यर्थः यद्वा तपसा गुप्तवासतपसा क्लेशिते फाल्गुने इत्यन्वयः पक्षे क्लेशितः निस्तेजा इत्यर्थः फाल्गुने अर्ज्जुने न प्रौढ़वलः इन्द्र प्रेषितोर्व्वशीपरित्यागादित्याशयः पक्षे फाल्गुने मासे प्रौढ़तेजसोभावात् अधुना संप्रति मधुना वसन्तेन चैत्रेण प्रकृष्टोन्मादशालिनं प्रचण्डञ्च मदनं सूर्य्यमिव कस्सहते अपितु न कोपीत्यर्थः अत्र पुंस्त्वनिर्देशेन वैदेशिकस्य सुप्रतिष्ठा/स्वास्थ्यरक्षार्थं स्त्रीजनानपेक्षयापि वसन्ते वियोगदुःखमधिकमिति व्यज्यते तथाच वसन्तसमये त्वया न गन्तव्यमित्याशयः तपा माघे इत्यमरः मधुर्व्वसन्ते चैत्रे चेति नानार्थे ॥ २६० ॥

**त्वद्गमनदिवसगणना वलक्षरेखाभिरङ्किता सुभग ॥**
**गण्डस्थलीव तस्याः पाण्डुरिता भवनभित्तिरपि ॥ २६१ ॥**

नायिकाविरहं सखी नायकं प्रत्याह त्वद्गमनेति तस्याः मम सख्या इत्यर्थः भवनभित्तिः शयनगृहकुड्यमपीत्यर्थः पाण्डुरिता श्वेतवर्णा जातेत्यर्थः भित्तिः किंभूता त्वद्गमनदिनानां या गणना कियन्ति दिनानि जातानीति परिज्ञानार्थमित्यर्थः तद्धेतुभिः वलक्षलेखाभिः श्वेतलेखाभिः अङ्किता चिह्नितेत्यर्थः हेसुभग गण्डस्थलीव यथा त्वद्विरहे तस्या गण्डस्थली पाण्डुरिता तथा श्वेताभिर्द्दिवसगणनालेखाभिर्भवनभित्तिरप्यतोऽवश्यं शीघ्रमेव गन्तव्यं तत्रेतिभावः ॥ २६१ ॥

**तस्याग्राम्यस्याहं सखिवक्रस्निग्धमधुरया दृष्टा ॥**
**विद्धा तदेकनेया पोत्रिण इव दंष्ट्रया धरणी ॥ २६२ ॥**

काचित्स्वकीया दूतीं सखीमाह तस्येति अग्राम्यस्य नागरिकस्येति विदग्धस्येत्यर्थः पक्षे वनस्थस्येत्यर्थः वक्रा कुटिला स्निग्धा प्रेमतो दीर्घा या दृष्टिः तयाहं विद्धा निरुद्धा पक्षे शूकरदृष्टिस्वभावः अतएवाहन्तदेकेन नेया प्राप्या नान्येनेत्यर्थः पोत्रिणः शूकरस्येव दंष्ट्रया दन्तेन विद्धा यथा धरणी तथेत्यर्थः तथाच वृथा तव दौत्यं ममतु नान्यत्रानुगुणशङ्केत्याशयः नायिकापरकीयेयमिति रसिकाः तथैव दृष्ट्यादिवर्णनमासक्तं स्यात् ॥ २६२ ॥

**त्वयि कुग्रामवटद्रुम वैश्रवणो वसतु वसतु वा लक्ष्मीः ॥**
**पामरकुठारघातात्कोसरशिरसैव ते रक्षा ॥ २६३ ॥**

महद्भिः कुग्रामे वासो न कर्त्तव्यः यदि क्रियते तदा कुग्रामोचितव्यवहारेणैव निर्व्वाहो नान्यथेत्यन्योक्त्या कश्चित्कञ्चिदाह त्वयीति हेपामर ग्रामस्थवटवृक्ष त्वयि कुवेरः लक्ष्मीर्वा वसतु तिष्ठतु वटवृक्षे कुवेरः लक्ष्मीश्च तिष्ठति वृक्षरोपणप्रकरणकथितत्वात् पामराणां कुठारघातात् कुठारेण छेदात् रक्षणं कासरस्य महिषस्य मृतस्य शिरसैव न कुवेरलक्ष्मीवासेनेत्यर्थः तथाच यथा चर्मकारगृहसमीपस्थं महिषमुण्डीवृतं वटवृक्षं पामरो न छेदयति तथा त्वामपि चाण्डालादिमित्रं ज्ञात्वा न कोपि दुःखितं करिष्यति न धनादिसत्वमात्रेणेत्याशयः ॥ २६३ ॥

**तव मुखरवदनदोषं सहमाना मोक्तु-मक्षमा सुतनुः ॥**
**सा वहति विटभवन्तं घुणमन्तश्शालभञ्जीव ॥ २६४ ॥**

नायिका सखी नायकं वदति तवेति सा सखी भवन्तं वहति धारयति त्वय्यासक्तैव तिष्ठतीत्यर्थः वत खेदे आश्चर्य्ये वा मोक्तुं त्वां त्यक्तुमक्षमा अङ्गीकृतत्वात् तव मुखरं कटुभाषि यद्वदनं तस्य यो दोषः मौखर्य्यं तदपि सहमानेत्यर्थः पक्षे मुखरं तीक्ष्णं यद्वदनं तस्य यो दोषः तं सहमानाकुर्वतीत्यर्थः अन्तः अन्तःकरणे पक्षेऽभ्यन्तरे शालभञ्जी काष्ठपुत्री घुणं कीटविशेषमिवेत्यर्थः वेश्यासक्तमपि भवन्तं सा न त्यजतीत्याशयः ॥ २६४ ॥

**तृणमुखमपि न खलु त्वां तृजन्त्यमी हरिणवैरिणः शवराः ॥**
**यशसैव जीवितमिदं त्यज याजितशृङ्गसंग्रामः ॥२६५॥**

निष्करेण प्रबलवैरिग्रस्तं कथनमन्योक्त्या कश्चिद्वदति तृणेति हेहरिण तृणमुखम् अनेनापराधशून्यत्वं हननायोग्यत्वं च सूच्यते त्वां शबराः भिल्लाः स्वाभाविकहरिणशत्रवो न खलु त्यजन्ति तव मारणं करिष्यन्त्येवेत्यर्थः इदं वैरिग्रस्तं जीवितं यशसा यशोहेतुना त्वं त्यज न पलायनं युक्तमित्याशयः त्वं कीदृशःसन् योजितः शृङ्गाभ्यांसंग्रामो येन सइत्यर्थः तथाचातिप्रबलस्वाभाविकशत्रोर्म्मरणावश्यकत्वेयुद्धे एव मरणमुचितं नतुपलायनेन प्राणरक्षणमशक्यत्वात् युद्धे मरणे यशोलाभाच्चेत्याशयः ॥२६५॥

**त्रिपुररिपोरिव गङ्गा मम मानिनि जनितमदनदाहस्य ।**
**जीवनमर्पितशिरसो ददासि चिकुरग्रहेणैव ॥२६६॥**

मानिनीचरणपतितस्तया दूरीकरणाय केशे गृहीतः कश्चिन्नायको मानिनीमाह ममार्पितशिरसश्चरणपतितमस्तकस्य पक्षेऽर्पितं वासार्थं दत्तं शिरो येन तस्येत्यर्थः जीवन प्राणं पक्षे जलं चिकुरग्राहेण केशाकर्षणेन पक्षे जटाप्राप्त्या ददास्येवेत्यर्थः यदा यदा चिकुरग्रहं करोषि तदाऽवश्यं रतं ददासीत्यतोऽधुना चिकुरग्रहेण रतदानेच्छा मया ज्ञातेतिभावः जनित उत्पादितः मदनस्य दाहो विकाराधिक्यं यस्य तस्येत्यर्थः पक्षे जनितो मदनदाहो मदनभस्मीकरणरूपो येन तस्येत्यर्थः त्रिपुररिपोः शम्भोरिव गङ्गेत्यन्वयः तथाच कोपे चिकुरग्रहेपि मम सौख्यं प्रसादे किं वक्तव्यमितिभावः ॥२६६॥

**त्वत्संकथासु मुखरः सनिन्दया साऽवहित्थ इव ॥**
**स खलु सखीनां निभृतस्त्वया कृतार्थीकृतः सुभगः ॥२६७॥**

काचित्सर्व्वसखीसंगोपेन केनापि नायकेन सुरतं कृत्वा सखीमध्ये स्थिता तामपरा सख्याह तवेति सखीनां निभृते सर्व्वाधिकगोपेन चतुरः स नायकः सुभगः तव प्रसादाद्भाग्यशाली खलु निश्चयेन त्वया कृतार्थीकृतः इदानीमेवास्मान् प्रतार्य्याभिमतसुरतेन कृतार्थीकृत इत्यर्थः प्रमाणमाह तव संकथासु रतसमीचीनकथासु मुखरः विपरीतवक्तेत्यर्थः गोपनार्थं कटुभाषक इत्याशयः सनिन्दयेव निन्दायुक्तयेव गोपनार्थं तन्निन्दयेत्यर्थः सावहित्थ इव गुप्ताकारइव तथाच यदि त्वया न कृतार्थीकृतस्तदा कथमेतत्सर्व्वं घटते इति भावः निभृत इति पाठः क्वचित्सुरत इति पाठः अवहित्थाकारगुप्ति इत्यमरः ॥२६७॥

त्वयि सर्प्पति पथि दृष्टिः सुन्दर वृतिविवरनिर्गता तस्याः॥
दरतरलभिन्नशैवलजाला शफरीव विस्फुरति ॥२६८॥

मया नायिकायाः प्रेम संपादितं त्वयीति दूती नायकमाह त्वयीति हेसुन्दर तथाचातःपरं तव रूपदर्शनेनैव तवाधीनायाः ममापेक्षा नास्तीत्याशयः पथि राजमार्गे त्वयि सर्प्पति गच्छति सतिपथीत्यनेन स्वाभाविकसञ्चार उक्तस्तेन त्वदपेक्षया तस्या एवाधिकं प्रेमेतिसूच्यते तस्या नायिकाया वृतिविवरात् आवरणच्छिद्रात् विनिर्गता विशेषेण निष्क्रान्ता दृष्टिः ईषत्तरलं चञ्चलम् अतएव विभिन्नं शैवलजालं शैवालसमूहो यया एतादृशी या शफरी तद्वत् विस्फुरति शोभते इत्यर्थः पाठान्तरं प्रामादिकम् ॥२६८॥

ते सुतनु शून्यहृदया ये शङ्खं शून्यहृदयमभिदधति ॥
अङ्गीकृतकरपत्रो यस्तव हस्तग्रहं कुरुते ॥ २६९ ॥

नायको नायिकामाह ते इति सुतनु शङ्खं शून्यहृदयमन्तरस्थ्यादिशून्यं स्वभावात् ज्ञानशून्यंचाभिदधति वदन्ति ये जनास्ते शून्यहृदयाः त एव पशव इत्यर्थः यः शङ्खः अङ्गीकृतं स्वीकृतं करपत्रं क्रकचं येन स तव हस्तग्रहं हस्तपरिधानं तनुते विस्तारयति तथाच करपत्रविदारणेन स्वस्य तव हस्तग्रहयोग्यतां संपाद्य तव हस्तग्रहमचेतनोपि शङ्खः करोति सचेतनस्य मम प्रयागगलकर्त्तनेन ततोप्यधिकेन वा केनापि पुण्येन तव हस्तग्रह इदानीं जायते नान्यस्याधन्यस्येत्याशयः प्रथमपक्षे नायकस्य नायिकान्तरोपभोगवर्णने रसाभासापत्तिभिया सखीं प्रति सख्युक्तिरिति केचित् ॥ २६९ ॥

ते श्रेष्ठिनः क्व संप्रति शक्रध्वज यैः कृतस्तवोछ्राय ॥
ईषां वा मेधिं वाऽधुनातनास्त्वां विधित्सन्ति ॥ २७० ॥

पूर्व्वं प्रभुणा संमानितं तत्प्रभुमरणानन्तरं कदर्य्यनवीनप्रभुसमये पुनस्समागतं वैदेशिकं प्रति कश्चिदन्यो वक्ति ते इति श्रेष्ठिनः सकलवैश्यश्रेष्ठाः ते संप्रतीदानीं क्व न सन्तीत्यर्थः ते के हेशक्रध्वज इन्द्रपूजार्थमारोपितमहाध्वज दण्ड-

तवोच्छ्रायः मुक्ताहीरकादिविन्यासेन विन्यासविशेषः कृतः यैस्ते इत्यर्थः अधुनातनाः नवीनाः कदर्य्याः अत्रत्याः त्वां शक्रध्वजम् ईषां लाङ्गलदण्डं मेधिं खलेदारु वा विधित्सन्ति विधातुमिच्छन्तीत्यर्थः तथाचाधुना न तव योग्यमिदं स्थानमित्याशयः ईषालाङ्गलदण्डः स्यादिति पुंसि मेधिः खलेदारु इतिचामरः ॥ २७० ॥

तानवमेत्य च्छिन्नः परोपहितरागमदनसंघटितः ॥
कर्ण इव कामिनीनां न राजते निर्भरः प्रेमा ॥ २७१ ॥

प्रेमभङ्गखिन्ना काचित् प्रेमैव न कर्त्तव्यं यदि क्रियते तदा भङ्गो न कर्त्तव्य इति सखीमुपदिशति तानवमिति कामिनीनां प्रेमा न राजते न शोभते निर्भरं दृढं न राजते इत्यर्थः केव कामिनीनां कर्णेव श्रोत्राङ्गमिव द्वयमपि विशेषयति तानवं तनुतां पक्षे अल्पत्वमेत्य प्राप्य छिन्नः त्रुटितः पक्षे भग्नः परेण दूतीजनेनोपहितः योजितः रागः अनुरागो यत्र स इत्यर्थः नतु स्वाभाविकपूर्व्ववदनुराग इत्याशयः सचासौ मदनेन कामविकारमात्रेण नतु स्वभावेन संघटितः पुनर्य्योजित इत्यर्थः रागेण मदनेन च संघटित इतिवा पक्षे परेण शिल्पिना उपहितरागं कर्णवर्णतुल्यवर्णयन्मदनमयन इति भाषया प्रसिद्धं तेन संघटितः संय्योजित इत्यर्थः भग्नः कर्णः केनचिद्वस्तुना रञ्जितेन योजितोपि पुनस्स्वल्पमपि मर्द्दनं न सहते पुनर्भग्नः एवं भवतीत्याशयः ॥ २७१ ॥

तस्मिन् गतार्द्रभावे विगतरसे शुण्ठिशकल इव पुरुषे ॥
अपि भूतिभाजि मलिने नागरशब्दो विडम्बाय ॥ २७२ ॥

काचिन्नायकस्य स्नेहाल्पत्वं कार्प्पण्यञ्च पश्चाद्बुध्वा नायकसंगमकारिणी सखीमाह तस्मिन्निति तस्मिन् त्वया योजिते नायक इत्यर्थः नागरशब्दः नगरे भवः नागर इतिव्युत्पत्तिसिद्धो विदग्धपर्य्यायनागरशब्दइत्यर्थः पक्षे शुण्ठिपर्य्यायनागर इत्यर्थः विडम्बाय हास्यायेत्यर्थः शुण्ठिशकले इव विश्वभेषजखण्डेइवेत्यर्थः साधारणधर्म्ममाह गतः नष्ट आर्द्रभावोऽनुरागो यस्य तस्मिन्नित्यर्थः गतार्द्रभावे प्राप्तानुरागेपि विरसे शृङ्गारोपयुक्तसकलरसशून्य इतिवाक्यार्थः पक्षे गत आर्द्रभावः शृङ्गवेरगतत्वं यस्य तस्मिन् विरसे निर्ज्जले इत्यर्थः अतिभूतिंमहालक्ष्मीं भजतीति तथा महालक्ष्मीवत्यपीत्यर्थः पक्षे भस्मभाजि मलिने इत्यर्थः तथाच यथारसविगमे

भस्ममलिने नागरशब्दस्तथाऽस्मिन्नायकेपीत्यर्थः नागरं विश्वभेषजमिति शुण्ठि- पर्य्याये कोषः निर्गुणस्य महन्नाम हास्यकरमिति कश्चिदाहेत्यपि कश्चित् वस्तुतस्तु पूर्व्वं नागरत्वेन प्रसिद्धेनातिवृद्धेन सखीमाहेतिततत्वम् ॥ २७२ ॥

**तमसि घने विषमे पथि जम्वुकमुल्कामुखं प्रपन्नाः स्मः ॥**
**किं कुम्भःसोपि सखे स्थितो मुखम्मुद्रयित्वैव ॥ २७३ ॥**

नायिका सखीमाह तमसीति तिमिरे अन्धकारे घने निविडे सति विषमे दुर्गे मार्गे उल्का मुखे यस्य एतादृशं जम्बुकं शृगालं वयं प्राप्ताः स्मेत्यर्थः अथच शृगालसदृशमधम नायकं प्राप्ताः अत्र बहुवचनेन सख्यादिसाहित्यबोधकेन तासां साक्षित्वं व्यंजितं किं कुर्म्मः सोपि उल्कामुखशृगालोपि मुखं मुद्रयित्वैव स्थितः तथाच अप्रकाशात् कुत्रापि गन्तुं न शक्यते किमपि कर्तुमितिभावः अथच सोपि नायकोपि मुखं वदनं मुद्रयित्वा मौन विधायेत्यर्थः स्थितस्तथैव स्थितः अभ्युत्था- नस्य का कथा संभाषणमपि दूरनिरस्तमित्याशयः तथाच किं वक्तव्यमभाग्यमि- तिश्लोकार्थः जम्वुकशब्दास्यात्र ह्रस्वोकारमध्यत्वेन न मात्राधिक्यं जम्बूकं जम्बुकं प्राहुरिति द्विरूपकोषः ॥ २७३ ॥

**त्वामभिलषतो मानिनि मम गरिमगुणोपि दोषतां जातः ॥**
**पङ्किलकूलां तटिनीं विपासतस्सिन्धुरस्येव ॥ २७४ ॥**

नायको दुष्टप्रति वेश्यादिकृतबहुविधनिन्दाश्रवणखिन्नतया स्वानागमनेन मानिनी नायिकामाह त्वामिति मानिनी त्वामिच्छतो मम गरिमगुणोपि प्रतिष्ठा- कारकगुणसमूहोपि दोषतां वारंवारंत्वद्दर्शनप्रतिरोधकतां यातः अपिर्विरोधे कस्येव यथा गजस्य गरिमगुणः स्थूलदेहतागुणः दोषतां पङ्कमग्नताकारणतां याति तथेत्यर्थः किंभूतस्य गजस्य पङ्कलग्नं कर्दममयं कूलं तीरं यस्या एतादृशीं तटिनीं नदीं पिपासतः पातुमिच्छोः नलिनीमिति यदि पाठस्तदा विपासत- इत्यस्यादातुमिच्छोरित्यर्थः प्रामादिक एवायं पाठ इति बहवः तथाच समागमन- मुचितमपि दुष्टप्रतिवेश्यादिभयेन न जायते त्वया मानं विहायागन्तव्यमिति नायकप्रार्थनावाक्यार्थः ॥ २७४ ॥

**तिमिरेपि दूरदृश्या कठिनाश्लेषे च हरसि मुखरा च ॥**
**शङ्खमयवलयराजी गृहपतिशिरसा सह स्फुटतु ॥२७५॥**

काचिदमत्याह तिमिरे इति गृहपतेः पत्युः शिरसा मस्तकेन समं सह शङ्खमयानां शङ्खनिर्म्मितानां वलयानां हस्तालङ्करणानां राजी पंक्तिः मागृहपतिशिरश्च युगपदेव स्फुटतु नश्यत्वित्यर्थः तथाच वैधव्येन शङ्खवलयपरित्यागो भवत्विति वाक्यार्थः राजी किंभूता तिमिरेपि अन्धकारेपि दूरात् दृश्या दर्शनयोग्या कृष्णाभिसारप्रतिबोधकर्त्रीत्यर्थः रहस्येकान्ते कठिना आश्लेषेपि उपपतिकृतदृढ़ालिङ्गनेपि अपिना सुरतसमयसमुच्चयः मुखरा सर्व्वलोकश्रवणयोग्यशब्दकर्त्रीत्यर्थः तथाच यथा शङ्खराजी भूषणार्थं धृता रतिप्रतिबोधिनी जाता तथा पतिरपि स्वयमप्रयोजकः परकृतसौख्यमपि निवारयतीत्याशयः ॥२७५॥

**तव वृत्तेन गुणेन च समुचितसम्पन्नकंठलुठनायाः ॥**
**हारस्रजेव सुन्दरि कृतः पुनर्न्नायकस्तरलः ॥२७६॥**

त्वमेव धन्यासीति काचित्सखी सखीं प्रत्याह तवेति हे सुन्दरि तव वृत्तेन शीलेन गुणेन चातुर्य्यपूर्वकसकलकलाभिज्ञत्वेन चेत्यर्थः पक्षे वृत्तेन वर्त्तितेन सूत्रेणचेत्यर्थः समुचितं योग्यं सम्पन्नं सम्यक् संवृत्तं पत्युः कंठे लुठनं यस्यास्तस्या इत्यर्थः पक्षे समुचितो योग्यः सुन्दर इति यावत् यः सम्पन्नो महाधनी तस्य कंठे लुठनं यस्याः नायकः धीरोपि नायकः तरलः चञ्चलः कृत इत्यर्थः त्वयेपि पाठे नायिकयेत्यर्थः हारस्रजेव मुक्तामालयेवेत्यर्थः हारस्रक्समुदायस्य मुक्तामालायां रूढ़त्वात् तरलो हारमध्यमणिः यथा मुक्तामालया नायकपदवाच्यः श्रेष्ठो वा क्रियते तथैवेत्यर्थः तथाच धीरोदात्तोपि वारम्वारं त्वदर्थञ्च लोभवर्तीति तव माहात्म्यं किं वक्तव्यमित्याशयः नायको नेतरि श्रेष्ठे हारमध्यमणेरपीत्यादिकोषः तरलो हारग इत्यमरः ॥२७६॥

॥ इतिश्रीसच्चलविरचितायां गोवर्द्धनसप्तशतीव्याख्यायां तकारव्रज्या समाप्ता ॥

**दर्शनविनीतमाना गृहिणीहर्षोल्लसितकपोलतलम् ॥**
**चुम्बननिषेधमिषतो वदनं पिदधाति पाणिभ्याम् ॥२७७॥**

ज्येष्ठायाः सपत्न्या मानापनोदनार्थं प्रियः किं करिष्यतीति चिन्तादुःखितां नायिकां सखी समाश्वासयति दर्शनेति गृहिणी ज्येष्ठा पत्नी दर्शनविनीतमाना पतिदर्शनमात्रेण विनयवाक्यप्रणामादिकं विनैव विगतमानेत्यर्थः चुम्बननिषेधछलतः हस्ताभ्यां मुखमाच्छादयतीत्यर्थः मुखं किंभूतं हर्षेण पतिसंभोगसंभावनाजनितहर्षेणोल्लसत् शोभमानं कपोलतलं यत्र तदित्यर्थः तथाच सकलगुणशालिन्यास्तवाधीनः पतिरिति ज्ञात्वा किमर्थं त्वया मानः कृतः कथमपि प्रियमागमो भविष्यत्येव प्रतिकरणीयं तव ज्येष्ठसपत्न्या जातं त्वमेव धन्यासि नान्येत्याशयः ॥२७७॥

देहस्तम्भः स्खलनं शैथिल्यं वेपथुः प्रियध्यानम् ॥
पथिपथि गगनाश्लेषः कामिनि कस्तेऽभिसारगुणः ॥२७८॥

नायकान्तरेण योजयितुं दूती नायिकामाह देहेति देहस्तम्भः विकारात् स्खलनं पतनम् अन्धकारात् शैथिल्यं मन्दगमनं चरणापाटवात् वेपथुः कंपः भयात् प्रियध्यानं सहायचिन्तनात् पथिपथि सर्वत्र मार्गे गगनाश्लेषो हस्तयोरालिङ्गनं समयवत् प्रसारितत्वात् कामिनि कामविकारमूढे ते अभिसारे को गुणः न कोपीत्यर्थः अपितु पूर्व्वोक्ता दोषा एवेत्यर्थः तथाच किमर्थमभिसारः मदुक्तं कुरु नायकान्तरमतीववैदग्ध्यादिसम्पन्नं मयानीय दीयते इत्याशयः ॥२७८॥

द्राघयता दिवसानि त्वदीयविरहेण तीव्रतापेन ॥
ग्रीष्मेणेव नलिन्या जीवनमल्पीकृतं तस्याः ॥२७९॥

नायिकाविरहं नायकं प्रति सखी वदति द्राघयतेति दिवसानि वर्द्धयता दुःखदत्वात् पक्षे ग्रीष्मदिनस्य महत्त्वात् तव विरहेण तीव्रः उत्सोढुमशक्यः पक्षे तीक्ष्णः तापो वियोगवेदना यत्र तेनेत्यर्थः पक्षे तापः संतापः ग्रीष्मेणेव जीवनं प्राणरक्षणं पक्षे जलमल्पीकृतमवशेषीकृतं पक्षे शोषितं तस्या विरहकृशाङ्ग्याः तथाच शीघ्रमेव चलनीयमित्याशयः ॥२७९॥

दुर्ज्जनसहवासादपि शीलोत्कर्षं न सज्जनस्त्यजति ॥
प्रतिपर्व्वतपनवासी निःसृतमात्रः शशी शीतः ॥२८०॥

औपाधिकदोषेण स्वभावपरित्यागः कस्यापि सज्जनस्य न भवतीति कश्चिदाह दुर्ज्जनेति दुष्टसंगात् अपिर्विरोधे स्वाभाविकोत्कर्षे समीचीनो न त्यजतीत्यर्थः प्रतिपर्व्व प्रत्यमावस्यं सूर्य्यमण्डलवासी शशी निःसृतमात्रः द्वितीयाचन्द्रोपि शीतः शीतल इत्यर्थः दर्शः सूर्य्येन्दुसगम इत्यमरः अतिसमीचीनस्य दुष्टसमागमदोषो न भवतीति वाक्यार्थ इति वा ॥२८०॥

दयितप्रहितां दूतीमालम्ब्य करेण तमसि गच्छन्ती ॥
स्वेदच्युतमृगनाभिर्दूराद्गौराङ्गि दृश्याऽसि ॥ २८१ ॥

काचित्सखी नायिकामाह दयितेति दयितप्रहितां प्रेयप्रेषितां दूतीमनेन सात्विकभावयोग्यता करेण गृहीत्वान्धकारे गच्छन्ती स्वेदेन सात्विकेन च्युता गलिता मृगनाभिः कस्तूरिका यस्याः सेत्यर्थः हेगौराङ्गि अनेन दर्शनायोग्यत्वं सूचितं दूराद्दृश्यासि दर्शनयोग्यासीत्यर्थः तथाच यथा मया दृष्टं तथान्यैरपि यदि द्रष्टव्यं तदा किं करिष्यति त्वमुन्मत्ता किमपि न जनासीत्याशयः प्रियप्रेषितदूत्युक्तिरियमित्यपि कश्चित् ॥२८१॥

दयितागुणः प्रकाशं नीतः स्वस्यैव वदनदोषेण ॥
प्रतिदिनविदलितवाटीवृतिघटनैः खिद्यसे किमिति ॥ २८२ ॥

स्वस्त्रीगुणगोपनमेव कर्त्तव्यमिति कश्चिदाह दयितेति दयितायाः कृतविवाहायाः गुणः सौन्दर्य्यादिः स्वस्यैव नतु कुटुम्बादेः वदनदोषेण मुखदोषेण प्रकाशं प्रव्यक्ततां नीतः प्रापितः प्रत्यहं विदलिता गुणश्रवणकुतूहलिजारसंचारेण विघटिता या वाटीवृतिः गृहसमीपवर्त्तिवेष्टनं तद्घटनैः प्रत्यहं तत्संपादनैः खिद्यसे खिन्नो भवसीति किं यदि गुणप्रकाशः कृतः तर्हि इदमपि सोढव्यमेव नोचेद्गुणप्रकाश एव न कर्त्तव्य इत्याशयः ॥२८२॥

दाक्षिण्यान्म्रदिमानं दधतं साभानुमघमंस्थाः ॥
रौद्रोमुपागतेऽस्मिन् कः क्षमते दृष्टिमपि दातुम् ॥२८३

मृदुस्वभावत्वभ्रान्त्या नायकेऽत्यन्तप्रौढिमाचरन्तीं नायिकां नायकस्वभाव-

ऽन्योक्त्या सख्याह दाक्षिण्येति एनं भानुं भानुसदृशनायकञ्च नावमंस्थाः अनास्थां पक्षेऽसौ किं करिष्यतीति बुद्धिं न कुर्या इत्यर्थः दाक्षिण्यात् दक्षिणदिगवस्थानात् पक्षे दक्षिणस्वभावात् अदिमानमल्पतेजस्कत्वं पक्षे सर्व्वथानुकूलत्वं भजन्तं रौद्रीं पेशानीं मध्याह्नप्रचण्डतां वा पक्षे कोपवत्वमुपागते उपगतेऽस्मिन् सूर्य्ये नायके च दृष्टिमपि चक्षुर्न्निपातमपि अपिनाऽन्यद्वारेण कथनादिपरिग्रहः दातुं कः क्षमते न कोपीत्यर्थः तथाचास्य नायकस्य कोपस्सर्व्वथा वर्ज्जनीय इत्याशयः ॥ २८३ ॥

**दृष्ट्यैव विरहकातरतारकया प्रियमुखे समर्पितया ॥**
**यान्ति मृगवल्लभायाः पुलिन्दवाणार्द्दिताः प्राणाः ॥२८४॥**

पथिक विदेशगमनोद्यतं सखायं पथि हरिणीं दृष्ट्वाह दृष्ट्यैवेति मृगवल्लभाया हरिणप्रेयस्याः नतु पत्नीमात्ररूपाया इत्यर्थः पुलिन्देन व्याधवृत्तिना म्लेक्षविशेषेणेत्यर्थः अर्द्दिताः पीड़िताः प्राणा असवः यान्ति निःसरन्तीत्यर्थः दृष्ट्या विलोकनरूपया सहैव एवकारेण समफलत्वलाभः विरहेण कातरा तारकाक्षिकनीनिका यस्यास्तयेत्यर्थः प्राणगमनपीड़ातोपि विरहव्यथाधिकेत्याशयः प्रियस्य नतु पत्युः मुखे वदने समर्प्पितया समारोपितयेत्यर्थः प्रियवल्लभापदाभ्यां समस्नेहवत्वेन सर्व्वाधिकसुखदत्वं द्योत्यं तथाच पशुरूपापि हरिणी प्राणत्यागवाधां न ज़ानाति तदिदानीमपि विरहव्यथाविध्वंसनमेव करोति त्वन्तु पशोरपि मूढ़ोसि यदिदानीं प्रेयसीं विहाय चलितोसीत्याशयः स्वरूपवर्णनमेतदितिकश्चित्पुलिन्दाम्लेक्षजातय इत्यमरः ॥ २८४ ॥

**दूरस्थापितहृदयो गूढ़रहस्यो निकामसाशङ्कः ॥**
**आश्लेषो बालानां भवति खलानाञ्च सम्भेदः ॥ २८५ ॥**

खलसख्यं न कर्त्तव्यमिति कश्चित्कञ्चिदाह दूरेति बालानां मुग्धानामाश्लेषः आलिङ्गनं खलानाञ्च संभेदः दुष्टमिलनञ्चेत्यर्थः ईदृशो भवति कीदृशो दूरे स्थापितं हृदयं वक्षो यत्र तादृश इत्यर्थः पक्षे दूरे स्थापितमन्तःकरणं यत्र स इत्यर्थः गूढ़ं गुप्तं रहस्यं कर्त्तव्यं पलायनादि यत्र स इत्यर्थः पक्षे गुप्तमचरणादि यत्र स इत्यर्थः अत्यर्थं

निपीडनाद्याशङ्कायुक्त इत्यर्थः पक्षे कर्त्तव्यं भविष्यति न वेति शङ्कायुक्त इत्यर्थः तथाच कदापि सौख्यं नास्तीत्याशयः ॥२८५॥

द्वारे गुरवः कोणे शुकः सकाशे शिशुर्गृहे सख्यः ॥
कालासह क्षमस्व प्रियम्प्रसीद प्रयातमहः ॥ २८६

असमये रतं याचमानं नायकं नायिकाह द्वार इति गुरुवर्गा द्वारे बहिर्गन्तुमवकाशो नास्तीत्याशयः कोणे शुकः वचनपटुः समीपे बलात्कारे सोपि वक्ष्यतीत्याशयः सकाशे पुरतः शिशुः बाल इत्यर्थः तथाच बालरोदनेन गुर्व्वागमनमपि संभावितमित्याशयः गृहे सख्यः ताभिरप्युपहासः कर्त्तव्य इत्याशयः हेकालासह अकालरतोद्यतेत्यर्थः क्षमस्व क्षमां कुरु हठात्कारं न कुरु उचितं वदामीत्याशयः हे प्रिय तथाच नेदं प्रियस्योचितमित्याशयः प्रसीद प्रसादं विना निषेधोपि कर्त्तुमशक्य इत्यर्थः तर्हि न भविष्यति समागम इत्यत आह अहः दिनं प्रयातं दिनशेषो जात इत्यर्थः तथाच रात्रिरागता तदाभिप्रेतसिद्धिर्भविष्यतीत्याशयः ॥२८६॥

दधिकणमुक्ताभरणश्वासोत्तुंगस्तनार्पणमनोज्ञम् ॥
प्रियमालिङ्गति गोपी मन्थश्रममन्थरैरङ्गैः ॥ २८७ ॥

संकेतस्थलप्राप्तनायकदर्शनं तरुण्या यथास्थितयापि कर्त्तव्यं भूषणधारणे च विलम्बो न कर्त्तव्य इति कापि दूती नायिकामुपदिशति दधिकणेति गोपी प्रियमालिङ्गति प्रेम्णा विलम्बन्न करोतीत्यर्थः कैः मन्थजातश्रमेण मंथरैः जडैः बाह्वादिभिरित्यर्थः दधिकणस्वरूपमुक्तालङ्कृतयोः मंथश्रमश्वासेनोच्चयोः स्तनयोरर्प्पणेन प्रियवक्षसि प्रापणेन रमणीयं मनोज्ञं यथा तथालिङ्गतीत्यन्वयः तथाच त्वयापि यथास्थितयैव नायकसमीपं गन्तव्यं न त्वाभरणधारणाय विलम्बः कर्त्तव्य इत्याशयः स्वरूपवर्णनमेतदितिवस्तुगतिः ॥२८७॥

दलितोद्वेगेन सखि प्रियेण लग्नेन रागमावहता ॥
मोहयता शयनीयं ताम्बूलेनेव नीताऽस्मि ॥ २८८ ॥

दयितसंगमेऽन्यविषयकं किञ्चिदपि ज्ञानं न जायत इति नायिका सखीं प्रति

वदति दलितेति दलितः दूरीकृत उद्वेगो मदनक्लेशो येन पक्षे दलिखण्डीकृतंपूगकृतं यत्र तेनेत्यर्थः हेसखि लग्नेन कृतालिङ्गनेन पक्षे कण्ठपर्य्यन्तगतेन रागमनुरागं लौहित्यञ्चाहवता मोहयता सुखाधिक्यात् मोहं प्रापयता पक्षे मोदकत्वात् शयनीयं शय्यां नीतास्मि ताम्बूलेनेवेत्यर्थः ॥२८८॥

दृष्टमदृष्टप्रायं दयितं कृत्वा प्रकाशितस्तनया ॥
हृदयं करेण ताडितमथमिथ्याव्यञ्जितत्रपया ॥ २८६ ॥

× × × ×

दर्शितयमुनोच्छाये भ्रूविभ्रमभाजि वलति तव नयने ॥
क्षिप्तहले हलधर इव पुरमेवावर्ज्जितं सुतनु ॥ २६० ॥

सखी नायिकामाह दर्शितेति तव नयने नेत्रे वलति शोभमाने सतीत्यर्थः कस्मिन्निव वलभद्रे क्षिप्तहले क्षिप्तः हस्तिनापुरनगरोत्खाताय समारोपितः हलो येन तस्मिन्नित्यर्थः उपमानोपमेययोस्साधारणविशेषणमाह दर्शितः यमुनायाउच्छायः श्यामस्वरूपो येन तस्मिन्निति नेत्रपक्षे वलभद्रपक्षेतु दर्शितो यमुनोच्छायो हलेन प्रवाहवैपरीत्यकरणात् जलाधिक्यं येन तस्मिन्नित्यर्थः भ्रूविभ्रमभाजि कटाक्षशालिनीत्यर्थः तथाचैतादृशनयनेन नागरिकास्सर्व्वेपि त्वदेकशरणास्तिष्ठन्ति पक्षे भ्रुवः विभ्रमं कोपात्कौटिल्यं भजतीति तस्मिन् हेसुतनु सुन्दरि पुरमेव नगरमेवावर्ज्जितं अनुरक्तं पक्षे पुरं हस्तिनापुरमावर्ज्जितं पश्चिमत उन्नतं कृतमित्यर्थः तथाच तवैतादृशनयनं नागरिकास्सर्व्वेपि त्वदेकशरणास्तिष्ठन्तीति सखीपरिहासो वाक्यार्थः ॥ २६० ॥

दयितप्रार्थितदुर्लभमुखमदिरासारसेकसुकुमारः ॥
व्यथयति विरहे वकुलः क्व परिचयः प्रकृतिकठिनानाम् २६१

विरहिणी नायिका सखीं प्रति वदति दयितेति दयितेन प्रियेण प्रार्थितोपि दुर्ल्लभः यो मुखमदिरासारसेकः मद्यगण्डूषसेचनमित्यर्थः तेन सुकुमारः समङ्कुरितनवशाखापल्लवइत्यर्थः एतादृशोपि वकुलः वियोगे व्यथयति पूर्व्ववृत्तान्तस्मारणेन

पीडयतीत्यर्थः अर्थान्तरन्यासमाह प्रकृतकठिनानां स्वभावसिद्धकाष्ठानां पक्षे दुष्टानां क परिचयः न क्वापीत्यर्थः तथाच प्रियोपि कठिनहृदय एवेत्याशयः उत्तमस्त्रीदत्तमदिरागण्डूषेकाणालेपि पुष्पोत्पत्तिरिति कामशास्त्रम् ॥२६१॥

द्वित्रैरेष्यामि दिनैरिति किं तद्वचसि सखि तवाश्वासः ॥
कथयति चिरपथिकन्तं दूरनिखातो नखांकस्ते ॥ २६२ ॥

तव नायकोयमतीतयौवन इवातो नायकान्तरपरिचयं कुर्व्वति दूतीसखी नायकसमक्ष एव नायिकामाह द्वित्रैरिति द्विसंख्याकैस्त्रिसंख्याकैर्वा दिनैरहमागच्छामीति नायकवचने तव कथं विश्वासः मिथ्यैव वदतीत्याशयः हेतुमाह तं नायकं चिरकालप्रवासकारकं ते शरीरे दूरनिखातः पुरातनः नखाङ्कः अत्यर्थं निर्द्दयं दत्तो वेत्यर्थः प्रवासगमनसमये गम्भीरनखक्षतदानं कामशास्त्रसिद्धमित्यप्याहुःकथयति चात्रावस्थितोपि नवीनं नखाङ्कं न कृतवान् यदि तदा शीघ्रं गच्छतु त्वन्तु नायकान्तरपरिचयं कुर्व्वित्याशयः शीघ्रं नायास्यतीतिमात्रं वाक्यार्थ इतिभावः ॥ २६२ ॥

दयितस्पर्शोन्मीलितघर्म्मजलस्खलितचरणनखलाक्षे ॥
गर्व्वभरमुखरिते सखि तच्चिकुरान् किमपराधयसि ॥२६३॥

नायिकया मानस्त्यक्त इति नायकपरिज्ञानाय सखी नायिकामाह दयितेति दयितस्य स्पर्शमात्रेणोद्गतानि यानि घर्म्मजलानि तैः पतिता चरणनखलाक्षा यस्यास्तत्संबोधने तथा च सात्विकभावेन लाक्षा प्रचालिता नतु चरणपतितनायककेशसंकर्षणेनेत्याशयः गर्वभरेण मानाधिक्येन मुखरिते मौखर्य्यवति बहिरेव मौखर्य्यमित्याशयः सखीत्यनेन यथार्थकथनयोग्यता व्यज्यते तच्चिकुरान् चरणपतितनायकशिरोरुहान् अपराधयसि सापराधान् करोषीति किं माने गतेपि बहिः कोपप्रकाशो वृथेत्याशयः ॥ २६३ ॥

दुष्टग्रहेण गेहिनि तेन कुपुत्रेण किं प्रजातेन ॥
भौमेनेव निजं कुलमङ्गारकवत्कृतं येन ॥ २६४ ॥

पुत्रदुर्न्नयखिन्नः कश्चित् कुपुत्रादपुत्रतैव ज्यायसीति गृहिणीमाह दुष्टेति हेगेहिनि तेन त्वदुत्पन्नेन दुराग्रहशीलेन कुत्सितेन पुत्रेण प्रजातेनोत्पन्नेन किं वृथेत्यर्थः पक्षे पापग्रहेण पृथिवीपुत्रेण किमित्यर्थः येन निजं कुलं मम कुलं पक्षे कुजकुलमङ्गारकवत् भस्मवत् अत्यन्तनिन्दितवदिति यावत् पक्षेऽङ्गारकवत् कुजवदित्यर्थः भौमेनेवाङ्गारकेणेवेत्यर्थः अङ्गारकः कुजो भौम इत्यमरः ॥२६४॥

दर्शितचापोच्छ्रायैस्तेजोवद्भिःस्वगोत्रसंजातैः ॥
हीरैरप्स्विव धीरैरापत्स्वपि गम्यते नाधः ॥ २६५ ॥

सौन्दर्य्यगुणस्य सर्वगुणाधिकत्वमिति कश्चिदाह दर्शितेति आपत्स्वप्यपिनानापत्परिग्रहः अधः लोकनिन्दा पक्षे भूमिः न प्राप्यत इत्यर्थः यथा हीरैः वज्रैः अप्स्वपि जलेपि अनिमग्नेन प्रकाशितेन वा स्थीयते तद्वदित्यर्थः पर्व्वतोत्पन्नस्य हीरकस्य जलसंतरणे महत्त्वमितिरत्नपरीक्षा दर्शितधनुष्टङ्कारैः पक्षे दर्शितश्चापोच्छ्रायः धनुराकारः कान्तिप्रवाहो यैः तेजोवद्भिरोजस्विभिः पक्षे किरणप्रचुरैः समीचीनकुलोत्पन्नैः हीरैः धीरैः शूरैः पक्षे उत्कृष्टपर्व्वतोत्पन्नैरित्यर्थः तथाच सकलरत्नशिरोभूतहीरकतुल्याःशूराः इत्यर्थः ॥२६५॥

दरनिद्राणस्यापि स्मरस्य शिल्पेन निर्गता धन्यम् ॥
मुग्धे तव दृष्टिरसावर्जुनयन्त्रेषुरिव हन्ति ॥ २६६ ॥

लज्जया विमुखीं स्वल्पमदनविकारेण नायकं किञ्चित्कटाक्षयन्तीन्नायिकां नायक आह दरेति दरेण भयेन निद्राणस्य निलीनस्यापि मदनस्य शिल्पेन कौशलेन किञ्चिद्वक्रत्वसंपादकेनेतियावत् निर्गता किञ्चित्प्राप्ता धन्यं पुण्यवन्तं मादृशं मुग्धे अधिकलज्जावति तवासौ दृष्टिःहन्ति गच्छति तथाच धन्यमेव गच्छति नान्यमित्याशयः अपिना सम्यक्मदनोद्रेके किं वाच्यमित्यावेद्यते केव अर्ज्जुनस्य यन्त्रनिपातनशर इवेत्यर्थः द्रौपदीविवाहे विमुखेनार्ज्जुनेन मत्स्यभेदः कृत इति भारतकथा हन्ति घातयति अध्वन्यमिति शून्यमितिच क्वचित्पाठः तत्र पथिकमभिप्रायशून्यं चेत्यर्थः लिखितपाठे चमत्कारः अध्वनीनो ध्वगो ध्वन्य इत्यमरः इषुर्द्वयोरित्यपि ॥ २६६ ॥

दुर्गतगृहिणीतनये करुणार्द्रा प्रियतमे च रागमयी ॥
मुग्धा रताभियोगं न मन्यते न प्रति क्षिपति ॥ २६७ ॥

यथोचितमपि नानाजातीयप्रेमरक्षणमतिकठिनं सुतरामनुचितयथाविधप्रेम रक्षणमिति दारिद्र्यमतिपीड़ाकरमिति वा कश्चित्कञ्चिद्वदति दुर्गतेति दरिद्रस्य गृहिणी अनेन धात्रीरक्षणासामर्थ्यं व्यज्यते तनये अल्पवयस्कपुत्रे करुणार्द्रा कृपया सस्नेहेत्यर्थः प्रियतमे समुचिते पाणिग्राहके रागमयी रतेच्छावतीत्यर्थः मुग्धा किंकर्त्तव्यतामूढ़ा तस्या रताभियोगमप्रसूतसपत्न्युपभोगं प्रथमपरिणीता स्त्री प्रसूतापि न मन्यत इत्यर्थः तथाच यथेयं विरुद्धकार्य्यद्वयौदासीन्येन तिष्ठति तथैव यतितव्यमित्याशयः ॥ २६७ ॥

दुर्गतगेहिनि जर्ज्जरमन्दिरसुप्तैव वन्दसे चन्द्रम् ॥
वयमिन्दुवंचितदृशो निचुलितदोषाविहारिण्यः ॥ २६८ ॥

काचिदवरोधखिन्ना नायिकाऽत्यन्तस्वाभिलषिताप्राप्तनायकदूतीमन्योक्त्या वदति दुर्गतेति दरिद्रपत्नि अनेन स्वेच्छासंचारिण्यास्तव न विहारोपि सुलभ इति ध्वन्यते जर्ज्जरं प्रतिदिशं भग्नावरणमनेन नायकागमनयोग्यत्वं व्यज्यते एतादृशं यत् गृहं तत्र सुप्तैवेत्यर्थः अनेन गमनश्रमाभावः सूच्यते चन्द्रं प्रणमसि अनेन संतापापनोदकत्वेन चन्द्रोपि तव कार्य्यकारी तेन वयमेव दरिद्रास्त्वमेव धनशालिनीति व्यज्यते वयं चन्द्रवञ्चितनयनाः वस्त्राच्छादितशिविकासंचारिण्य इत्यर्थः निचुलितेत्यनेन कदापि कस्यापि दर्शनं नेत्यगम्यते तथाच क्षणमप्यवकाशो नास्ति दारिद्र्यमेव वरं नेदृशन्धनवत्त्वमतोत्र तेन नायकेन मम समागमो भविष्यतीति तटस्थदूतीं प्रति वाक्यार्थः ॥२६८॥

दीपदशा कुलयुवतिर्वैदग्ध्येनैव मलिनतामेति ॥
दोषा अपि भूषायै कुलटायाः शशिकलायाश्च ॥ २६९ ॥

प्रियेपि वैदग्ध्यन्न करोषि किमिति वादिनीं चपलां सखीं कुलवधूराह दीपेति प्रदीपवर्त्तिका कुलकामिनीच वैदग्ध्येन विशेषतो दाहेन कामकलादिचातुर्य्येणच

स्नालिं भस्मत्वमसतीत्वञ्च प्रति गच्छन्ति दोषाश्चाञ्चलादयः रात्रयश्च वेश्यायाः चन्द्रकलायाश्च भूषायै अलङ्करणाय भवन्तीतिशेषः तथाचास्माकं वैदग्ध्यन्नोचितं तवैव तदुचितमित्याशयः ॥२९९॥

दीर्घगवाक्षमुखान्तर्न्निपातिनस्तरणिरश्मयः शोणाः ॥
नृहरिनखा इव दानववक्षः प्रविशन्ति सौधतलम् ॥ ३०० ॥

जारो गृह एव क्वचिन्निह्नुतस्सायंकालपर्य्यन्तं तिष्ठतु बहिरागमनेऽनर्थः एव भविष्यतीति नायिकां प्रति दूती ज्ञापयति दीर्घेति लम्बायमाना ऊर्ध्वजाले पतिताः सूर्य्यकराः रक्ताः प्रातःकालिकाः नरहरिनखा इव हिरण्यकशिपुहृदयं सौधतलं राजसदनाभ्यन्तरं प्रविशन्तीत्यर्थः नखा इत्यनेनाप्रियत्वं सौधेत्यनेन प्रभुत्वं सूच्यते तथाच निद्रादोषेण रात्रौ यदि निर्गतस्तदा तिष्ठत्विति वाक्यार्थः ॥३००॥

दरतरलेक्षणि वक्षसि दरोन्नते तव मुखे च दरहसिते ॥
आस्तां कुसुमं वीरः स्मरोऽधुना चित्रधनुषापि ॥ ३०१ ॥

सखी नवोढां स्तौति दरेति अक्षिणि नयनं ईषत्चञ्चले सति हृदये किञ्चिदुन्नते सति तव वदने ईषद्धसिते सति कुसुमं प्रसूनम् आस्तां मदनधनुस्संपादनाय मास्त्वित्यर्थः ननु तर्हि कथं मदनो धन्वीत्यत आह अधुनापि तव यौवनं विनापि अविभिन्नक्रमः स्मरः मदनः चित्रधनुषा मुखनयनवक्षसि पुष्पघटितेन तदन्यस्थले नायिकाशरीरघटितेन अत एव चित्रेण धनुषा वीरः सर्व्वजेता वर्त्तते इति शेषः तथाच यौवनं विनैव त्वं सर्व्वजेतृमदनास्त्ररूपासि किं वक्तव्यं समग्रयौवने सति सर्व्वनायिकामौलिभूता त्वमेवेति समुदितार्थः ॥३०१॥

दुष्टसखीसहितेयं पूर्णेन्दुमुखी सुखाय नेदानीम् ॥
राकेव विष्टियुक्ता भवतोभिमताय निशि भवतु ॥३०२॥

दूती नायकमाह दुष्टेति इयं मम सखी दुष्टा प्रेमभेदिका या सखी तयासक्तेत्यर्थः दुष्टपदेन वञ्चनीयत्वं सखीपदेन वञ्चनाशक्यत्वं व्यज्यते पक्षे दुष्टा यात्रादि निषिद्धा सखी सर्व्वदा सहचारिणी पूर्णिमाद्यभागस्य नियमतो भद्राघटितत्वादि-

त्याशयः पूर्णचन्द्रवन्मुखं वदनं यस्याः सेत्यर्थः पक्षे पूर्णेन्दुः मुखं प्रारम्भो यस्याः सेत्यर्थः इदानीं दुष्टसखो समक्षं पक्षे दिवा सुखाय सुरतसुखाय पक्षे यात्रादि संपादनाय नेत्यर्थः राकेव पूर्णिमेव किंभूता विष्टियुक्ता भद्रायुक्ता भवतो नायक-स्याभिमताय संभोगाय पक्षे यात्रादिकार्य्याय निशि दुष्टसखीवियोगे पक्षे उत्तर दलेऽभद्रके भवत्वित्यर्थः तथाचादिभागे भद्रायोगात्प्रशस्तापि पूर्णिमा यथा निषिद्धा दुष्टसखीयोगे तथेयमपीतिभावः दिवानिशाशब्दयोः पूर्व्वोत्तरदले वाचकत्वं ज्यौतिषे प्रसिद्धं चतुरेकादशी रात्रावष्टपञ्चदशी दिवेत्यादौ तथा दर्शनात् ॥३०२॥

**दलिते पलालपुंजे वृषभं परिभवति गृहपतौ कुपिते ॥**
**निभृतनिभालितवदनौ हलिकवधूदेवरौ हसतः ॥३०३॥**

काचित्कञ्चिद्वदति दलितेति पलालपुंजे निष्फलकाण्डपुंजे दलिते तत्रत्यसुरते-नेतस्ततश्चलिते सति वृषभं पूर्वमनागतं तदानीमेवागतं पलालभक्षकमित्यर्थः परिभवति अनेनैव पलालं नाशितमिति भ्रान्त्या ताडयति सति गृहपतौ कोपवति सति निभृतं गृहपतिगोपनेन मन्दं निभालितं दृष्टं भालसंकोचनसहितं वा वदनं ययोः तौ हलिकवधूदेवरौ प्रकरणात् हसतः भ्रान्तो गृहपतिरपराधशून्यं वृषं ताडयति अस्मत्कृतपलालपुंजभङ्गं न जानातीत्याशयः यद्वा कयोश्चित्संकेतस्थल-दर्शनोद्यतं दुष्टं तयोर्दूती निवारयति यथा वृषस्य वृथाताडनमन्यदोषेण जातन्त-वापि तथैव भविष्यति न गन्तव्यमित्याशयः पलालोऽस्त्री सनिष्फल इत्यमरः ॥३०३॥

**दीप्यन्तां ये दीप्त्यै घटिता मणयश्च वीरपुरुषाश्च ॥**
**तेजः स्वविनाशाय तु भवति तृणानामिव लघूनाम् ॥३०४॥**

महतामेव प्रतापप्रदर्शनमुचितमित्याह दीप्यन्तामिति दीप्त्यै प्रतापाय ज्योतिः प्रकाशाय वा ये निर्म्मिताः शूरा हीरकादिमणयश्च चकारद्वयं समुच्चये अग्रे तृणा-नामपीतिपाठः तृणानामिवेतिपाठे सादृश्यबोधाय चकारावितिभेदः ते दीप्यन्तां प्रतापप्रकाशकास्तेजःप्रकाशकाश्च स्युरित्यर्थः लघूनां नराणां तु केवलं स्वनाशाय तेज इत्यर्थः तृणानामपीत्यन्वयः तृणानामिवेति सम्यक् लघुना तेजो न कर्त्तव्य-मित्याशयः ॥ ३०४ ॥

॥ इति महोपाध्यायश्रीसच्चलविरचिते दकारव्रज्या समाप्ता ॥

**धूमैरश्रु निपातय दह शिखया दहन मलिनयाङ्गारैः ॥**
**जागरयिष्यति दुर्गतगृहिणी त्वां तदपि शिशिरनिशि ॥३०५॥**

दरिद्रनायिकासक्तं पश्चाद्विमुखमन्योक्त्या दूती वदति धूमैरिति अश्रु वाष्पं धूमैर्निपातय ग्रामान्तरगमनेन रोदनं कारयेत्याशयः हे दहन अनेन तापकारकत्वं व्यज्यते शिखया दह अप्रियवाक्यकथनेन तापय अङ्गारैः मलिनय स्नानीकुर्व्वित्यर्थः अनेन शय्यां विनैव रतं व्यज्यते यद्यप्येनत्सर्व्वं कुरु तदपि दुर्गतगृहिणी वस्त्रादिहीना पत्युस्सामर्थ्याभावात् माघादिरात्रौ त्वामग्निं तत्तुल्यं नायकञ्च जागरयिष्यति प्रज्वालयिष्यत्युन्निद्रं करिष्यति वा तथाच नेयं त्यक्तुं शक्याती यथापूर्व्वं भजेत्याशयः ॥ ३०५ ॥

**धैर्य्यं निधेहि गच्छतु रजनी सोप्यस्तु सुमुखि सोत्कण्ठः ॥**
**प्रविश हृदि तस्य दूरं क्षणधृतमुक्ता स्मरेषुरिव ॥३०६॥**

नायकापराधविज्ञाते क्रुद्धामपि प्रेमातिशयेन नायकसमीपं गन्तुमुद्यतां सखी निवारयन्त्याह धैर्य्यमिति धैर्य्यं धीरतां कुरु अधुना न गन्तव्यमित्याशयः रात्रिरतीता भवतु किमित्यत आह सोपि नायकोप्युत्कण्ठासहितः अस्तु भवतु सुमुखि अनेन तव मुखस्मरणेनैवोत्कण्ठितो भविष्यतीति व्यज्यते अस्य नायकस्य हृदि दूरमत्यर्थं प्रविश केव स्मरेषुरिव मदनशर इवेत्यर्थः किंभूता मदनेषुः क्षणं धृता पश्चान्मुक्ता क्षणधृतेत्यनेन सम्यक्लक्ष्यपरिज्ञानं दृढ़भेदित्वञ्च व्यज्यते तथाचाधुना गमने तव लाघवमेव प्रातः स एव सापराधः समागत्य पादे पतिष्यतीति न गन्तव्यमित्याशयः ॥ ३०६ ॥

**धवलनखलक्ष्मदुर्व्वलमकलितनेपथ्यमलकपिहिताक्ष्याः ॥**
**द्रक्ष्यामि मदवलोकनद्विगुणास्रु वपुः पुरद्वारि ॥३०७॥**

पथिक आशंसनङ्करोति धवलेति धवलं श्वेतं विरहपाण्डुरत्वात् नखलक्ष्म यस्मिन् अनशनात् दुर्व्वलमत एव भूषणशून्यं कुलवधूत्वात् मदीयं यदवलोकनं दर्शनं तेन द्विगुणमस्रु नयनजलं यत्र तद्वपुः पुरद्वारि नगरद्वारे उत्कण्ठाधिक्या-

त्पुरद्वारागमनं कुलस्त्रिया अपि न निषिद्धं अलकेन केशेन बन्धनशून्येन पिहितं गोपितमक्षि यस्यास्तस्या द्रक्ष्यामीति ॥३०७॥

**धर्म्मारम्भेप्यसतां परहिंसैव प्रयोजिका भवति ॥**
**काकानामभिषेकेऽकारणतां वृष्टिरनुभवति ॥३०८॥**

कस्यचिदतिपापिष्ठस्याकस्मादेकादश्युपवासं दृष्ट्वा सोपहासं कश्चिदाह धर्म्मेति असतां पापिनां धर्म्मकार्य्येप्यपिना पापकाले सर्व्वथेति सूच्यते परहिंसा परहननादिक्रियैव प्रयोजिका निमित्तं भवतीत्यर्थः पुण्यमपि लोकदुःखार्थमेव करोतीत्याशयः दृष्टान्तमाह काकानां स्नाने वृष्टिरकारणतामहेततामनुभवति काकस्नाने वृष्टिर्न्न भवतीति प्रसिद्धिः तथाच यथा काकस्नाने सर्व्वोपकारिणी वृष्टिर्न्न भवति तथा दुष्टधर्म्माचरणेऽनर्थ एव भविष्यति सर्व्वेषामिति गम्यते ॥३०८॥

॥ इति ग्रचलविरचिते धकारव्रज्या समाप्ता ॥

**नीरावतरणदन्तुरसैकतसम्भेदमेदुरैःशिशिरे ॥**
**राजन्ति तूलराजिस्थूलपटैरिव तटैःसरितः ॥३०९॥**

शीतभीतां पूर्व्वसंकेतितनदीतटोत्पेक्षाकारिणीं नायिकामिदानीमपि तदेव संकेतस्थलं नान्यदिति नायक आह नीरेति शिशिरे शीते तटैः कूलैः सरितः नद्यः राजन्ति शोभन्ते तटैः किंभूतैः नीरावतरणेन जलपानेन दन्तुरमुच्चावचं यत्सैकतं वालुकामयं स्थलं तस्य संभेदेन सबन्धेन मेदुरैः पुष्टैरित्यर्थः अत्र दन्तुरत्वकथनेनान्यानवलोकनीयत्वं तेन दिवापि संकेतयोग्यत्वं वाच्यनागमनञ्च तेन शीतराहित्यादि व्यज्यते शिशिरेत्यनेनान्यजनराहित्यं तेन शीतसमय एव संकेतयोग्यत्वं व्यज्यते तैः कैरिव तूलानां राजयः पंक्तयः ताभिःस्थूला ये पटास्तैरिवेत्यर्थः श्वेतमृदुलपुष्टतूलिकापटैरिवेति समुदितार्थः तत्र श्वेतत्वकथनेन शुक्लाभिसारयोग्यता मार्दवादिकथनेनास्तरणानपेक्षा तूलमयत्वकथनेन शीतनिवारणसामर्थ्यं च क्रमेण व्यङ्ग्यं तथाच ग्रीष्मेऽन्यजनागमनशङ्का शीते सापि नास्ति दिवा रात्रौ वा तदेवसंकेतस्थलमुचितं नान्यदित्याशयः यद्यपि सरित इति बहुवचनं विरुद्धमेकनदीतीरस्य संकेतितत्वात् तथापि गोपनार्थमन्येषां तथानिर्द्देशात वस्तुतस्तु शीतभीत्या नायक-

समीपं न गच्छामीति वादिनीं नायिकां सामान्यनदीदृष्टान्तेन अचेतनाः सरितोपि काल्पनिकतूलिकां धृत्वा प्रियमभिसरन्ति त्वन्तु वास्तविकतूलिकायुक्तापि न गच्छसीति दूती वदति इतिरसिकसरणिः ॥३०९॥

निजकायच्छायायां विश्रम्य निदाघमपनेतुम् ॥
वत विविधास्तनुभङ्गीर्मुग्धकुरङ्गीयमाचरति ॥३१०॥

नायकं विनाप्युन्मादवशादेकान्तं मत्वा विविधसुरतासनमाचरन्तीं काञ्चिद्दृष्ट्वा आयत्नेसाध्येयमिति वक्तुं कश्चिन्नायको दूतीमन्योक्त्याह निजेति स्वशरीरच्छायायां विश्रामं कृत्वा ग्रीष्मदुःखं दूरीकर्त्तुं वत खेदे नानाप्रकारिकाः शरीरचेष्टाः मुग्धा मूढ़ा कुरङ्गीयं प्रत्यक्षा करोतीत्यर्थः तथाच यथा स्याःकुरङ्ग्या न तापशान्तिः तथेयमपि नायिका रतसुखं न लभते अतः अनया योजयेतिभावः ॥३१०॥

न हसन्ति जठर इति यद्वल्लववनिता नमन्ति नन्दमपि ॥
सखि स यशोदातनयो नित्यं कन्दलितकन्दर्प्पः ॥३११॥

स्वकार्य्यं साधनीयमवश्यं परन्तु समुचितेन कारणेन साधने चातुर्य्यं विरुद्धे-नाचातुर्य्यमिति भेद इति काचित् काञ्चिदाह नेति सखि यशोदातनयः कृष्णः स प्रसिद्धः सुन्दरः नित्यं निश्चितं कन्दलितः बद्धमूलः मदनो यस्यैतादृशो जात इतिशेषः यद्यस्मात् जठर इति वृद्धतर इति स्त्रियोपि न हसन्ति अपितु प्रणमन्ति तथाचाज्ञापि गोपवध्व एवं कुर्व्वन्ति चतुराणां का कथेतिभावः यद्वा पतिसङ्गप्रनिरोधकारिश्व-श्रूविद्वेषिणीं नायिकां श्वश्रूसमंजसेनैव कार्य्यं नान्यथेति सख्याह ॥३११॥

नीता स्वभावमर्प्पितवपुरपि वाम्यं न कामिनी त्यजति ॥
हरदेहार्धग्रथिता निदर्शनम्पार्व्वती तत्र ॥३१२॥

कथमपि कामिनीविश्वासो न कर्त्तव्य इति कश्चिदाह नीतेति आत्मभावं धनादिदानेनात्मीयत्वं दृष्टान्ते आत्मैक्यं नीता प्रापिता अर्पितवपुरपि दत्तशरीरा-पि शरीरमपि दत्तं यदि तथापि वाम्यं कौटिल्यं वामभागं वा कामिनी स्त्री न त्यज तीत्यर्थः शिवशरीरार्द्धग्रथितागौर्य्यस्मिन्नर्थे दृष्टान्त इत्यर्थः ॥३१२॥

नागरभोगानुमितस्ववधूसौन्दर्य्यगर्व्वतरलस्य ॥
निपतति न पदम्भूमौ ज्ञातिपुरस्तन्तुवायस्य ॥३१३॥

काञ्चित्पामरवधूं सुरूपां दृष्ट्वा सकाममपि तत्प्रत्याख्यानभीतं महाधनं नायकं तत्रत्या कापि दूत्याह नागरेति नगरे भवः नागरो विदग्धः तत्कृतभोगेन रनेनानुमितं स्ववधूसौन्दर्य्यं तेन योभिमानस्तेन चञ्चलस्येत्यर्थः इयमतिसुन्दरी कथमन्यथा नागरेण सुन्दरीरुपेक्ष्यैयमभुक्तेत्यनुमानप्रकारः तन्तुवायस्य कुविन्दस्य ज्ञात्यग्रे भूमौ पदं न निपततीति ज्ञातिपदेनावश्यगोपनीयत्वेपि व्यक्तीकरणेन जातिस्वभाव इति कथ्यते तेनोत्कृष्टपरपुरुषाऽभुक्तां स्वस्त्रियं दृष्ट्वा नेर्ष्या जाता यदि सकामोसि तदा मया नीयते सेत्याशयः तन्तुवायः कुविन्दः स्यादित्यमरः ॥३१३॥

निपतति चरणे कोणं प्रविश्य निशि यन्निरीक्षते कस्तत् ॥
सखि स खलु लोकपुरतः खलः स्वगरिमाणमुद्गिरति ॥३१४॥

नायिका सखीमाह निपततीति कोणं प्रविश्य मम पादे पतति यत् तत्पतनं कः पश्यति न कोपीत्यर्थः हेसखि स खलः जनाग्रे स्वमहिमानं मत्परोक्षे लग्नेयमित्याद्युद्गिरति अभुक्तवान्तं करोतीत्यर्थः त्वत्कथनेनाप्यस्य दुष्टस्य संगतिर्न्न कर्त्तव्येत्याशयः ॥ ३१४ ॥

न विमोचयितुं शक्यः क्षमां महान्मोचितो यदि कथंचित् ॥
मन्दरगिरिरिव गरलं निवर्त्तते ननु समुत्थाप्य ॥३१५॥

महतां कोपो न भवति यदि कदाचित्स्यात्तदाऽनर्थ एव स्यादिति कश्चित्कञ्चिदाह नेति क्षमां क्षान्ति पक्षे पृथिवीं विमोचयितुं कोपं कारयितुं पृथिवीत उत्थापयितुं महान् श्रेष्ठोऽतिगुरुतरो न शक्यः यदि कदाचिन्मोचितः कारितकोपः उत्थापितो वा कथञ्चित्कष्टादपि स्यात्तदाऽनर्थं दुरर्थमुत्थाप्योत्पाद्य निवृत्तो भवति नान्यथेत्याशयः मन्दरः पर्व्वतः पृथिवीत उत्थापितः समुद्रमथने विषमुत्पाद्य निवृत्तो जातस्तथेत्याशयः ॥३१५॥

नियतैः पदैर्न्निषेव्यं स्खलितेनर्थावहं समाश्रयति ॥
संभवदन्यगतिः कस्संक्रमकाष्ठं दुरीशञ्च ॥३१६॥

शाकेनापि निर्व्वाहे दुष्टप्रभुसेवनं न कर्त्तव्यमिति कश्चित्कञ्चिदुपदिशति नियतैरिति पदैश्चरणैः व्यवसायैश्च नियतैः स्थिरैः पक्षे नियतदेशकालिकैः निषेव्यं गमनयोग्यं सेव्यञ्च स्खलिते स्खलितपदन्यासे अनभिप्रेते चानर्थावहं पतनमरणकारणं गन्तुं दारिद्र्यभङ्गाय वा कः समाश्रयति सेवते न कोपीत्यर्थः संभवन्ती अन्या गतिः गमनं शरणं वा यस्य स इत्यर्थः संक्रमकाष्ठं महाचत्वपर्व्वतादिद्वयान्तरस्थं नद्यादिसंतरणार्थं कूलद्वयगामि काष्ठं यद्दीयते तत् संक्रमकाष्ठमित्युच्यते दुरीशं दुष्टप्रभुं चेत्यर्थः पदं व्यवसाये परित्राणे इतिशाश्वतः ॥३१६॥

निजपदगतिगुणरञ्जितजगतां करिणां च सत्कवीनाञ्च ॥
वहतामपि महिमानं शोभायै सज्जना एव ॥३१७॥

सज्जनं विना सर्व्वे गुणा सविकला इति कश्चित् कविराह निजेति सत्कवीनां गजानाञ्च शोभायै गुणपरिज्ञानाय सज्जनाः पण्डिताः एव भवन्ति नान्ये इत्यर्थः महिमानं विद्याधिक्यं परिमाणाधिक्यं वा वहतामपि । स्वनिर्म्मितप्रातिपदिकादिगत्या समीचीनस्थलस्थित्या ये गुणा व्यञ्जकत्वादयस्तैः रञ्जितं जगद्यैः तेषामित्यर्थः पक्षे स्वचरणगमनगुणेन जगद्रञ्जकानामित्यर्थः तथाच सज्जनं विना महाकविगजानामपि शोभाविरहे का गणनान्येषामित्याशयः ॥३१७॥

नोत्तपते न स्नेहं हरति न निर्व्वाति न मलिनो भवति ॥
तस्योज्ज्वलो निशि निशि प्रेमा रत्नप्रदीप इव ॥३१८॥

काचिन्नायिका तादृशमेव प्रेम कर्त्तव्यं अन्यथा न क्रियते इति वक्तुं कस्यचित्प्रेम स्तौति नोत्तपते इति तस्य नायकविशेषस्य प्रेमा रत्याख्यस्थायिभावविशेषः रात्रौ रात्रौ रत्नप्रदीपः मणिप्रदीप इव निशि निशीत्यनेन वीप्सया सार्व्वदिकत्वं रात्रिमात्रप्रकाश्यत्वं दिवागुप्तत्वंच व्यज्यते पुंस्त्वनिर्द्देशेन प्रेम्ण एव नायकत्वकथनेन नायिकायाः प्रेमसंबन्धादेव नायकोपभोगसौलभ्यं सार्व्वदिकमिति व्यज्यते

रत्नप्रदीपत्वकथनेन निधिप्राप्तिसूचकेन स्त्रीपुंसयोर्द्रव्यान्तरानपेक्षत्वं प्रेम्ण उपाधिशून्यत्वं च व्यज्यते उभयं विशेषयति नोत्तप्तं अनिगुप्तत्वादुभयकुलयोरकोपक इत्यर्थः पक्षे अदाहकः शीतलत्वात् स्नेहं प्रेमकारणं प्रथमाभिलाषं न नाशयतीत्यर्थः तदुक्तं स्नेहस्य तत्फलमसौ प्रणयस्य सार इति प्रभाकारैः तथाच प्रेमारम्भे यथाभिलाषा जातायापि तथैव वर्त्तते स्थास्यति चेत्याशयः हरति त्यजतीत्यर्थे वा पक्षे तैलं न नाशयतीत्यर्थः अभावात् न निर्व्वाति न विरतो भवतीत्यर्थः पक्षे न निर्व्वाणो भवतीत्यर्थः मलिनो मानाभङ्गकारको न वसति नोद्घाटयतीत्यर्थः पक्षे मलिनं कज्जलं न निस्सारयतीत्यर्थः रत्नमयत्वात् नेति मलिमत्वमिति वा पाठः उज्वलः कौटिल्यरहितः पक्षे महाप्रकाशकारीत्यर्थः प्रेमा वा प्रियता हार्द्दं प्रेमस्नेह इति कोषे पर्य्यायत्वेप्येतत्कार्य्यकारणतया गणनं पूर्व्वोक्तभेदमंगीकृत्य दिवानिशं नायिकासमीपस्थं सलज्जा नायिका कथयति सान्निध्येनैव प्रेमरक्षणं न भवति किन्तु यथा योर्हृदयत्योस्तथा कुर्व्विति भावः ॥३१८॥

**निहितान्निहितानुज्झति नियतं मम पार्थिवानपि प्रेम ॥**
**भ्रामं भ्रामं तिष्ठति तत्रैव कुलालचक्रमिव ॥३१९॥**

चपलं नायकं दूती दृष्टान्तेन वदति यद्वा निर्द्धने किमित्यासक्तासीतिवादिनीं कुलटा वदति नहितानिति मम प्रेम कर्तृ निहितान निहितान् युष्माभिः प्रापितान् पार्थिवान् धनदानसमर्थभूपालान् पक्षे पृथिवीकारणकान् उज्झति त्यजति कुलालाय ददाति वा भ्रामंभ्रामं तत्रैव दरिद्रनायके एव चक्राधारकाष्ठे एव चेत्यर्थः कुम्भकारचक्रं यथा घटादीन् त्यजति आधारकाष्ठं न त्यजति तथा मम प्रेम सुरतकुशलं दरिद्रमपि न त्यजतीत्यर्थः ॥३१९॥

**निर्भरमपि संभुक्तं तृष्ण्या प्रातः पिबन्न तृप्यामि ॥**
**जघनमनंशुकमस्याश्चकोर इव शिशिरकरबिम्बम् ॥३२०॥**

गन्तव्यमिदानीमितिवादिनीं नायिकासखीं नायक आह निर्भरमिति अस्या वस्त्रशून्यं जघनं दृष्ट्वा प्रातः पिबन् पश्यन् न तृप्तो भवामीत्यर्थः निर्भरं गाढं कृतोपभोगमपि चकोरः चन्द्रबिम्बमिव प्रातरित्यर्थः पुनरागमिष्यामीत्याशयः ॥ ३२० ॥

निविडघटितोरुयुगलां श्वासोत्तुङ्ग स्तनार्प्पितव्यजनाम् ॥
तां स्निग्धकुपितदृष्टिं स्मरामि रतिनिःसहां सुतनुम् ॥३२१॥

नायकः सखायं वदति निविडेति रतान्ते वस्त्रग्रहणासामर्थ्यान्निविडं दृढं घटितं संयोजितमूरुयुगलं जघनगोपनार्थं यया तामित्यर्थः श्वासेन रतिश्रमेणोत्तुङ्गौ यौ स्तनौ तत्रार्प्पितं पूर्व्वगृहीतं व्यजनं यया तां स्निग्धा रतिपूर्त्या प्रीता श्रमाधिक्यात् कुपिता दृष्टिः यस्यास्तां स्मरामि रत्यानिस्सहां वस्त्रग्रहणव्यापारशून्यां सुन्दरीमित्यर्थः ॥३२१॥

निर्गुण इति मृत इति च द्वावेकार्थाभिधायिनौ विद्धि ॥
पश्य धनुर्गुणशून्यं निर्ज्जीवं यदिह शंसन्ति ॥३२२॥

गुणसंपादनमावश्यकमिति कश्चिदाह निर्गुण इति विद्यादिगुणशून्यः रज्जूशून्यश्च मृत इति प्राणशून्य इति च द्वावपि पर्य्यायभूतौ जानीहि पश्य धनुः ज्याशून्यं निर्जीवं प्राणशून्यं रज्जूशून्यं च यद्यस्मात् इह लोके शंसन्ति वदन्तीत्यर्थः मौर्व्वी ज्या शिञ्जिनी गुण इत्यमरः जीवा ज्या शिञ्जिनीत्यपि कोषः ॥३२२॥

निजसूक्ष्मसूत्रलम्बां विलोचनं तरुण ते क्षणं हरतु ॥
अयमुद्गृहीतवडिशः कर्क्कट इव मर्क्कटः पुरतः ॥३२३॥

सुरतदैर्घ्यसंपादनाय नायकचित्तमन्यासक्तं कर्त्तुं नायिका सुरतमध्ये नायकमाह निजेति निजं स्वोत्पन्नं यत्सूत्रं तत्र लम्बी मर्क्कटः लूता हेतरुण तव लोचनं हरतु तदेकाक्षो भवेत्याशयः स्वयमुद्गृहीतं वडिशं मत्स्यभेदनं येन एतादृशो कर्क्कटः कुलीर इवेत्यर्थः तरुणपदेन शीघ्ररतसमापकत्वं व्यज्यते वृक्षे तु मर्क्कटं ध्यायेद्रतिदैर्घ्याय कामुक इतिकामशास्त्रात् ॥३२३॥

नागरगीतिर्विरवासौ ग्रामस्थित्यापि भूषिता सुतनुः ॥
कस्तूरी न मृगोदरवासवशाद्विस्रतामेति ॥३२४॥

नायिकाया ग्रामस्थत्वे नानासक्तं नायकं काचित्प्रोत्साहयति हेनागर स्वतनुः

स्वभावात्सुन्दरी असौ गीतिर्गानमिव ग्रामास्थित्योपलक्षिना भूषितालङ्कृता ननु सदोषेत्याशयः ग्रामस्थितेरोलतिकत्वेनादोषत्वादौलतिकस्य नदोषाश्रायकत्वमनैकार्थान्तरन्यासमाह हरिणोदरवासेन कस्तूरी दौर्गन्ध्यं नैतीति यथा तथाच दोष स्वभावसुन्दरीमिमां त्वमेव शिक्षयोदासीना मा भवेत्याशयः किर्त्तं स्यादामभ्र यदित्यमरः उत्तमस्वभावस्य दुष्टसंगतिदोषो न भवतीति कश्चिदाहेति वा ॥३२४॥

नखलिखितस्तनिकुरवकमयपृष्ठे भूमिलुलितविरसाङ्गि ॥
हृदयविदारणनिःसृतकुसुमास्त्रशरेव हरसि मनः ॥३२५॥

नायिकां सख्याह नखेति नखेन लिखितौ स्तनौ यस्याः कुरुवकमदमयपृष्ठे क्वान्दोलन पृष्ठभागे यस्या भूमौ वनभूमौ लुलितं पतितं विरसं रतश्रान्तमङ्गं यस्याः तत्सम्बोधनानि हृदयविदारणेन नखक्षतेन निःसृतः कुसुमस्तस्य मदनस्य शरो यस्यास्तत्सम्बोधने मनः हरसि वृथासुरतगोपनमित्याशयः नखक्षतस्य शरचिह्नतुल्यता कुरुवकदाम्नः शरतुल्यता ॥३२५॥

नीता लघिमानमियं तस्यां गरिमाणमधिकमर्पयसि ॥
भार इव विषमभार्यः सुदुःसहो भवति गृहवासः ॥३२६॥

स्वस्त्रीषु समस्नेहत्वमेव सुखदं वैषम्ये दुःखमेवेत्याह इयम् एका लघुतां नीता द्वितीयायां गौरवमधिकं ददासि अतस्तव गृहवासः सुदुर्वहो भवति गृहे स्थातुमशक्तो भविष्यसीत्यर्थः विषमे परस्परविरुद्धे भार्य्ये यत्र स इत्यर्थः भारःवहिङ्गिकादिभारः यथा विषमगुरुताकः दुर्वहस्तथेत्यर्थः ॥३२६॥

न च दूती नच याच्ञा नचाञ्जलिर्न्न च कटाक्षविक्षेपः ॥
सौभाग्यमानिनां सखि कचग्रहः प्रथममभियोगः ॥३२७॥

कस्याश्चिद्रतं कयाचिदेकस्माद्दृष्टं तां प्रति नायिकाह न चेति दूती न प्रेषिता याचनमध्यक्षे न कृतं मया कटाक्षविक्षेपोऽपि न कृतः तथा च बलात्कारेण केशग्रहणं कृतमिति नायिकावाक्यं श्रुत्वा सख्याह हे सखि अहं भाग्यवानित्यभिमानवतां केशग्रहः प्रथमं यथास्यात्तथाभियोगः नियोगः केशग्रहमात्रेण कोलाहलो न कर्त्तव्य-

इत्याशयः अथच सौभाग्यमानिनां स्वाधीनेयमित्यभिमानिनां कचग्रहः सुरतं प्रथमं सूचनं विनाभियोगः आज्ञा भवतीत्यर्थः तथाच प्रथममेवं न केनापि कर्त्तुं शक्यते त्वन्तु तदधीनां मां प्रति वृथा गोपनं करोषि मया कुत्रापि न वक्तव्य-मित्याशयः ॥ ३२७ ॥

निशि विषमकुसुमविशिखप्रेरितयोर्म्मौनलब्धरतिरसयोः ॥
मानस्तथैव विलसति दम्पत्योरशिथिलग्रन्थिः ॥३२८॥

मदनो दुर्न्निवारो मानमवधूय प्रवर्त्तयतीति कश्चिदाह निशीति निशि रात्रौ अनेनैकत्र सुप्तत्वं व्यज्यते मदनशरप्रेरितयोः मौनेन मानकारितेन प्राप्तः सुरतास्वादो याभ्यां तयोः मानपूर्व्ववद्विलसति अशिथिलग्रथिः दृढग्रन्थिरित्यर्थः मानेपि मदनेन योजितत्वात् मानादधिकःकन्दर्प्प इत्याशयः ॥३२८॥

निजगात्रनिर्व्विशेषस्थापितमपि सारमादाय ॥
निर्म्मोकश्च भुजङ्गी मुञ्चति पुरुषं च वारवधूः ॥३२९॥

वेश्याविश्वासो न कर्त्तव्य इति कश्चिदाह निजेति निजशरीरभेदशून्यं स्थापित मप्यखिलं सारं धनं शोणितादिभागश्च गृहीत्वा निर्म्मोकं कञ्चुकं सर्प्पी त्यजति नायकं वेश्येत्यर्थः भुजङ्गीव दुष्टा वेश्येत्याशयः ॥३२९॥

नृत्यश्रमघर्म्मार्द्रं मुञ्चसि कृच्छ्रेण कंचुकं सुतनु ॥
मकरन्दोदकजुष्टं मदनधनुर्व्वल्लिरिव चोलम् ॥३३०॥

तवेदानीं सुरतं विना श्रमो न शमिष्यतीति सपरिहासं सखी नर्त्तकीमाह नृत्येति नृत्यजातपरिश्रमजातस्वेदार्द्रं त्यजसि कष्टेन कञ्चुकं हे सुतनु पुष्परसेन जुष्टं युतं वस्त्रं धनुर्लता मदनस्य यथा तथेत्यर्थः तथा चानीतनायकेन सुरतं कुर्व्वित्यर्थः ॥ ३३० ॥

नाहं वदामि सुतनु त्वमशीला वा प्रचण्डचरिता वा ॥
प्रेमस्वभावसुलभं भयमुदयति मम तु हृदयस्य ॥३३१॥

कस्याश्चित् शीलनाशं दृष्ट्वा सख्याह नाहमिति त्वमशीला असती प्रचण्ड-चरिता कोपना वेति नैकमपि वदामीत्यर्थः मम हृदयस्य भयं लोकोः किंवदन्तीति भयमुदयति प्रेम्नः स्वभावेन सुलभं प्रेमस्वभावादेव मम भयं तव दोषो नास्ति तथापि वदामीत्यर्थः यदि चिच्छिज्जानासि तदा निवृत्ता भव लोके कर्णाकर्णिकता जातेत्याशयः ॥ ३३१ ॥

**न निरुपितोसि सख्या नियतं नेत्रत्रिभागमात्रेण ॥**
**हारयति येन कुसुमं विमुखे त्वयि कुण्ठ इव देवे ॥३३२॥**

कदाचिन्नायिकया कटाक्षितं नायकं तया संगमयितुं सखी दूती वदति नेति नेत्रविभागमात्रेणातितीक्ष्णकटाक्षमात्रेण नियतं निश्चितं न निरुपितोसि नाव-लोकितोसि किन्तु मम सख्या हृदयेनापि निरुपितोसीत्यर्थः त्वदधीना जाते-त्याशयः प्रमाणमाह येन कारणेन त्वयि विमुखे परावृत्य गते सति कुसुमं पुष्पं हारयति दापयति भवद्दर्शनार्थं तद्दिनावधि ब्राह्मणादिद्वारा पुष्पं ददातीत्याशयः कस्मिन्निव देवे शिवे कुण्ठे कुपिते इवेत्यर्थः तथाच देवकोपमिव तव वैमुख्यं मत्वा तामनुगृहाणेत्याशयः देवे इति पाठे भाग्ये इत्यर्थः ॥ ३३२ ॥

**नखदशनमुष्टिपातैरदयैरालिङ्गनैश्च सुभगस्य ॥**
**अपराधं शंसन्त्यः शान्तिं रचयन्ति रागिण्यः ॥३३३॥**

नायकेन नायिकायां सुरतावसरे यद्यत्कृतं सुरततृप्तनायिकया प्रेमाधि-क्येन तत्सर्व्वं नायके कर्त्तुं बहिः कोपप्रकाशमात्रं न तु कोप इत्यनयोरेव दाम्पत्यो-राश्लाघनीयमिति काचित्काञ्चिद्वदति नखेति सुभगस्य धन्यस्यास्य नतु सर्व्व-स्यापराधं दृढनखाघातादिरूपं कथयन्त्यः अनेन येन यथा ताडनादि क्रियते तस्य तथैव कर्त्तव्यमित्यनौचित्यपरिहारो व्यज्यते शान्ति कपटकोपशमनं शास्तिमिति पाठे शासनमित्यर्थः चरयन्ति कुर्व्वन्ति रागिण्यः यथाभिलाषितरत-तृप्त्यात्यन्तानुरागवत्येत्यर्थः रागिण्य एव एवं कुर्व्वन्ति नतु भवादृश्य इत्याशयः कैः नखदन्तमुष्टिताडनैरित्यर्थः दयाशून्यैरालिङ्गनैश्च दयाशून्यैरित्यत्रापि योज्यं तथाच कोपेन नायकताडनं न किन्तु नायकेन यथा यथा सद्यः सुखं दत्तं तथाहमपि

नायकं सुखयामीति बुध्या नायिका तथा करोति नायकोपि नायिकावत्सुखिता-भवतीति अन्यं प्रेमेत्याशयः ॥३३३॥

न गुणे न लक्षणे वा वयसि च रूपे च नादरो विहितः ॥
त्वयि सौरभेपि घण्टा कपिला पुत्रीति बद्धेयम् ॥ ३३४ ॥

अतिसंमानितां भूषणादिपूरितां निर्गुणां धनिककन्यकां गर्व्वितामन्योक्त्या काचिदाह नेति गुणे धनबाहुल्ये चातुर्य्ये च लक्षणे गोः प्रशस्तलक्षणे सामुद्रोक्तस्त्रीलक्षणे चेत्यर्थः रूपे शुक्लादौ गौरत्वादौ वादरः समादरोस्माभिन्न कृत इत्यर्थः ते न सन्त्येवेत्याशयः सौरभेपि सुरभेरपत्यरूपे त्वयि घण्टेयं पक्षे भूषणसम्मानादिरूपा या निबद्धा सा त्वं कपिलायास्सर्व्वगुणशालिन्याः पुत्रीभवस्यतो हेतोरित्यर्थः मातुर्गुणेन तवैतत्सर्व्वं निर्गुणा त्वं वृथा गर्व्वमावहसीत्याशयः ॥ ३३४ ॥

निष्कारणापराधं निष्कारणकलहरोषपरितोषम् ॥
सामान्यमरणजीवनसुखदुःखं जयति दाम्पत्यम् ॥३३५॥

दाम्पत्यस्वरूपवर्णनं करोति निष्कारणेति· अकारणमपराधो यत्र कलहक्रोधपरितोषा अकारणा यत्र समानानि मरणजीवनसुखदुःखानि अभिप्रेतानि यत्र तदेव दांपत्यं जयतीति भावः ॥ ३३५ ॥

न प्राप्यसे कराभ्यां हृदयान्नापैषि वितनुषे बाधाम् ॥
त्वं मम भग्नावस्थित कुसुमायुध विशिख कलिकेव ॥३३६॥

नायको मानिनीमाह न प्राप्यस इति त्वं मम बाधां मदनपीडां पक्षे शरीरपीडां वितनोषि कराभ्यामालिङ्गितुमुत्सुकाभ्यां हस्ताभ्यां न लभ्यसे पक्षे वामदक्षिणकराभ्यां निष्काशयितुमशक्येत्यर्थः हृदयान्न गच्छसि त्वां विस्मर्त्तुं न शक्नोमीत्यर्थः पक्षे तत्रैव तिष्ठतीत्यर्थः केव भग्ना त्रुटिता मदनशरस्य कलिका फलरूपं चेत्यर्थः भग्नेत्यादिना प्रेमभङ्गसूचनेन पुनराग्रहस्तु मया न क्रियते यदि कदापि प्रसादस्तदाऽधुनैवास्त्विति व्यज्यते ॥ ३३६ ॥

नाथेति परुषमुचितं प्रियेति दासेत्यनुग्रहो यत्र ॥
तद्दाम्पत्यमतोन्यन्नारी रज्जुः पशुः पुरुषः ॥ ३३७ ॥

परस्परप्रेमाधिक्ये सत्येव दाम्पत्यशोभान्यथा पशुवत्सुरतमात्रप्रयोजनकं दाम्पत्यमिति कश्चित्सखायमाह नाथेतीति यत्र दम्पतिभावे नाथेति प्रभो इति प्रेयसीकृतं सम्बोधनं पदं परुषं कटु सेव्यसेवकभावसूचकत्वात् प्रियेत्युचितं यथार्थं दासेत्यनुग्रहः अहमेव प्रभुरिति सूचकत्वात् तत् दाम्पत्यं दाम्पत्यपदमुख्यार्थः अतोस्मादन्यदन्यथेत्यर्थः नारी स्त्री रज्जुः दामेत्यर्थः पुरुषः पशुः यथात्यन्तचपलपशोः सञ्चारनिवृत्यर्थं रज्वा बन्धनम् एवमेव नानादेशभ्रमणनिवृत्यर्थं पादबन्धनवद्विवाह इत्याशयः यद्यपि दासेत्यनुचितं तथापि सुरततृप्तायस्योक्तौ न दोष इति रसिकसंप्रदायः ॥ ३३७ ॥

निहितायामस्यामपि सैवैका मनसि मे स्फुरति ॥
रेखान्तरोपधानात्पत्राक्षरराजिरिव दयिता ॥३३८॥

पूर्व्वनायिकादूतीं नायको वदति निहितायामिति मनस्यस्यां त्वदानीतद्वितीयनायिकायां निहितायां स्थापितायामपि अपिनाऽन्यदासुतरां परिस्फुरतीत्यर्थः सैव पूर्व्वमानीतैव एका मुख्या एकसंख्यका वा मम परिस्फुरति ज्ञाता भवतीत्यर्थः ननु नायिकाद्वयमेकत्वेन कथं ज्ञायते इत्यत आह रेखान्तरोपधानात्-पङ्क्तिसरलतासम्पादकलेखकदत्तप्रथमरेखासम्बन्धात् पत्रस्थिताक्षरपङ्क्तिर्यथैका परिस्फुरति तथा दयिता प्रेयसी प्रथमैवेत्यर्थः अयम्भावः सर्व्वदाभावनावेशादेका सर्व्वत्र स्फुरति सर्व्वविधसुरतसौख्यं प्रथमायामेव द्वितीयायामेकविधमेव रतसौख्यं पशुवदतस्तामेवानयनद्वितीयामिति ॥३३८॥

निधिनिस्थानस्योपरि चिह्नार्थमिव लता निहिता ॥
लोभयति तव तनूदरि जघनतटादुपरि रोमाली ॥३३९॥

नायको नायिकामाह निधिनीति हे कृशोदरि तव जघनतटादुपरि स्थिता रोमावली मां लोभयुक्तं करोतीत्यर्थः तटोपरीत्यनेन लतारोपणयोग्यत्वं व्यज्यते

निधेः पद्मशङ्खादेर्द्धारणस्थानस्योपरि चिह्नार्थमभिज्ञानार्थं लता वल्ली रोपिता यथा तथेत्यर्थः ॥३३९॥

**निहितार्द्धलोचनायास्त्वं तस्या हरसि हृदयपर्य्यन्तम् ॥**
**न सुभग समुचितमीदृशमंगुलिदाने भुजङ्गिलसि ॥३४०॥**

यया मम सख्या निमन्त्रणादौ अकस्मात् कटाक्षितोऽसि सा दूतीं विनापि स्वसौभाग्येनैव वशीभूता कुर्वेति वक्तुं नायिकादूती नायकमाह निहितार्द्धेति निहितार्द्धं कोणरूपं लोचनं यया तस्याः त्वं हृदयपर्य्यन्तं वाह्यशरीरस्य का कथेत्याशयः स्वाधीनं करोषीत्यर्थः सुभग सर्व्वनायकाधिक ईदृशमल्पं दातुमुद्यतस्य सर्व्वस्वरहणमनुचितमित्यर्थः एतदेव दृष्टान्तोपलक्षणेन द्रढयति अङ्गुलिदाने अङ्गुलिमात्रं दातुमुद्यतस्य भुजं बाहुं गिलसि धारयसीत्यर्थः अङ्गुलिग्रहणं प्रकोष्ठे हस्तदानमित्युपलक्षणार्थम् तथाच सा त्वदेकशरणा जाता त्वया चलनीयमितिवाक्यार्थः यद्वा स्वरूपेनायकं दृष्ट्वा सकामकापि त्वद्वशीभूताहमित्यन्यदृष्टान्तेनाह तथाच लोचनार्द्धसम्बन्धेन सा तवाधीना तथाहमपि त्वदधीनेति समुचितमेवेत्याशयः ॥३४०॥

**नीत्वागारं रजनी जागरमेकञ्च सादरं दत्वा ॥**
**अचिरेण कैर्न्न तरुणि दुर्गापत्रीव मुक्तासि ॥३४१॥**

गुणवन्तं नायकं कटाक्षयन्तीं कुलटां नायको वदति नीत्वेति कैर्न्न युभिः अपितु सर्व्वैरित्यर्थः अचिरेण शीघ्रमेव त्यक्तासीत्यर्थः दुर्गापत्रीव देवीपक्षे पत्रिकाप्रवेशरात्रौ या पत्रिका गृहे स्थाप्यते तद्वदित्यर्थः गृहं नीत्वा एकरात्रिजागरं सादरं दत्वा यथा परित्यज्यते तथेत्यर्थः तथा चातिचपलत्वादुपभोगेपि सदोषत्वान्नाहं तव योग्य इत्याशयः ॥ ३४१

**नक्षत्रे ग्नाबिन्दावुदरे कनके मणौ दृशि समुद्रे ॥**
**यत्खलु तेजस्तदखिलमोजो जयत्यब्जमित्रस्य ॥ ३४२ ॥**

समीचीने नैव मैत्री समीचीना नत्वसमीचीनेनेत्याह नक्षत्रेति अब्जमित्रस्य

कमलबन्धोः सूर्य्यस्य तेजः कर्तृ अब्जपदेन लक्ष्मीब्रह्माश्रयत्वविष्णुनाभीरूपत्व-कथनेन पद्मस्य महत्वं द्योत्यं यत् किल निश्चयेन तेजः प्रसिद्धं तत् अखिलमेव सर्व्वमेव तेजः तेजः पदस्य द्विधा सम्बन्धः जयति न्यूनं करोतीत्यर्थः तत् कतरत् तारकायां वह्नौ चन्द्रे उदरे जठराग्निरूपे हेम्नि हीरकादौ नेत्रगोलके अर्णवे वा-डवाग्निरूपं तथाच सर्व्वोत्कृष्टकलमित्रत्वादेव सूर्य्यस्य सर्व्वाधिक्यमित्याशयः जितमनूरुमित्रेणेति पाठे पङ्गु सहकारेणापि यथा सूर्य्यः सर्व्वं तेजो जयत्येवमेव सहकारिणं विनापि समर्थः सर्व्वान् जयतीत्यर्थः अर्थभेदेन जायतेरकर्म्मकत्व-सकर्म्मकत्वे इति ॥ ३४२ ॥

न सवर्णो न च रूपं न संस्क्रिया कापि न प्रकृतिः ॥
बाला त्वद्विरहा यदि जाताऽपभ्रंशभाषेव ॥ ३४३ ॥

नायिकाविरहे सखी नायकं प्रति वदति नेति स्ववर्णतुल्यः वर्णः गौरादि बालाया नेत्यर्थः विरहपाण्डुत्वात् पक्षे सवर्णः सवर्णसंज्ञको नेत्यर्थः भाषायामप्रवृत्तेः रूपं प्रत्यङ्गसौन्दर्य्यं न चेत्यर्थः पक्षे रूपं स्वरूपं व्याकरणसिद्धं न चेत्यर्थः संस्क्रिया कापि केशाङ्गादिसंस्कारः पक्षे साधनिका नेत्यर्थः सा सोत्सवा प्रकृतिः स्वभावो नेत्यर्थः विरहव्याकुलत्वात् पक्षे प्रकृतिः स्वादिनिमित्तं नेत्यर्थः बाला षोडशवार्षिकी त्वदिहविरह एव दुःखदत्वादापत् तस्यां सत्यामपभ्रंशभाषा तत्तद्देशीयपामर-भाषातुल्या जाता अपभ्रंशपदेन संस्कृतानुकारोऽपि नेत्यवगम्यते तेनात्यन्तवैचित्र्यं नायिकाया गम्यते तथाच शीघ्रमनुग्राह्येति भावः ॥३४३ ॥

न विभूषणे तवास्था वपुर्गुणेनैव जयसि सखि यूनः ॥
अवधीरितास्त्रशस्त्रा कुसुमेषोर्म्मल्लविद्येव ॥३४४॥

सखी नायिकामाह नेति अवधीरितं त्यक्तं प्रक्षेप्यं शरादिशक्त्यादि यया तादृशी या मदनस्य मल्लविद्या व्यायामादिजनिता विद्या सा यथा यूनः तरुणान् शरीरगुणेन बलवत्वेन जयति हे सखि तथा त्वमपि यूनः जयसीत्यर्थः विभूषण-धारणे आस्था आग्रहस्तव नेत्यर्थः तथाचोन्मत्ता सर्व्वजारसुखं ददासीति परि-हासो वाक्यार्थः ॥३४४॥

नेत्राकृष्टो भ्रामं भ्रामं प्रेयान्यथाऽस्ति तथा ॥
सखि मन्थयति मनो मम दधिभाण्डं मन्थदण्ड इव ॥३४५॥

नायिका सखीं वदति नेत्रेति ममनेत्राकर्षितः प्रेयान् जारः भ्रमणं कृत्वा कृत्वा येन प्रकारेण तिष्ठति तथा मम मनः मन्थयति सविकारि करोतीत्यर्थः मन्थदण्डः वैशाषोदधिपात्रं यथेत्यर्थः तमानय शीघ्रमिति भावः ॥३४५॥

नानावर्णकरूपं प्रकल्पयन्ती मनोहरं तन्वी ॥
चित्रकरतूलिकेव त्वां सा प्रतिभित्ति भावयति ॥३४६॥

दूती नायकमाह नानेति चित्रकारकतूलिकेव लेखिनीव सा तन्वी कृशाङ्गी सूक्ष्मा च भित्तौ भवन्तं भावयति चिन्तयति लेखयति च मनोज्ञं नानावर्णकरूपं नानावेषधारिणं पक्षे नीलपीतादि कलयन्तीत्यर्थः सर्वत्र त्वां व्याप्तेत्याशयः शीघ्रमनुगृहाणेति ॥३४६॥

॥ इति श्रीसत्वर्लीविरचिता नकारव्रज्या समाप्ता ॥

पथिकासक्ता किञ्चिन्न वेद घनकलमगोपिता गोपी ॥
केलिकलाहूंकारैः कीरावली मोघमपसरति ॥३४७॥

सङ्केतितं वनमभिसरन्तीं तत्रैव वने द्वितीयाभिसारिका कूजितं श्रुत्वा परावृत्तामन्योक्त्या द्वितीया वदति पथिकेति पथिकसुरतासक्ता निबिडधान्यादिवृक्षातिगोपिता गोपी केदाररक्षिका घनादेन दर्शनायोग्यत्वं स्थलस्य द्योत्यते किञ्चिन्न जानात्युन्मत्तत्वात् कीराणांशुकानमाली पङ्क्तिः केलौ क्रीडायां या कला कौशलं तद्रूपहूँकारैः शुकादिकालनशब्दसदृशैः मोघं वृथापसरति तथात्र नायं पक्षिकालनशब्दः किन्तु सुरतहूँकारोपमभ्रमेण वृथापसरतीत्यर्थः तथात्र कीरावलीवत्त्वमपि वृथैव पलायसे यस्या भयेन पलायसे सापि रतासक्ता न किञ्चिदपि ज्ञास्यति ज्ञातेपि स्वयमप्यभिसारिकेति अभिसारिकोपहासं न करिष्यतीतिसङ्केतगमनमुचितमेवेत्याशयः ॥३४७॥

प्रणमति पश्यति चुम्बति संश्लिष्यति पुलकमुकुलितैरङ्गैः ॥
प्रियसङ्गाय स्फुरितां वियोगिनी वामबाहुलताम् ॥३४८॥

वैदेशिकं प्रति सखा पत्रं प्रेषयति वियोगिनी विरहिणी प्रियसङ्गमाय पत्यालिङ्गनसूचनाय स्फुरितां स्पन्दवतीं वामबाहुलतां पुलकेन पतिमिलननिश्चयानन्दजरोमाञ्चेन मुकुलितैः कोरकितैः अङ्गैः शरीरैः प्रणमति धन्यास्मीति धिया सश्लाघं पश्यति चुम्बति प्रेम्णा आलिङ्गति तथाच शीघ्रमागन्तव्यमिति पत्रार्थः नायिकासखी नायकदूतीं वदतीत्येके स्वभाववर्णनमित्यपरे नायिकादूती नायकमाहेति बहवः ॥३४८॥

प्रविशसि न च निर्गन्तुं जानासि व्याकुलत्वमातनुषे ॥
बालक चेतसि तस्याश्चक्रव्यूहेऽभिमन्युरिव ॥३४९॥

प्रौढाङ्गनासङ्गतमतिसुन्दरमारब्धयौवनं प्रौढत्वदोषेण त्यक्तुकामं नायकं हसन्ती काचिदाह प्रविशसीति हेबालक स्ताप्रौढ तस्या उन्मत्तायाः चेतसि कुटिले हृदये प्रवेशं कुरुषे स्तोत्साहेन निर्गन्तुं चात्र समाप्तिं कर्तुं त्यक्तुं वा न जानासीत्यर्थः व्याकुलत्वं विस्तारयसि नाना चेष्टां करोषीत्यर्थः चक्रव्यूहे दुर्योधनकारिते अभिमन्युः सौभद्र इवेत्यर्थः इयं जीवन्तं त्वां न त्यक्ष्यत्यतः प्रपलाय्य ग्रामान्तरं गन्तव्यमित्याशयः ॥३४९॥

पश्यानुरूपमिन्दिन्दिरेण माकन्दशेखरो मुखरः ॥
अपि च पिचुमन्दमुकुले मौकुलिकुलमाकुलं मिलति ॥३५०॥

धनलोभात्पामरेण नायकेन सङ्गमाय दूत्योक्ता नायिका समयोरेव प्रेमोचितं नासमयोर्न्नाहन्तव नायकस्य योग्येति दूतीमन्योक्त्याह पश्येति अनुरूपं सदृशं पश्येत्यर्थः इन्दिन्दिरेण भ्रमरेण माकन्दशेखरः सहकारशिरोभागः नतु मूलादिः मुखरः गुञ्जावशोभितः शेखरपदेन महता महान् शिरसा धार्य्यत इति व्यज्यते इदमनुरूपं महत्तरयोः पश्येत्यन्वयः पामरानुरूपमाह अपि च पुनरपि पिचुमर्दमुकुले निम्बकलिकायां मौकुलिनां काकानां कुलं समूहः आकुलं व्याकुलं

पततीत्यर्थः मुकुलपदेन पतनायोग्यत्वमेकवचनेनैकत्वं कुलपदेन बहुत्वमाकुलपदेन वृथाकार्य्यकारित्वं कथ्यते इन्दिन्दिरस्तुरोलम्बश्चञ्चरीको मधुव्रत इतिपुरुषोत्तमदेवः माकन्दस्सहकारोऽस्त्रीतिपिचुमर्द्दश्च निम्ब इत्यमरः एकदृष्टिश्चिरञ्जीवामौकुलीत्युत्पलिनी असमीचीननायिकानिन्दार्थं समीचीननायकोक्तिर्दूतीं प्रति वा सामान्यवर्णनमेतदिति वा महतां प्रशंसामात्रं वा दुष्टनिन्दामात्रं वा ॥३५०॥

**प्रतिविम्बसंभृताननमादर्शं सुमुखि मम सखीहस्तात् ॥**
**आदातुमिच्छसि मुधा किं लीलाकमलमोहेन ॥३५१॥**

कमलमुखी नायिका त्वया संयोजिता किमतःपरमधिकन्तव कार्य्यं मया कर्त्तव्यमिति प्रथमानीतं नायकं श्रावयितुं द्वयोः समीप एव नायिकां सावधानाङ्कर्त्तुञ्च दूती वदति प्रतिविम्बेति प्रतिविम्बितेन संभृतं संपन्नम् आननं मत्सखीवदनं यत्र एतादृशं दर्प्पणं हेमुग्ध प्रथमागमनभयभ्रान्त मम सखीकरात् आदातुं ग्रहीतुं मुधा वृथा किमिच्छसि क्रीडाकमलमेतदिति भ्रमेणेत्यर्थः अतिमुग्धत्वेन दर्पणेपि कमलभ्रान्तत्वस्य नायके कथनेन नायिकां प्रति दर्पणं परित्यज्य शीघ्रं नायकः संभाषणीय इति व्यज्यते आदर्शो मुकुरोऽस्त्रियामित्यमरः ॥ ३५१ ॥

**प्राचीनाचलमौलेर्य्यथा शशी गगनमध्यमावसति ॥**
**त्वां सखि पश्यामि तथा छायामिव संकुचन्मानाम् ॥३५२॥**

मानवतीं नायिकां सख्याह प्राचीनेति उदयपर्वतमस्तकात् येन प्रकारेण चन्द्रः आकाशमध्यमावसति अधिशीङ्स्थासां कर्म्मेत्याधारस्य कर्मसंज्ञा निशीथकालो भवतीति समुदितार्थः हेसखि अनेन हितकारित्वं व्यज्यते त्वां संकुचन्मानामल्पीभूतेर्ष्यां पक्षे अल्पपरिमाणां निशीथे छाया स्वल्पा भवतीति लौकिकं छायामिव पश्यामीत्यर्थः तथाच महामानस्तु गतः तस्य लेशमपि परित्यज्य रमस्व कान्तेनेति वाक्यार्थः ॥३५२॥

**प्राङ्गणकोणेपि निशापतिः सुतापं सुधामयो हरति ॥**
**यदि मां रजनिज्वर इव सखि स न विरुणद्धि गेहपतिः ॥३५३॥**

नास्तीति त्वया तन्निकटे वक्तव्यमिति नायिका सखीं प्रत्याह प्राङ्गणेति स चन्द्रः उपपतिश्च प्राङ्गणकोणे उदितमात्रः निशापतिमृतमयः पक्षे अङ्गणकोणे निलीनः सप्रेयानपिना सङ्केतस्थानान्तराभावेपि किञ्चिद्दृश्ये प्राङ्गणेपि तदा सगतिः स्यादिति सूच्यते सुधामयः अमृतपानसुखदः तदा तापं संतापं मदनतापञ्च हरति नाशयतीत्यर्थः यदि यदा मां गेहपतिः ननु मम स दुष्टः न निरुणद्धि निरुद्धां करोतीत्यर्थः रजनिज्वर इव रात्रिज्वरोऽतिदुष्ट इति वैद्यके रात्रिज्वरे बहिरागमनमनुचितमिति च वैद्यके रजनीज्वरः शीतज्वर इत्यर्थो वा तथा चाङ्गणकोणे दृष्टोपि स मया पतिर्भीत्या न गत इति क्षमाकरणमुचितमित्याशयः ॥३५३॥

पतिपुलककदूनगात्री स्वच्छायावीक्षणेपि या सभया ॥
अभिसरति सुभग सा त्वां दलयन्ती कण्टकं तमसि ॥३५४॥

तव महाकार्य्यकारिणी अहमेवेति दूती नायकमाह पतीति स्वामिरोमाञ्चकण्टकेन नखवङ्गस्पर्शेन दूनं तप्तं दुःखितमिति यावत् गात्रं शरीरं यस्याः सा सुकुमाराङ्गी स्वस्या या छाया तद्दर्शनेपि भीता या सा हे भाग्यशालिन् अन्धकारे कण्टकान् पद्भ्यां मर्द्दयन्ती मद्वचनेन त्वा आयाति ननु गच्छति। किं भाग्यवत्त्वं तव वक्तव्यं मया सर्व्वं संपादितं मत्कार्य्यकरणे त्वमेव प्रमाणमित्याशयः ॥३५४॥

प्रतिभूः शुको विपक्षे दण्डः शृगारसंकथा गुरुषु ॥
पुरुषायितं पणस्तद्बाले परिभाव्यतां दायः ॥३५५॥

इदानीमक्षक्रीडाकर्तव्येति वादिनीं नायिकां नायक आह प्रतिभूरिति प्रतिभूः लग्नकः जामिनेति मैथिलभाषया प्रसिद्धः शुकः कीर इत्यर्थः वचनपटुत्वादभिज्ञत्वाच्च विपक्षे अङ्गीकृतान्यथाकरणे दण्डः गुरुषु गुरुजनेषु शृङ्गारसंकथा रहसि कृतरत्यादिकथनमत्यनुचितं दण्ड इत्यर्थः पणः पराजये देयभागः विपरीतरतमित्यर्थः तत् तस्मात् पूर्वोक्तसर्वाङ्गीकारात् हेबाले दायः पाशपातनं परिभाव्यतां क्रियतामित्यर्थः तथा चानया रीत्या क्रीडनं कर्तव्यं नोचेदिदानीमेव रतिः क्रियतामित्याशयः ॥ ३५५ ॥

परमोहनाय मुक्तो निष्करुणे तरुणि तव कटाक्षोयम् ॥
विशिख इव कलितकर्णः प्रविशति हृदयं न निःसरति ॥३५६॥

कयाचित् कटाक्षितो नायकस्तामाह परेति परेषामस्माकं पक्षे शत्रूणां मोहनाय मोहाय पक्षे मूर्च्छार्थं मुक्तस्त्यक्तः हे निष्करुणे युवति तव प्रत्यक्षः कटाक्षः कलितः संयोजितः कर्णः श्रवणं येन कर्णान्तपातीसश्चापाररूपः पक्षे कर्णान्तकर्षितः धनुर्गुणमुक्त इत्यर्थः हृदयं मम मानसं शत्रुवक्षश्च प्रविशति न निर्गच्छतीत्यर्थः विशिख इवेत्यर्थः तथाच यथा दृढक्षिप्तविशिखेन शत्रुमारणमेवं ममापि मरणं कटाक्षेण यदि नानुग्रहं करिष्यसीतिभावः ॥३५६॥

प्रपदालम्बितभूमिश्चुम्बन्ती प्रीतिभीतिमधुराक्षी ॥
प्रियपीनांसनिवेशितचिवुकतया न पतिता सुतनुः ॥३५७॥

काचित् कस्याश्चिद्वृत्तं सखीमध्ये वदति प्रपदेति पादाग्रेण लम्बिता श्रिता भूमिर्यया सोपपतिचुम्बनं कुर्वती प्रीत्या लोके भीत्या मधुरं मनोज्ञमक्षि यस्याः सा प्रियस्य जारस्य पीनः पुष्टः योंसः स्कन्धप्रान्तभागः तत्र निवेशितमारोपितं चिवुकमधराधः स्थलं यया तद्भावेनेत्यर्थः प्रियपीनांसनिवेशितचिवुकता तया हेतुभूतया सुतनुः न पतितेत्यर्थः अयमेवपाठः अन्यः प्रामादिक एवेति द्रष्टव्यं तथाच भित्तिव्यवधानावस्थ उपपतिपादमुत्थाप्य चुम्बितवत्यपपतिस्कन्धे पतितेत्याश्चर्यं माहात्म्यमस्या इति भावः पादाग्रं प्रपदमित्यमरः ॥३५७॥

प्रातरुपागत्य मृषा वदतः सखि नास्य विद्यते व्रीडा ॥
मुखलग्नयापि योयं न लज्जते दग्धकालिकया ॥३५८॥

खण्डिता नायिका सखीमाह प्रातरिति प्रातःकाले नायिकान्तरोपभोगं कृत्वा अन्यत्र मया न गतोमिति मिथ्याभाषिणः हे सख्यस्य दुष्टस्य लज्जा न वर्तते इत्यर्थः योसौ नायिकानयनकज्जलचुम्बनमुखलग्नया कालिकाया श्यामतयापि नलज्जते इति पश्येत्यर्थः ॥३५८॥

पश्योत्तरस्तनूदरि फाल्गुनमासाद्य निर्जितविपक्षः ॥
वैराटिरिव पतङ्गः प्रत्यानयनं करोति गवाम् ॥३५९॥

अतःपरं वसन्त आगमिष्यतीति नायको नायिकामाह पश्येति यद्वा वनमिदं पत्रनिपातेन सङ्केतयोग्यं न अतः शीतलं नदीतीरादि सङ्केतस्थलं कर्त्तव्यमिति नायको नायिकामाह यद्वा सपत्नीनिर्जितां सपत्नीदुःखितं ज्ञात्वा कालविशेषे तामधः करिष्यसि नेदानीमिति सखी सख्याह यद्वा देशान्तरजिगमिषं प्रियं श्रुत्वा व्याकुला सलज्जा काचिन्नायिका अत्युन्मादकेऽस्मिन वसन्तसमीपवर्त्तिनि समयं तन्निवारणायेत्यन्योक्त्या सखीमाह तनूदरि कृशोदरि नायिकासम्बोधनं पक्षे नायिकोक्तं सख्याः पश्य उत्तरः उत्तरदिगवस्थितः पक्षे उत्तरनायकः फाल्गुनं तपस्यं मासं पक्षेऽर्जुनमासाद्य प्राप्य पराजितः विपक्षः हिमरूपः पक्षे दुर्य्योधनरूपः येन स इत्यर्थः वैराटिः विराटस्य पुत्रानपत्यमुत्तरनामा विराट्पुत्र इति समुदितार्थः पतङ्गः सूर्य्यः पक्षे पङ्गः प्रत्यानयनं पूर्व्वविपरीतानयनं गवां भूरश्मीणां पक्षे इन्द्रियाणां पक्षे किरणानां करोतीत्यर्थः पक्षे व्यङ्ग्भेदाः स्वयमूहनीयाः ॥३५९॥

प्रमदवनं तव च स्तनशैलं मूलं गभीरसरसाश्च ॥
जगति निदाघनिरस्तं शैत्यं दुर्गत्रयं श्रयति ॥३६०॥

नायको नायिका वदति प्रमदेति जगति संसारे ग्रीष्मनिर्ज्जितं शैत्यं दुर्गत्रयं अगम्यत्रयं श्रयति नान्यत्र शैत्यमित्याशयः प्रमदवनमन्तःपुरोचितमुपवनमेकमित्यर्थः चपुनस्तव कुचपर्व्वतं शैलपदेन शैत्यकाठिन्यसमुन्नतत्वानि कथ्यन्ते गम्भीरसरोरस्य मूलं जलाशयाभ्यन्तरमिति त्रयमित्यर्थः चथाच परिरम्भणं शैत्यार्थं देहीत्याशयः स्यादेतदेव प्रमदवनमन्तःपुरोचितमित्यमरः दुर्गमगम्यं दुर्गम्यमिहि विश्वः ॥३६०॥

प्रोंछति तवापराधं मानं मर्द्दयति लोचनं हरति ॥
स्वकृतान्निहन्ति शपथान् जागरदीर्घा निशा सुभग ॥३६१॥

नायिकासखी नायकमाह प्रोञ्छतीति तव नायकस्य नायिकाया अपराधम् अन्यस्त्रीभोगादिरूपं सकलं प्रोञ्छति सम्यगपाकरोतीत्यर्थः नायिकामानं तव

व्यापारं विनापि निशा नाशयतीत्यर्थः सुलोचनं नयनं हरति नायिकायाः मानभङ्ग त्वयि दृष्टिः पततीत्यर्थः नायिकाकृतान् शपथान् तच्च समागमे पुण्यमेव वृथेति रुषा-न्निहन्ति दूरीकरोतीत्यर्थः किंभूता निशा नायिकाया जागरणेन लम्बायमाना सुभग तथाच तवाभिप्रेतं सकलं राज्यासम्पादितं तव भाग्यं किं वक्तव्य-मित्याशयः ॥३६१॥

प्रिय आयाते दूरादभूत इव संगमोऽभवत्पूर्वः ॥
मानरुदितप्रसादाः तत आसन्नपरसुरतादौ ॥३६२॥

सखीसमाजे कस्याश्चित्सख्याः विदेशागतपतिसमागमसमये उन्मादकथनेन कापि सखी परिहासं करोति प्रियेति देशान्तरात् पत्यावागते सति अनेनोन्माद-योग्यता व्यज्यते पूर्व्वः प्राथमिकः सम्भोगः अभूत इवाज्ञात इवाभवत् बभूवेत्यर्थः ततः अपरसुरतादौ द्वितीयसुरतारम्भे मानः रोदनं प्रसादः रताङ्गीकारश्च पुन-र्द्वितीयावृत्तौ आसन् अभवन्नित्यर्थः ॥३६२ ॥

पूर्वमहीधरशिखरे तमः समासन्नमिहिरकरकलितम् ॥
शूलप्रोतं सरुधिरमिदमन्धकवपुरिवाभाति ॥३६३॥

सखी नायकनिस्सारणकालो जात इति नायिकां प्रत्याह उदयपर्व्वतशृङ्गे इदं तमः निशान्धकाररूपं समीपवर्त्तिसूर्य्यकिरणकरकलितं शोभते इत्यर्थः किमिव शिवशूलग्रथितं शोणिताक्तमन्धकस्य दैत्यविशेषस्य शरीरमिवेत्यर्थः शूलेत्यादिना भययोग्यता व्यज्यते शिखरशूलयोरन्धकारशरीरयोः किरणरुधिरयोस्साम्यं त-थाच शीघ्रमुपपतिविसर्ज्जनं कर्त्तव्यमित्याशयः ॥३६३॥

परिवर्तनाभिलुप्तत्रिवलि श्यामस्तनाग्रमलसाक्षि ॥
बहुधवलजघनलेखं वपुर्न्न पुरुषायितं सहते ॥३६४॥

बहुधा विपरीतरतकारिणीं प्रथमगर्भवतीं सखी शिक्षयति परीति एतादृशं वपुः शरीरं पुरुषायितं विपरीतसुरतं न सहते कर्त्तुं योग्यं न भवतीत्यर्थः स्थूलां वापि कृशां वापि गर्भिणीं नैव योजयेदिति कामशास्त्रादित्याशयः वपुः कीदृशं

परिवर्त्तनेनोदरस्योच्छूनतया लुप्ता मृष्टा त्रिवलिर्य्यत्र तदित्यर्थः श्यामं श्यामवर्णं स्तनाग्रं चूचुकं यत्र तदित्यर्थः गर्भेण स्तने श्यामता भवति मलसमक्षि नयनं यत्र तदित्यर्थः अतिधवला श्वेता जघनलेखा नखक्षतलेखा यत्र तदित्यर्थः गर्भे आलस्यं पुष्टत्वेन जघनधवलता च भवतीति लौकिकमेवञ्च त्वया विपरीतं न कर्त्तव्यमित्याशयः गोपितोऽपि ते गर्भः मया ज्ञात इति सखीपरिहासो वाक्यार्थः यद्वा नायकोक्तिर्नायिकां प्रति वस्तुतस्तु अगर्भां प्रत्येव सगर्भत्वकल्पनं गर्भस्वीकारं विपरीतस्वीकारं कुर्व्वति नायकपरिहासो वाक्यार्थ इतिरसिकसंप्रदायः ॥३६४॥

प्रारब्धनिधुवनैव स्वेदजलं कोमलाङ्गि किं वहसि ॥
ज्यामर्पयितुं नमिता कुसुमास्त्रधनुर्ल्लतेव मधु ॥३६५॥

अतिसुकुमाराङ्गीं समागमे स्वेदेन श्रान्तां बुध्वा श्लथं नायकं प्रोत्साहयितुं दूती नायिकामाह प्रारब्धेति हे कोमलाङ्गि रतारम्भ एव श्रमं विनैव घर्म्मजलं वृथा वहसीत्यर्थः नायकः श्रान्तां ज्ञात्वा त्वान्न त्यक्ष्यतीतिभावः कुतः ज्यागुणमर्प्पयितुं दातुं नमिता नम्रीकृता पुष्पकृतधनुर्लता मधु यथा मुञ्चति तथेत्यर्थः तथाच मधुबिन्दुना यथा रमणीया धनुर्ल्लता तथा त्वमपि स्वेदबिन्दुना सात्विकभावेनातिसुन्दरी श्रमभ्रान्त्याऽतिचतुरेण न त्यज्यसे इत्याशयः यद्वा किञ्चिद्रतिभीतां सुकुमाराङ्गीं नायक आश्वासयति ॥३६५॥

पुंसां दर्शय सुन्दरि मुखेन्दुमीषत्त्रपामपाकृत्य ॥
जाया जित इति रूढ़ा जनश्रुतिर्म्मे यशो भवतु ॥३६६॥

त्वमतिसुन्दरीति वक्तुं नायको नायिकामाह पुंसामिति त्रपां लज्जां दूरीकृत्य मुखचन्द्रं पुरुषाणां पुंसां ईषद्दर्शयेत्यर्थः प्रयोजनमाह अयं मादृशः स्त्रीजितः तरुण्ययधीनः इति जनश्रुतिः किं वदन्ती निरूढ़ा सकलप्रसिद्धा यशोरूपा भवत्वित्यर्थः तथाच तव दर्शनमात्रेण सर्वे स्त्रीजिता भविष्यन्तीति मम तव प्रेमपात्रत्वेन स्त्रीजितत्वं यशस्करमेव भविष्यतीत्याशयः ॥३६६ ॥

**प्रसरतु शरत्त्रियामा जगन्ति धवलयतु धाम तुहिनांशोः ॥**
**पञ्जरचकोरिकाणां कलिकाकल्पोपि न विशेषः ॥३६७॥**

यद्यपि घटनानिपुणा दूती साभिलाषो नायकस्तथाप्यवरुद्धायाः किमपि फलं नेत्यन्योक्त्या कश्चिदाह प्रसरत्विति शरत्त्रियामा प्रसरतु अतिज्योत्स्नामयी भवत्वित्यर्थः तुहिनांशोश्चन्द्रस्य धाम तेजः विश्वानि धवलयतु श्वेतानि करोत्वित्यर्थः पञ्जररुद्धचकोरस्त्रीणां कलिकाकल्पोऽपि स्वल्पोऽपि विशेषः चन्द्रकरादिसौख्यं नेत्यर्थः ॥३६७॥

**प्रथमागत सोत्कण्ठा चिरचलितेयं विलम्ब दोषे तु ॥**
**वक्ष्यन्ति सांगरागाः पथि तरवस्तव समाधानम् ॥३६८॥**

नायिकागमनविलम्बसमाधानं सखी नायकं प्रति वदति प्रथमेति हे प्रथमागत अत एव कोपयोग्यता प्रथमागते त्वयि सोत्कण्ठा अधिकोत्कण्ठितेत्यर्थः कमेकं पदं वा इयं सखी चिरचलितात्वदागमनसमय एव चलितेत्यर्थः तथापि यो विलम्बरूपो दोषः तस्मिन् तु पुनःसमाधानं कारणं मार्गे तरवः वृक्षाः वक्ष्यन्ति कथयिष्यन्तीत्यर्थः किंभूताः अङ्गरागेण श्रान्तिसाध्वससात्विकादिद्रुतसत्यङ्गरागसहिता इत्यर्थः तथाच तव भ्रमेण मार्गस्थसकलवृक्षालिङ्गनेनास्या विलम्ब इति न दोषोऽस्याः ॥ ३६८ ॥

**पतितेऽशुके स्तनार्पितहस्तां निबिडघटनविहितोरुम् ॥**
**रपदविकलां फूत्कृतिशतधुतदीपां मनः स्मरति ॥३६९॥**

सखायं प्रति कस्यचिदुक्तिः पतितेति वस्त्रे पतितेऽपहृते गोपनाय कुचदत्तकरां तां नायिकां मनः स्मरतीत्यन्वयः निबिडं दृढं यद्घटनं जघनयोजनं तेनाच्छादितावूरू यस्यास्तामित्यर्थः रदपदेन दन्तचिह्नदानेन व्याकुलामित्यर्थः फूत्कारशतेन धुतः कम्पितः नतु निर्वापितः दीपो यया तामित्यर्थः तथाच तस्य स्मरणेऽन्यत् किञ्चिदपि मद्यं न रोचते इत्याशयः ॥३६९॥

परितः स्फुरितमहौषधिमणिनिकरे केलितल्प इव शैले ॥
कांचीगुण इव पतितः स्थिरैकरत्नः फणी स्फुरति ॥३७०॥

विदेशस्थः कश्चित् सखायं प्रति वदति परित इति शैले पर्व्वते फणी सर्प्पः स्फुरति प्रकाशते इत्यर्थः किंभूतः स्थिरैकरत्नः स्थिरं फणायां स्थितमेकं मुख्यमुत्कृष्टमिति यावत् रत्नं मणिरूपं यस्य स इत्यर्थः स्थितैकरत्न इति क्वचित्पाठः तदर्थः पूर्व्ववत् पक्षे स्थिरं पतनावशिष्टमेकमेकसंख्यकरत्नं यस्य स इत्यर्थः मध्यग्रन्थिशून्यकांच्यादिगुणभङ्गे चरमग्रन्थिनिबद्धमेव रत्नादि तिष्ठतीति स्वभावः क इव पतितः सुरतविमर्द्दे त्रुटित्वा गलितः क्षुद्रघण्टिकाश्यामपट्टगुण इत्यर्थः फणिपक्षे पतितः स्थित इत्यर्थः शैले किं भूतेपरितः चतुर्द्दिक्षु स्फुरिताः तमस्विन्यां देदीप्यमानाः या महौषधयो लताविशेषरूपाग्निसमूहा यत्र तस्मिन्नित्यर्थः पक्षे सुरताधिक्यप्रयोजिका महौषधयो मदनमोदकादयो मणिनिकराः श्रमहारकाः रतदैर्घ्यसंपादकाः मणिसमूहा यत्र तस्मिन्नित्यर्थः क इव क्रीडाशय्यायामिवेत्यर्थः तथाच पर्व्वतं दृष्ट्वा नायिकास्मरणेनार्तोव दुःखं ममेति भावः इदमेव संकेतस्थलं समाचीनं नान्यदिति कश्चित्काचित्प्रति वक्तीति ऋजवः वस्तुतस्तु वनविहारे गृहसामग्री वनसामग्री च द्वयमपि मिलत्यतो गृहापेक्षया वनमेव समीचीनमिति तत्रैव विहारः कर्त्तव्य इति नायिकोक्तिर्नायकं प्रतीति वयम् ॥३७०॥

प्रावृषि शैलश्रेणी नितम्बमुज्झन्दिगन्तरे भ्रमसि ॥
उपलान्तर घन किं तव वचनीयम्पवनवश्योसि ॥३७१॥

स्वाधीनविविधनायिकासु द्वेषमुत्पाद्य नायिकान्तरोपभोगाय दुष्टजनप्रतारितं नायकमन्योक्त्या कश्चिदाह प्रावृषीति हेघन मेघपक्षे मेघतुल्यनायक उपलान्तर वर्षोपलगर्भ यद्वा नितम्बभिन्नप्रस्तरमध्यस्थित पक्षे पाषाणहृदय ज्ञानशून्य इति यावत् तव वचनीयं किं न किमपि वक्तुं योग्यमित्यर्थः यतः पवनस्य वायोः वश्यः अधीनोसीत्यर्थः पक्षे दुष्टजनप्रतारणया विक्षिप्तोसीत्यर्थः प्रावृषि वर्षाकाले पर्व्वतपंक्तिनितम्बदेशं त्यजसि देशान्तरे शिखरादौ भ्रमणं करोषीत्यर्थः पक्षे शैलपंक्तितुल्यं स्त्रीकटिपश्चाद्भागसमूहं

त्यजसि दिगन्तरे नायिकान्तरलाभ(ऽ)तारितो भ्रमसीत्यर्थः अत्र प्रावृट्पदेन नितम्बस्यावश्यसेव्यत्वं श्रेणीपदेन बहुविधस्त्रीसौलभ्यं भ्रमसीत्यनेन वृथात्वं व्यज्यते तथाच दुष्टजनसङ्गतिं विहाय स्वनागिकोपभोग एव कर्त्तव्यः नायिकान्तरलोभेन संचारो वृथेत्याशयः ॥ ३७१ ॥

प्रतिदिवसक्षीणदशस्तवैष वसनाञ्चलोऽतिकरकृष्टः ॥
निजनायकमतिकृपणं कथयति कुग्राम इव विरलः ॥३७२॥

दरिद्रं नायकं त्यज मयानीतं महाधनं नायकं भजेति दूती नायिकामाह प्रतीति तव एष प्रत्यक्षः परिधानवस्त्रप्रान्तदेशः अत्यर्थं करेण नायकहस्तेन कर्षित इत्यर्थः अतिकृष्टकर इतिपाठः अञ्चलधारणसमये त्वत्कृताञ्चलकर्षणेन कृष्टः नायककरो यत्र स इत्यर्थः अयं पाठो न सम्यक् कृपणस्य कर्षकत्वानुपपत्तेः प्रत्यहं क्षीणा कर्षणत्रुटिता दशा तन्तु समूहो यत्र स इत्यर्थः प्रतिदिवसपदेन द्वितीयवस्त्राभावो व्यज्यते तव नायकमुपपतिपक्षे प्रभुं कृपणं कदर्य्यं प्रजापीडकञ्च कथयतीत्यर्थः विरलः उच्छिन्नगृहः कुत्सितो ग्राम इवेत्यर्थः ॥३७२॥

पथिक कथं चपलोज्ज्वलमम्बुदजलबिन्दुनिवहमविषह्यम् ॥
मयपुरकनकद्रवमिव शिवशरशिखिभावितं सहसे ॥३७३॥

वर्षारम्भे व्रजन्तं पथिकं कश्चिदाह पथिकेति यद्वा द्वारस्थितं भयाद्गृहमप्रविशन्तं कश्चिदाह मेघजलबिन्दुसमूहमसह्यं चपलया सौदामिन्या पक्षे चपलावदुज्ज्वलं कथं सहसे इत्यन्वयः परावृत्तो भव मम गृहमागच्छेति क्रमेणेत्याशयः शिवस्य शरवह्निकारितं मयनाम्नो दैत्यस्य यदाकाशगामि हेमनगरं तत्कनकद्रवमिवेत्यर्थः एवञ्च वर्षासंचारो तिदुःखकर इत्याशयः ॥३७३॥

पथिकं श्रमेण सुप्तं दरतरला तरुणि सुमधुरच्छाया ॥
व्यालम्बमानवेणिस्सुखयसि शाखेव साराहा ॥३७४॥

पथिकपतिसमीपस्थां काञ्चित्कश्चिदाह पथिकमिति हेतरुणि श्रमेण मार्ग-

चलनश्रमेण सुप्तं ननु रतश्रमेणेत्याशयः पथिकं मार्गेपि सहचारिणम् अनेन पातिव्रत्यं व्यज्यते त्वं सुखयसीत्यर्थः दरेण पतिस्वापे सत्येकाकिनीत्वात् भयेनेत्यर्थः तरला व्याकुलेत्यर्थः सुमधुरा सुस्निग्धा छाया कान्तिर्य्यस्याः सेत्यर्थः पक्षे निविडच्छाया लम्बायमाना वेणिः केशपाशो यस्याः सेत्यर्थः पक्षे लम्बमानावेणिर्ज्जटाधोमुखमूलरूपा यस्यास्सा सारोहा सजघना समीचीनजघनप्रदेशेत्यर्थः पक्षे सारोहा अवरोहसहितेत्यर्थः यद्वा वृक्षाङ्कलग्नेत्यर्थः शाखा यथा पथिकं सुखयति तथेत्यर्थः दरा भये च गर्त्ते च किञ्चिदर्थे दराव्ययमिति विश्वः छाया स्यादातपाभावे सच्छोभाप्रतिविम्बयोरितिच केशपाशे मूलभेदे वेणिशब्दः प्रकीर्त्तित इति संकेतसंग्रहे, आरोहो जघने दैर्घ्ये पादपाङ्के निषादिनीतिनानार्थः अत्र नायिका न स्वकीया भयचञ्चलत्वानुपपत्तेः अत्रेत्थं व्याख्येयं कश्चिदुपपतिं गृहीत्वा देशान्तरं गच्छन्तीं पथिश्रमसुप्तां समीपे केनचिच्चतुरेण दृष्टा ज्ञाताच स तामाह यथान्यस्य वृक्षस्य शाखान्यं पुरुषं सुखयति तथा त्वमप्यन्यमेव सुखयस्यतो ममाप्यभिमतं कुर्व्विति वाक्यार्थ इति विदग्धानां पन्थाः ॥३७४॥

**प्रददाति नापरासां प्रदेशमपि पीनतुङ्गजघनोरुः ॥**
**या लुप्तकीलभावं याता हृदि बहिरदृश्यापि ॥३७५॥**

तव सखीं विहाय नान्या मम सुखदा तामानय शीघ्रमिति नायको दूतीमाह प्रददातीति सा अपरासां नायिकानां प्रदेशमपि वितस्तिपरिमितमपि स्थानं मम समीपे न ददातीत्यर्थः यद्वा हृदयप्रदेशं न ददातीत्यर्थः पुष्टोच्चजघनोरुः यतः बहिरदृश्यापि अनागतापि लुप्तः चिन्हशून्यो यः कीलः तत्साधर्म्यं प्राप्ता यथा बहिरदृश्येन कीलेन स्थूणान्तराणां स्थलं न दीयते न वा स्थूणाकार्य्यमपि क्रियते अन्तःशल्यरूपेण स्थीयते तथेयमपीत्याशयः प्रदेशो देशमात्रेपि तर्ज्जन्यङ्गुष्ठसंमिते इति विश्वः ॥ ३७५ ॥

**प्रातर्न्निद्राति यथा यथात्मजा लुलितनिःसहैरङ्गैः ॥**
**जामातरि मुदितमनास्तथा तथा सादरा श्वश्रूः ॥३७६॥**

लज्जाधिक्येन नायिकाया अनिपीडनमकुर्व्वाणं श्वश्रूर्द्भिरसमर्थत्वेनाश-

ङ्कितत्वेनानादृतं नायकं सखा शिक्षयति प्रातरिति पतिशयनेन केलीगृहादागतादुहिता यथा यथा निस्सहैःरतनिस्सहैः सर्व्वावयवैः प्रातःकाले निद्रातीत्यन्वयः मुदितमनाः यथाभिप्रेतसुरतकर्त्तायं जामातेत्यानन्दितमनाः श्वश्रूः पत्नीमाता जामातरि दुहितुः स्वामिनि तथा तथा मुदितमानसा भवतीति शेषः प्रातः पदेन सम्पूर्णनिशाजागरेणानररतश्रमेण जागरणं कर्त्तुं न शक्नोति न वा लोकलज्जया रतं गोपयितुमपि समर्थेति व्यज्यते तथाच यामातर्यत्यन्तरतसामर्थ्यपरिज्ञानं विना श्वशुरकुले समादरो न भवतीति त्वयापि तथा कर्त्तव्यमित्युपदेशो वाक्यार्थः स्त्रीणां रतिरेव परितोषिका नान्येति वाक्यार्थ इत्यपरे ॥३७६॥

**प्रणयचलितोपि सकपटकोपकटाक्षैर्म्मया कृतस्तम्भः ॥**
**त्रासतरलो गृहीतः सहासरभसम्प्रियः कण्ठे ॥३७७॥**

ममाधीनोयमिति स्वाधीनपतिका सखीमाह प्रणयेति प्रियः प्रणयचलितोपि अपिना त्रासाभावयोग्यतायामपि त्रासकथनेनात्यधीनत्वं व्यज्यते मिथ्याकोपेन वक्रदर्शनैः मया कृतःस्तम्भो रतोद्योगनिवृत्तिर्य्यस्य स इत्यर्थः भयचञ्चलः महासक्रीडं यथा भवति तथा कण्ठे गृहीत इत्यन्वयः तथाच मदाज्ञाकारी मय्येव प्रीतश्च सदा तिष्ठत्यहमेव धन्येत्याशयः ॥३७७॥

**प्रियदुर्न्नयेन हृदय स्फुटसि यदि स्फुटनमपि तव श्लाघ्यम् ॥**
**तत्केलिसमरतल्पीकृतस्य वसनांचलस्येव ॥३७८॥**

अत्यन्तोपभुक्तस्य प्रियस्य चरमावस्थायां परामर्शस्याध्यक्षे मरणमेव श्रेयेतिस्वगतं नायिकाह प्रियेति प्रियस्य पत्युः दुर्णयेन नायिकान्तरोपभोगेन हेहृदय यदि स्फुटसि द्विधा भवसि तदा तव स्फुटनं द्विधाभवनमपि अपिना अप्रियमपि प्रियं भवतीति व्यज्यते श्लाघ्यं स्पृहणीयमुपभोगस्य सर्व्वस्य सिद्धत्वात् प्रेमदार्ढ्यव्यापकत्वाच्च प्रियकेलिसमये शय्यीकृतं वस्त्राञ्चलस्योपभोगेन पुरातनस्य भग्नताप्रथा श्लाघ्या तथेत्यर्थः तथा चेदानीं मरणमेवोचितमित्याशयः यद्वा यस्तु परिधानीयमपि शय्यां कृत्वा वारंवारं सङ्केतकथनेपि परितोषितः तथापि सोन्यासक्तो यदि तदा मरणमेवोचितमिति दुर्नां बोधयितुं नायिका परकीया वदति ॥३७८॥

पवनोपनीतसौरभदूरोदकपद्मिनीलुब्धः ॥
अपरीक्षितस्वपक्षो गन्ता हन्ताऽपदम्मधुपः ॥३७९॥

नायिकान्तरोपभोगाय दुष्टजनप्रेरितं नायकमन्योक्त्या पूर्वनायिकासखी वदति पवनेति मधुपः भ्रमरः हन्त खेदे आपदं विपत्तिं गन्ता गमिष्यतीत्यर्थः मधुपपदेन प्रतार्य्यत्वं व्यज्यते पवनेनोपनीतमानीतं यत् शौरभं तेन दूरवर्त्तिजलप्रवाहा या कमलिनी तस्यां लोभयुक्त इत्यर्थः अपरीक्षितौ अतिदूरगमनसाधनत्वेनाज्ञातौ पक्षौ छदौ यस्य स इत्यर्थः पक्षे अज्ञसखीकारितमिथ्याख्यात्या कथमप्यलभ्यनायिकालुब्धः अज्ञातसहायो नायकः पूर्व्वनायिकाया अनुरक्तायाः परित्यागेन विपत्तिमेवाप्नोतीति मम सखीं विहाय परप्रतारणया वृथान्यत्र कामुको भवसीति नायकं प्रति दूतीभूतसखीवाक्यार्थः स्वबलमतिक्रम्य किमपि कार्य्यं केनापि न कर्त्तव्यमिति वाक्यार्थ इतिऋजवः ॥३७९॥

प्रेमलघूकृतकेशववक्षोभरविपुलकुचकलशा ॥
गोवर्द्धनगिरिगुरुतां गोपवधून्निभृतमुपहसति ॥३८०॥

प्रेमेति गोपवधूः निभृतं मन्दं कृष्णोत्थापितगोवर्द्धनगरिमाणमुपहसति मयोत्थापितेनापि कृष्णेनोत्थापितो गोवर्द्धनः कियान् गुरुरित्याशयः किंभूता गोपी प्रेम्ना लघुतरं कृतं यत् केशवस्य रतसमये वक्षस्थलं तस्य भारेण विस्तीर्णौ कलससदृशौ कुचौ यस्याःसेत्यर्थः स्वरूपवर्णनमेतदिति संप्रदायः ॥३८०॥

प्रियविरहनिःसहायाः सहजविपक्षाभिरपि सपत्नीभिः ॥
रक्ष्यन्ते हरिणाक्ष्याः प्राणा गृहभङ्गभीताभिः ॥३८१॥

स्वकार्य्यार्थे चतुरेण शत्रोरपि संरक्षणं क्रियतेइतिकश्चित्कश्चिदाह प्रियेति हरिणाक्ष्याः प्राणाः सपत्नीभिः रक्ष्यन्ते इत्यन्वयः किंभूतायाः प्रियस्य पत्युः विरहेण निस्सहायाः प्राणमात्रावशेषाया इत्यर्थः सपत्नीभिः किंभूताभिः सहजेन स्वभावेन विपक्षाभिः शत्रुरूपाभिरित्यर्थः शत्रुणापि शत्रुरक्षणं क्रियते किमुत मित्रेण मित्रस्येत्यपरोर्थः सपत्नीप्राणरक्षणहेतुगर्भं सकलसपत्नीविशेषणमाह

गृहभंगभीताभिः सर्व्वासां समानेपि पतिवियोगरूपमरणकारणे एकस्या एव मरणे अन्यासामतिसानन्दानां जीवने एताभिरेवातिदुष्टाभिरेकाकिन्याः साध्वा मारणं कारितमिति बुद्धा पत्यनागमने यत् गृहभंगभयं तद्युक्ताभिरित्यर्थः तथा चास्या मरणेऽस्माकं दुष्टत्वख्यातिः पत्यनागमनेन गृहभंगश्चातोऽवश्यं सपत्नी स्वाधीना रक्षणीयेत्याशयः ॥ ३८१ ॥

प्रकटयति रागमधिकं लपनमिदं वक्रिमाणमावहति ॥
प्रीणयति च प्रतिपदं दूति शुकस्येव दयितस्य ॥३८२॥

त्वयानीतो मम प्रेमपात्रतां प्रापितोपि तव शिक्षितमात्रं कुर्व्वन्नपि नायकः न तथा स्वयं चतुर इति नायिका दूतीमाह प्रकटयतीति हेदूति दयितस्य त्वत्कृतप्रियस्य लपनं कथनं पक्षे मुखमधिकं रागमनुरागं पक्षे लौहित्यं प्रकटयति व्यक्तं कथयति पक्षे दर्शयतीत्यर्थः वक्रिमाणं व्यञ्जकत्वं पक्षे वक्राकारत्वं दधातीत्यर्थः प्रतिपदं वाक्यघटकं पदं पदं प्रतीत्यर्थः पक्षे प्रतिक्षणं प्रीणयति सुखयतीत्यर्थः च पुनः शुकस्य वदनमिवेत्यर्थः तथाच स्वयं न किमपि जानाति परशिक्षितमात्रं शुकवद्वदतीति नायं सुखदस्तथापि मम स्नेहो वर्त्तते एवेत्याशयः लपनशब्दस्य लपधातोर्भावल्युडन्तस्य वचनवाचकत्वं करणल्युडन्तस्य मुखवाचकत्वमिति बोध्यम् ॥३८२॥

प्रविशन्त्याः प्रियहृदयं बालायाः प्रबलयौवनव्याप्तम् ॥
नवनिशितदरतरङ्गितनयनमयेनासिना पन्थाः ॥३८३॥

यौवनारम्भे सर्व्वाधिक्यं सौन्दर्य्यं स्त्रीणामित्याह यद्वा अनेकस्त्रीप्रतिरोधे बालाप्रवेशः कथमिति पृच्छन्ती काञ्चित्स्वगुणेनैव प्रवेश इति काचिदाह-प्रविशन्त्या इति प्रबलशत्रुयुवती समूहप्रीतं पतिमनः प्रविशन्त्या बालायाः अन्यउपायो नास्ति नवं सुन्दरं निशितं शाणितमीषत्तरङ्गयुक्तं परन्नेत्रं तदभिव्याप्तेनासिना खड्गेनैव पन्था मार्गो भवतीति शेषः तथाच समीचीन-खड्गधारिणां यथा शत्रुसमूहे गमनं भवति नान्यस्य तथास्या बालाया यौवना-

रम्भतरङ्गितनेत्रपातेन पतिर्व्वशो जातोऽन्यासां किमपि शक्यं नास्ति धन्यं सौन्दर्य्यमस्या बालाया इत्याशयः ॥ ३८३ ॥

**प्रणयापराधरोषप्रसादविश्वासकेलिपाण्डित्यैः ॥**
**रूढप्रेमा क्रियते किं बाला कुतुकमात्रेण ॥३८४॥**

बालासखी नायकमाह प्रणयेति बाला चातुर्य्यरहिता कुतुकमात्रेण कौतुकमात्रेण मात्रपदेन वास्तविकप्रेमान्यत्वं बालायां तेन गेहिन्यामेव प्रीतत्वं तेन च प्रतारकत्वं व्यज्यते रूढप्रेमा उत्पन्नप्रेमा बाला किमु क्रियते किं क्रियते वृथा क्रियते इत्यर्थः कैः प्रथमं प्रणयः प्रेम अथापराधे उक्ताकारणे रोषः कोपः पुनः प्रसादः पुनः विश्वासः तवाभिप्रेतमेव करोमीति विश्वासदानं सति विश्वासे नानाविधक्रीडापाण्डित्यमेतैरित्यर्थः तथा चातिसरला मम सखी त्वदेकशरणा त्वन्तु प्रतारक इति नोचितमित्याशयः ॥३८४॥

**पूर्व्वैरेव विचित्रैश्चरितैर्ज्जरतोपि पूज्यता भवतः ॥**
**मुञ्च मदमस्य गन्धाद्युवभिर्गज गञ्जनीयोसि ॥३८५॥**

कथं न वृद्धमतिलंपटं दृष्ट्वाऽन्योक्त्या कश्चिदुपहसति पूर्वैरिति हेगज मदं मत्ततां यूथगामीतिगर्व्वं मुञ्च त्यजेत्यर्थः मदजलं मुख्योर्थः यतः अस्य मदस्य गन्धात् सौरभात्सम्बन्धाद्वा युवभिर्नवयौवनैर्गजैः गञ्जनीयोसि पराजययोग्योसीत्यर्थः ननु मदत्यागे कथं प्रतिष्ठेत्यत आह पूर्व्वकालिकैः विचित्रैर्नानायूथपपराजयकारकैः चेष्टितैः जरतोपि वृद्धस्यापीदानीमयोग्यस्यापीति यावद्भवतः पूज्यतास्तीति क्वचिज्जनितास्तीतिपाठः तथाच वृद्धस्य गजस्य मदो यथा पराभवाय भवति तथा जरत्तरस्य बलं पटुता केवलमुपहासाय भवतीति भावः ॥३८५॥

**प्रसभं प्रवेशिता या वासागारं कथञ्चन सखीभिः ॥**
**न शृणोतीव प्रातस्सा निर्गमनस्य संकेतम् ॥३८६॥**

पतिविद्वेषदशायामपि या तवाधीना नाभवत् पतिप्रीता सेदानीं तव वश्या

सर्व्वथा न भविष्यति वृथा तवायास इति पूर्व्वनियुक्ता दूती नायकमाह प्रसभमिति यद्वान्यासक्ता सा पतिगृहगमनविमुखी ननु भयेनेति काञ्चित्काचिदाह या नायिका सखीभिः कथञ्चन कष्टेन प्रसभं हठात् वासागारं पतिगृहं प्रवेशितेत्यन्वयः सा सम्यगनुभूतपतिरतिसुखा प्रातरपि सखीकृतनिर्गमनस्य संकेतं करतालिकाछोटिकादानादिरूपं न शृणोतीव श्रुतमप्यश्रुतङ्करोतीत्यर्थः पत्यधीना सुरतमात्रार्थिनी सुखिता जातेतिभावः वयन्तु यस्मिन् काले पतिगृहगमनाय साऽस्माभिः प्रेरिता स एवोपपतिसंकेतकालस्तस्याःकथमन्यथा अतीतसंकेतकालं न शृणोतीति दुष्टेयमिति काचित्काञ्चिदाहेति ब्रूमः ॥३८६॥

**पूजा विना प्रतिष्ठां नास्ति न मन्त्रं विना प्रतिष्ठा च ॥**
**तदुभयविप्रतिपन्नः पश्यतु गीर्व्वाणपाषाणम् ॥३८७॥**

वेदशास्त्राध्ययनं संपाद्य प्रतिष्ठितो भूत्वा सर्व्वत्र पूज्यो भविष्यसि नान्यथेऽति कश्चित्पुत्रमुपदिशति पूजेति प्रतिष्ठां प्राणप्रतिष्ठां पक्षे यशः विना पूजा पञ्चोपचारादि पक्षे बहुविधलाभादि नास्ति न भवतीत्यर्थः मन्त्रं वेदाद्युक्तं मन्त्रं पक्षे मन्त्रं मन्त्रणम् मन्त्रप्रतिष्ठोभयविमुखः जनः देवप्रस्थरं दृष्टान्तं विप्रतिपत्तिविषयसाधकं पश्यत्वित्यर्थः तथाच अप्रतिष्ठितो प्रतिष्ठितदेवपाषाण एव निश्चेतव्य इत्याशयः मन्त्रणाकुशलस्य सर्व्वं सिद्ध्यति नान्यस्येतीति वाक्यार्थः ॥३८७॥

**पूर्व्वाधिको गृहिण्यां बहुमानः प्रेमविश्वासः ॥**
**भीरधिकेयं कथयति रागं बालाविभक्तमिव ॥३८८॥**

गृहिणी कृतलघुमानेऽपि भयाधिक्यं नाटयन्तं नायकं गृहिणीसखी वक्ति पूर्व्वेति गृहिण्यां प्रथमपरिणीतायां बहुमानः महासम्मानः पूर्व्वाधिकः पश्चात्परिणीतबाला यौवनपूर्व्वकालिकादधिक इत्यर्थः प्रेम्ना क्रीडया च विश्वासश्च पूर्व्वाधिक इतियोजनेयं प्रत्यक्षा अल्पकारणेऽपि पूर्व्वाधिकाभीर्भयंत्र रागं प्रेमाणं बालया नवोढया विभक्तं विशेषेण न्यूनाधिकभावेन गेहिन्यां लेशमात्रेण सर्व्वात्मना बालायामेव स्थापितमिवेत्यर्थः यद्वा विभक्तमिव समभागकृतमिव कथयति ननु समभागं कथयतीत्यर्थः तथा चास्थानेऽपि पूर्व्वाधिककाल्पनिकबहुमानादिभिरपि लोकास्स-

मनुरागं जानन्तु अहन्तु गेहिन्यां लेशमपि न बालायां परिपूर्णमेव तवानुरागं जानामि त्वं वञ्चकोसि मम सखी प्रताय्यैव किं करोमीत्याशयः ॥३८८॥

**पुलकितकठोरपीवरकुचकलशाश्लेषवेदनाभिज्ञः ॥**
**शम्भोरुपवीतफणी वाञ्छति मानग्रहं देव्याः ॥ ३८६ ॥**

पुरुषमध्यस्थेन केनापि कुलवधूपभोगो न कर्त्तव्यः किन्तु सखीद्वारेणैवेति वक्तुं नायकसख्यु दुश्चेष्टितं ज्ञात्वा नायिकासखी नायकमाह पुलकितेति शम्भोः यज्ञोपवीतरूपः शेषनागः भवान्या मानग्रहं सार्वदिकं मानमिच्छतीत्यर्थः उपवीतपदेन त्यागानर्हत्वं फणिपदेन यज्ञोपवीतयोग्यत्वं व्यज्यते किंभूतः फणी रोमाञ्चितौ कठिनौ पीनौ च यौ कुचरूपौ घटौ भवान्यास्तनौ ताभ्यामाश्लेषेण भवालिङ्गनेन मध्यवर्त्तित्वेन या वेदना पीडा तस्या ज्ञातेत्यर्थः अत्र पुलकितकठोरपीवरपदैः दुस्सहसर्व्वाङ्गीणदृढसंयोगद्योतनेन वेदनाया उत्कटत्वं द्योत्यते वा स्वाभिप्रेतं द्विजिह्वमित्रपीडाकरमपि साधयत्येवेतिवाक्यार्थ इति मादृशाः ॥ ३८६ ॥

**प्रिय आयातो दूरादिति या प्रीतिर्व्वभूव गेहिन्याः ॥**
**पथिकेभ्यः पूर्व्वागत इति गर्व्वात्सापि शतशिखरा ॥ ३६० ॥**

गलितयौवना पतिसखायं वक्ति प्रिय इति गेहिन्याः पुत्रादिमत्याः प्रियः पतिः दूरात् देशान्तरादायातः आगतः इति हेतोः या प्रीतिरुत्साहः बभूव जात इत्यर्थः सापि स्वाभाविकमहत्यपि शतशिखरा शतशृङ्गा शतप्रकारिकेति यावत् कस्मात्पथिकेभ्यः मुग्धप्रौढ़ादिसर्व्वेभ्यः परदेशगतयुवभ्यः पूर्व्वागतः प्रथमागत इति गर्व्वादिति स्वस्यां सर्व्वयुवत्याधिक्यगर्व्वादित्यर्थः तथाच गलितयौवनाया यौवनसूचनेन यथाप्रीतिर्न्न तथा न्यैरित्याशय इति सखीपरिहासो वाक्यार्थः ॥३६०॥

**पृष्ठं प्रयच्छ मा स्पृश दूरादपसर विहितवैमुख्यः ॥**
**त्वामनुधावति तरणिस्तदपि गुणोत्कर्षतरलेयम् ॥ ३६१ ॥**

त्वदेकशरणा सा कथमपि न त्वां त्यजतीति नायिका सखी नायकमन्योक्तयाह

पृष्ठमिति हेनौकागुणकर्षक अथच तत्तुल्यनायिकाकर्षक नायक पृष्ठं परोक्ष-भागं प्रयच्छ देहीत्यर्थः स्पर्शं मा कुरु दूरादेव गमनं कुरु विहितं वैमुख्य-मसम्मुखत्वं पक्षे पूर्व्ववदालापादि येन स इत्यर्थः इदं यदपि सर्व्वमाचर तदपि तरणिः नौका नायिका च त्वामनुधावति अनुगच्छति अनुसरति च इयं प्रत्यक्षा गुणोत्कर्षेण रज्वाकर्षेण न पक्षे सकलगुणैराकर्षेण वशीकरणे नेइत्यर्थः तथाच त्वमपि तस्यामेव संलग्नमना बाह्यवैमुख्यादिना अस्मान् प्रतारयसि नतु विमुखोसि गुणाकर्षकपुरुषवदिति द्वयोस्समप्रेमेत्याशयः यथा श्रुतं तु रसाभासरूपत्वादनुपादेयं सर्व्वत्र सर्व्वदा निरीक्षणमुग्धं प्रथमत एवानुभूतप्रेमलवं नायकं दूती कोपनिवारणार्थमन्योत्तया शिक्षयतीति रसिकाः तथाच नौकाकर्षवत् गुणेन वशीकर्त्तव्या नायिका नतु गुरुजनेपि निरीक्षणेनेत्याशयः ॥ ३६१ ॥

**प्रियया कुंकुमपिञ्जरपाणिद्वययोजनाङ्कितं वासः ॥**
**प्रहितं मे याचूनाञ्जलिसहस्रकरणाय शिक्षयति ॥३६२॥**

कश्चिद्वैदेशिको वसन्तारंभे सखायमाह प्रिययेति प्रियया वासः वस्त्रं प्रहितं प्रेषितमित्यर्थः कर्तुं शिक्षयति उपदेशयतीत्यर्थः याचूनासहस्रकरणाय अञ्जलिसहस्रकरणायेत्यर्थः द्वन्द्वादितिन्यायात्सहस्रशब्दस्यानन्तवाचकत्वं सहस्रशीर्षेत्यादि श्रुतिसिद्धं वासः किंभूतं कुंकुमेन पिञ्जरितं पीतवर्णं यत्पाणिद्वयं संपुटाकारं तेन यत् योजनं संयोजनं तेनाङ्कितं चिह्नितमित्यर्थः अयम्भावः वसन्तारम्भसूचकपीतवर्णकमञ्जलिकुंकुमचिह्नितं वस्त्रं दृष्ट्वाऽनन्ताञ्जलिविधानं ममाप्युचितमिति ॥ ३६२ ॥

**प्राचीनान्तरितेयं प्रियस्य वदनेऽधरं समर्प्पयति ॥**
**प्राग्गिरिपिहिता रात्रिः सन्ध्यारागं दिनस्येव ॥ ३६३ ॥**

काचित्कस्याश्चिदौपपत्यं सखीं प्रति दर्शयति प्राचीनेति इयं त्वया साध्वीत्वेन ज्ञाता प्रियस्य जारस्य मुखे अधरं समर्प्पयति चुम्बनाय योजयतीत्यर्थः किंभूता प्राचीनेन प्रान्तवृत्त्या वाटिकावेष्टनेनेति यावदन्तरिता व्यवहिता अनेन सुरताभावेपि चुम्बनार्थमपि लज्जापरित्यागेनातिदुष्टत्वं व्यज्यते उदया-

अलपिहिता गोपिता रात्रिः संध्यारागं प्रातस्सन्ध्यालौहित्यं दिवसस्य मुखे यथा क्षिपति तथेत्यर्थः अनेन यथा रात्रिदिवसयोस्सहानवस्थानात् कदापि समागमो न तथानयोश्चुम्बनमात्रं न समागम इति व्यज्यते ॥ ३६३ ॥

परपतिनिर्दयकुलटाशोषित शठ नेर्ष्यया न कोपेन ॥
दग्धममतोपतप्ता रोदिमि तव तानवं वीक्ष्य ॥ ३६४ ॥

धीरा नायिका पतिमाह परेति परपतिषु अन्यस्त्रीस्वामिष्वित्यर्थः निर्दया दयाशून्या या कुलटा पुंश्चली तया शोषितः निस्सारः कृतः तत्संबोधने ईर्षया रोषेण कोपेन वा न रोदनं करोमीत्यर्थः दग्धा या ममता त्वयि दया तयोपतप्ता संतप्ताहं तव तानवं अस्तरकुलटारत्याधिक्यक्लान्त्या कृशतां दृष्ट्वा तव प्राणा एव न स्थास्यन्तीति रोदनं करोमीत्यर्थः तथाच कुलटां त्यज प्राणान् रक्ष मम वैधव्यं मास्त्वित्याशयः ॥ ३६४ ॥

प्राङ्गण एव कदा मा श्लिष्यंती मन्युकंपितकुचकलशा ॥
अंसनिषण्णमुखी सा स्नपयति बाष्पेन मम पृष्ठम् ॥३६५॥

पथिको मनोरथङ्करोति प्राङ्गण इति सा पत्नी मम पृष्ठं पश्चाद्भागं बाष्पेणाश्रुणा कदा कस्मिन् काले स्नपयति स्नपयिष्यतीत्यर्थः किंभूता प्राङ्गण एवात्युत्कण्ठया लोकलज्जां परित्यज्य मध्याङ्गण एव मामालिङ्गन्तीत्यर्थः मन्युना क्रोधेन माम्परित्यज्य गतोयमिति कोपेन कंपनशीलौ स्तनघटौ यस्यास्सा अंसे निषण्णं संबद्धं मुखं यस्यास्सेत्यर्थः निषण्णपदेन चेष्टाशून्यत्वं तेन च मूर्च्छितत्वं तेनापि पातिव्रत्यादि व्यज्यते ॥३६५॥

प्रेतैः प्रशस्तसत्वा साश्रु वृकैर्वीक्षिता स्खलद्ग्रासैः ॥
चुम्बति मृतस्य वदनं भूतमुखोल्केक्षितं बाला ॥३६६॥

प्रेम्णो जीवनमपि न प्रियमिति काचित् कश्चिद्वदति प्रेतैरिति बाला मुग्धा मृतस्य प्रियस्य मुखं चुम्बतीत्यर्थः मुखं किंभूतं भूतस्य गणविशेषस्य मुखस्थितयोल्कया ज्वालाविशेषरूपया ईक्षितम् अन्धकारेपि प्रेतभमौ दृष्टमित्यर्थः प्रेतगणैः

सह प्रशस्तानि सत्वानि प्राणिनो यस्यास्तेत्यर्थः प्रेतयुक्तप्राणिसहचारिणी मरणस्य प्रियत्वेन तेनैव मुदिता वेत्याशयः शवभक्षणविरोधेन रोदनशीलैः भयाद्भ्रष्टशवमांसग्रासैर्द्दष्टेत्यर्थः यद्यप्युल्कामुखी शृगाली तथापि भूतविशेषोप्युल्कामुख इत्याशयेनेदं तथाच मध्ये प्रेमभङ्गो न कर्त्तव्य इत्याशयः ॥३६६॥

पिशुनः खलु सुजनानां खलमेव पुरो विधाय जेतव्यः ॥
कृत्वा ज्वरमात्मीयं जिगाय बाणं रणे विष्णुः ॥३६७॥

पामरेण कलहप्रवृत्तं महान्तं निवारयन् कश्चिदाह पिशुन इति सुजनानां महतां पुरोऽग्रे खलमेव दुष्टमेव एवकारेण सुजनव्यवच्छेदः निधाय कृत्वा पिशुनः दुष्टः जेतव्यः परिभूतः कर्त्तव्य इत्यर्थः स्वयं कलहो न कर्त्तव्य इत्याशयः दृष्टान्तमाह ज्वरं वैष्णवमात्मीयं स्वकीयं कृत्वा युद्धे बाणासुरं विष्णुरजयदित्यर्थः ॥३६७॥

पिब मधुप बकुलकलिकां दूरे रसनाग्रमात्रमाधाय ॥
अधरविलेपसमाप्ये मधुनि सुधा वदनमर्प्पयसि ॥३६८॥

इदानीं समग्ररतियोग्या नेयं किन्तु मृदुचुम्बनालिङ्गनादिमात्रयोग्येयमतो व्याकुलता न कर्त्तव्याऽन्यथा वैरस्यमेव भविष्यतीति नायकमनोक्तया काचित्प्रौढाह पिबेति हेमधुप भ्रमर अनेन मत्तत्वं सूच्यते बकुलकलिकां पिब ननु मधु तदभावादित्याशयः दूरे स्थित इत्यन्वयः अनेन भारामहत्वं व्यज्यते रसनाग्रमात्रं जिह्वाग्रमात्रं धृत्वा तथाच जिह्वाग्रेण स्पर्शमात्रं कर्त्तव्यम् नाधिकमित्याशयः अधरस्य यो विलेपः संबन्धस्तावन्मात्रेणैव समाप्तिर्य्यस्य तस्मिन् मधुनि संपूर्णमुखयोजनं वृथेत्यर्थः तथाच मधु नास्त्येव यद्यल्पमपि स्यात्तदा संमर्द्दे नास्वादनयोग्यं न अतो हठो न कर्त्तव्य इत्याशयः ॥३६८॥

प्रायेणैव म्लाना मलिनानामाश्रयत्वमुपयान्ति ॥
कालिन्दीपुटभेदः कालियपुटभेदनं भवति ॥३६९॥

केनापि मलिनस्वाभावधूर्त्तेन नायकेन योजयितुं दूत्योक्तया स्फीतस्वभावा काचिन्नायिका नाहन्तद्योग्येत्यन्योक्त्या दूतीमाह प्रायेणैवेति प्रायेण

बाहुल्येन म्लाना: श्यामा: पक्षे म्लानचित्ता मलिनानां श्यामानां म्लानचित्तानां चाश्रयत्वमधिकरणत्वं पक्षे प्रियत्वमुपयान्ति गच्छन्तीत्यर्थ: यथा यमुनाया वक्षस्थलं कालियस्य नागस्य पुटभेदनं पत्तनं भवति तथेत्यर्थः द्वयोरपि स्नानत्वादित्याशयः पत्तनं पुटभेदनमित्यमरः स्वरूपवर्णनमेतदितिऋजवः ॥३९९॥

पश्य प्रियतनुविघटनभयेन शशिमौलिदेहसंलग्ना ॥
सुभगैकदैवतमुमा शिरसा भागीरथीं वहति ॥४००॥

सपत्नीदु:खितां नायिकां सखी शिक्षयति पश्येति उमा पार्व्वती भागीरथीं गङ्गां शिरसा मस्तकेन वहतीत्यर्थः शिवस्वरूपया पार्व्वत्या सपत्नीरूपा गङ्गा धार्य्यत इति समुदितार्थः इतिपश्येतियोजना त्वमप्येवमेव कुर्व्वित्याशयः किंभूता प्रियस्य शिवस्य या तनु: शरीरं तद्वियोगभीत्या शिवदेहार्द्धधारिणीत्यर्थः सुभगानां पतिसौभाग्यवतीनामेकं मुख्यं दैवतं देवतारूपेत्यर्थः तथाच पतिसौभाग्यार्थं सपत्नीसेवनमुत्कर्षाधायकमेवेत्याशयः यद्वा निन्दितमपि कर्म्म सत्कर्मार्थं कर्त्तव्यमेवेत्याशय: ॥४००॥

पथिकवधूजनलोचननीरनदीमातृकप्रदेशेषु ॥
घनमण्डलमाखण्डलधनुषा कुण्डलितमिव विधिना ॥४०१॥

वर्षारम्भे परदेशगमनोद्यतं नायकं नायिकासख्याह पथिकेति वैदेशिकवधूजननयनाश्रुरूपनदीसंपन्नब्रीहिपालितेषु विधिना ब्रह्मणा घनमण्डलं मेघमण्डलमाखण्डलधनुषेन्द्रायुधेन कुण्डलितमिव कुण्डलनाकृतमिवेत्य र्थः विरहिणीरोदनजलेनैव परिपूर्णत्वात्तत्र मेघवर्षणं वृथेति तथाच पथिकवधूनां चातुर्म्मास्यमतीवदुस्सहं चातुर्म्मास्यारम्भे त्वया न गन्तव्यमित्याशयः देशोनद्यम्बुवृष्ट्यम्बुसम्पन्नब्रीहिपालितः स्यान्नदीमातृको देवमातृकश्च यथाक्रममित्यमरः ॥ ४०१ ॥

प्रतिवेशिमित्रबन्धुषु दूरात्कृच्छ्रागतोपि गेहिन्या ॥
अतिकेलिलम्पटतया दिनमेकमगोपि गेहपतिः ॥४०२॥

सुरतमात्रमपेक्षितमस्या उचितानुचितव्यवहारज्ञानं नास्तीति कस्याश्चिद्वृत्तं काचिद्वदति प्रतिवेशीति गेहिन्या वैदेशिकपत्न्या गेहपतिः स्वामी एकं दिनमागमनदिनं सकलमगोपि गोपितः अत्यर्थम् अनवरतं केलौ सुरते या लंपटता लोलुपता तया हेतुभूतया नतु उपचारेण प्रेम्णेत्याशयः प्रतिवेशिषु समीपवासिषु मित्रेषु भ्रातृवर्गेष्वित्यर्थः किंभूतः दूराद्देशान्तरात् कष्टेन दुःखेनागतोपीत्यर्थः अनेनोत्सवसमये गोपनस्यात्यन्तानुचितमिति व्यज्यते तेन चासतीत्वं व्यज्यते ॥४०२॥

**परपट इव रजकीभिर्म्मलिनो भुक्त्वापि निर्द्दयन्ताभिः ॥**
**अर्थग्रहेण न विना जघन्य मुक्तोसि कुलटाभिः ॥४०३॥**

समीचीनां नायिकां कटाक्षयन्तं नायकं नायिकासख्याह परपट इति हेजघन्य नीच पक्षे जघनसंबद्धताभिः प्रसिद्धाभिः कुलटाभिः पुश्चलीभिर्युक्तोयमिति· त्यक्तोसीत्यर्थः अर्थग्रहेण धनग्रहेण पक्षे वेतनग्रहेण विना नेत्यर्थः मलिनः मलमयः निर्द्दयं परकीयत्वात् दयाशून्यं भुक्त्वोभागं परिधानं वा कृत्वेत्यर्थः प्रधानक्रियानुरोधित्वान्न द्वितीया भावकीभिरन्यपट इवेत्यर्थः तथाच पामरीयोग्योसि नतु मम सख्याः वृथा कटाक्षं करोषीत्याशयः ॥४०३॥

॥ इति श्रीसचलविरचिते पकारव्रज्या समाप्ता ॥

**बहुयोषिति लाक्षारुणशिरसि वयस्येन दयित उपहसिते ॥**
**तत्कालकलितलज्जा पिशुनयति सखीषु सौभाग्यम् ॥४०४॥**

काचित्काञ्चिदाह बहुयोषिदिति तत्काले उपहासकाले कलिता व्यक्तीकृता लज्जा यया सा काचिन्नायिका सखीषु समीपस्थासु सौभाग्यं सपत्नीभ्योधिकसुभगा त्वं पिशुनयति प्रकटयतीत्यर्थः तत्काले लज्जाकरणं ममैव पदलाक्षा साहाय्यप्रणस्य पत्युः शिरसि लग्नेति सखीषु ज्ञापनार्थमेवेत्याशयः कस्मिन् सति दयिते बहुपत्नीके वयस्येन सख्योपहसिते सतीत्यर्थः उपहासकारणमाह लाक्षया पददत्तया अरुणं रक्तं शिरो यस्य तस्मिन्नित्यर्थः बहुयोषितीत्यनेन कस्या लाक्षा भवतीतिसंशयः कथ्यते लज्जानाटनेन तन्निरासः ॥४०४॥

**बन्धनभाजोमुष्याश्चिकुरकलापस्य मुक्तमानस्य ॥**
**सिन्दूरितसीमन्तच्छलेन हृदयं विदीर्णमिव ॥४०५॥**

कश्चिद्वदति बन्धनेति अमुष्याः नायिकायाः चिकुरकलापस्य केशसमूहस्य बन्धनं प्राप्तस्य मुक्तं त्यक्तं मानमल्पप्रमाणं येन तस्य लम्बायमानस्येत्यर्थः सामान्यवाचिनः मानशब्दस्य विशेषेऽल्पप्रमाणे लाक्षणिकत्वात् सिन्दूरितस्य सिन्दूरयुक्तस्य सीमन्तस्य कपटेन हृदयं मध्यभागरूपं विदीर्णं द्विधावलितमेवेत्यर्थः अन्यस्यापि बद्धस्य त्यक्ताभिमानस्य हृदयं विदीर्णं जायते ॥४०५॥

**बलमतिवसति मयीति श्रेष्ठिनि गुरुगद्गदं गदति ॥**
**तज्जायया जनानां मुखमीक्षितमावृतस्मितया ॥४०६॥**

कश्चित्सखायमाह बलमिति मयि बलं सामर्थ्यम् अतिवसति अत्यत्यर्थं वसति अहमतिबलवानित्यर्थः गुरुणा महता गर्व्वेणातिमानेन गद्गदं यथा स्यात्तथेति पूर्वोक्तं श्रेष्ठिनि वणिक्पतौ गदति समीपस्थान् यूनः प्रतारयितुं व्यक्तं वदति सतीत्यर्थः तज्जायया श्रेष्ठिनः पत्न्या जनानां यूनां मुखमीक्षितं दृष्टम् अवृतं प्रथमं व्यक्तीकृत्य पश्चाद्गोपितं मन्दहसितं यया तयेत्यर्थः श्रेष्ठिनस्सामर्थ्यलेशोपि नास्ति तत्समीपगमननिवारणाय प्रतारणां करोति भवद्भिस्सुखेनागन्तव्यमित्याशयः ॥४०६॥

**बलवदनिलोपनीतस्फुटितनवांभोजसौरभो मधुपः ॥**
**प्राकृष्यते नलिन्या नासानिक्षिप्तरज्जुरिव ॥४०७॥**

इदानीमस्य स्त्री युवती संवृत्तेति वक्तुं वारंवारं श्वशुरकुलमागच्छन्तं कञ्चन दृष्ट्वा कश्चित्सखायं प्रत्याह बलवदिति यद्वा प्रबलेन वयस्येन सकलनायिकावैमुख्यं नायकस्य संपाद्य मुग्धाधीनो नायकः कृत इति भवतीनामधुनाऽसाध्योयं नायक इति वक्तुमन्योक्त्या नायिकां प्रति काचिदाह मधुपः भ्रमरः नलिन्या कमलिन्या प्राकृष्यते आलस्यादिपरित्यागेन स्वमात्राभिमुखः क्रियत इत्यर्थः मधुपपदेन मद्यपवाचकेन चित्तविक्षेपो व्यज्यते नेन चाकस्मिकसकल-

नायिकावैमुख्ययोग्यता व्यज्यते प्रशब्देन पूर्व्वनायिकापरिचयलेशोपि नेति गम्यते क इव नायिकाग्रथितरज्जुवृषभ इव अनेन स्वकर्त्तव्यताशून्यत्वं व्यज्यते मधुपः कथम्भूतः बलवान् योऽनिलो वायु स्तेनोपनीतमानीतं स्फुटितानां सद्यो विकशितानां नवाम्भोजानां श्रेष्ठकमलानां सौरभं सुगन्धो यस्य स इत्यर्थः बलवत्पदेन झटिति सौरभानयनं वायुभिः स्वगमने श्रमाधिक्यञ्च व्यज्यते पक्षे सख्युः प्राबल्यं नायिकायां समीचीनयौवनञ्च पूर्व्वार्द्धेन व्यज्यते तथाच सर्व्वथा मुग्धाधीनोयं तवासाध्य इत्याशयः प्रथमपक्षे सर्व्वं स्वयमूहनीयमिति ।। ४०७ ।।

## बाणं हरिरिव कुरुते सुजनो बहुदोषमप्यदोषमिव ॥
## यावद्दोषं जाग्रति मलिन्मुचा इव पुनः पिशुनाः ॥४०८॥

खलसंगमं परित्यज्य सज्जनसमागम एव कर्त्तव्य इति कश्चिदुपदिशति बाण-मिति सुजनः सज्जनः बहुदोषमनेकविधकौटिल्यादिदोषयुतं जनं पक्षे बहुबाहुम् अदोषमेव इवशब्दस्यैवकारार्थत्वात् यद्वाल्पदोषमित्यर्थस्तथैवोपमानसंगतेः बाणमसुरविशेषं कृष्ण इवेत्यर्थः कुरुते करोतीत्यर्थः पिशुनाः खलाः यावद्दोषं यावद्दोषकरणं पक्षे संपूर्णां निशां जाग्रत्युद्यमं कुर्वन्ति पक्षे जागरणमा-चरन्तीत्यर्थः मलिन्मुचा इव चौरा इवेत्यर्थः पुनः निश्चयेन अनन्तदोषशब्दो वि-गुणतावाचकः हलन्तो बाहुवाचकः ।। ४०८ ।।

## बौद्धस्येव क्षणिको यद्यपि बहुवल्लभस्य तव भावः ॥
## भग्नाभग्ना भ्रूरिव नतु तस्या विघटते मैत्री ॥४०९॥

तवापराधेन बहिःकोपवत्यपि मत्सखी त्वयि सस्नेहैव त्वन्तु सर्व्वदा चप-लोसीति नायिकासखी नायकमाह बौद्धस्येति तव नायकस्य भावः मम सख्यां स्नेहः पक्षे द्रव्यादिः क्षणिकः अस्थिरः पक्षे एकक्षणमात्रस्थायीत्यर्थः कथं-भूतस्य तव बह्वी वल्लभा प्रेयसी यस्य तस्येत्यर्थः तासु तव स्नेहो न मम-सख्यामित्याशयः इति यद्यपि तथापि तस्या मम सख्या मैत्री त्वयि प्रेम नतु विघटते नैव हीना भवतीत्यर्थः पूर्व्ववत्तिष्ठतीत्याशयः भग्नाभग्ना वारम्वारं

भग्ना कोपादिना यथापूर्व्वसंस्थितापि कोपशान्तौ पुनस्तथैव तिष्ठति कदापि न-प्रेमभङ्ग इति वा ॥ ४०६ ॥

॥ इतिश्रीसचलविरचिते वकारव्रज्या समाप्ता ॥

**भ्रमसि प्रकटयसि रदं करं प्रसारयसि तृणमपि श्रयसि ॥**
**धिगूमानं तव कुञ्जर जीवं न जुहोषि जठराग्नौ ॥ ४१० ॥**

कश्चिन्महाकुलोत्पन्नं धनादिलोभेन कदर्य्यमनुसरन्तमन्योक्त्या कश्चिदाह भ्रमसीति हेकुञ्जर गज अनेन कुलस्य स्वस्य च महत्वकथनेन भोजनाद्यर्थं पामराश्रयणमत्यनुचितमिति व्यज्यते तत्र मानं प्रमाणमभिमानञ्च धिगित्यर्थः जठराग्नौ उदरगतक्षुधारूपज्वालायां जीवं प्राणं न जुहोषि प्राणत्याग एवैतदपेक्षया श्रेयानित्याशयः भ्रमसि वारंवारं भ्रमणं करोषि रदं दशनं प्रकटयसि स्वाभाविकत्वात् याचनार्थत्वाच्चेत्याशयः करं शुण्डादण्डं हस्तञ्च प्रसारयसि विस्तारयसीत्यर्थः तृणमपि दूर्वादिकमपि तृणतुल्यकदर्य्यमपि श्रयसि अवलम्बसे भजसि चेत्यर्थः तथाच कदर्य्याश्रयणे माननाशमात्रं न तु भोजनमात्रनिर्व्वाहोपीत्याशयः ॥ ४१० ॥

**भूतिमयं कुरुतेऽग्निस्तृणमपि संलग्नमेनमपि भजतः ॥**
**सैव सुवर्ण दशा ते शङ्के गरिमाऽपराधेन ॥४११॥**

अयं प्रभुः पामरजनमेव स्वाश्रितं वर्द्धयति न तु भवादृशं महान्तमिति नायं सेवनयोग्य इति कश्चिदन्योक्त्या कश्चिदाह भूतीति अयमग्निः वह्निः पक्षे तेजस्वी प्रभुः संलग्नं संयुक्तं पक्षे सेवकं तृणमपि तत्तुल्यपामरसेवकमपि भूतिमयं भस्मस्वरूपं पक्षे ऐश्वर्य्यमयमित्यर्थः करोतीत्यर्थः हेसुवर्ण कनक पक्षे उत्कृष्टजाते सकलगुणसम्पन्न ब्राह्मण तव सैव दशाग्निसंयोगात्पूर्व्वं या दशा अग्निसंयोगेपि सैवेत्यर्थः पक्षे दारिद्र्यमेवेत्यर्थः एनं वह्निं प्रभुं च भजतोपीत्यर्थः गरिम्णा बहुमूल्यत्वेन सर्वसिद्धमहत्वेन वापराधेन दोषेणेत्यर्थः इत्याशङ्के मन्ये एतस्य निकटे तुच्छत्वं गुणः गौरवमेव दोष इति नायं महतां सेव्य इत्याशयः ॥ ४११ ॥

**भवति निदाघे दीर्घे यथेह यमुनेव यामिनी तन्वी ॥**
**द्वीपा इव दिवसा अपि तथा क्रमेण प्रथीयांसः ॥ ४१२ ॥**

अस्या नायिकाया ग्रीष्मनिशाया अल्पत्वात्पतिसंभोगपूर्त्तिरेव न जायते कथं तव समागम इति यमुनापरपारद्वीपे दिवसे एवास्याः संभोगो भविष्यति त्वयेति श्रीकृष्णं प्रति दूती वदति भवतीति ग्रीष्मे दीर्घे अधिके सति यथा रात्रिः कृशा इह मथुरायां तथा यमुनापीत्यर्थः यमुनाकृशत्वकथनेन पाद-गम्यत्वसूचनेन द्वीपगमनस्य सुकरत्वं व्यज्यते ग्रीष्माधिक्यकथनेन द्वीपस्य सुखदत्वं व्यज्यते तथा दिवसा दिनानि द्वीपा इवान्तरीयप्रदेशा इव क्रमेण दिने दिने प्रथीयांसः महान्त इत्यर्थः द्वीपस्य महत्वकथनेन संकेतस्थलस्य निम्नो-न्नतस्य प्राचूर्य्यं दिवसस्य महत्वकथनेन सावकाशत्वं यथेष्टसुरतयोग्यत्वं च व्यज्यते यमुना निशाया द्वीपो दिनस्योपमानं ग्रीष्मनिशाशेषेऽतृप्तो नायको नायिकामाहेत्येके नायिका नायकमाहेत्यपरे द्वीपोस्त्रियामन्तरीपमित्यमरः ॥४१२॥

**भवता महति स्नेहानलेऽर्प्पिता पथिक हेमगुटिकेव ॥**
**तन्वी हस्तेनापि स्प्रष्टुमशुद्धैर्न्न सा शक्या ॥ ४१३ ॥**

रक्षकविहीनां गृहस्थितां युवतीं पत्नीं चिन्तयन्तं वैदेशिकं सखाश्वासयति भवतेति हेपथिक सा तव विरहेण तन्वी कृशा अशुद्धैः पारदारिकैः दुष्टचित्तैः जनैः हस्तेन करेण स्प्रष्टुमपि न शक्या का कथा चुम्बनालिङ्गनादेरित्याशयः हेमगुटिकेव सुवर्णमाष इवेत्यर्थः भवता स्नेहस्य विरहे दाहकत्वेनानलत्वं स्नेहाग्नौ रोपितेत्यर्थः पक्षे घृते गव्येऽग्नौ दत्तेत्यर्थः तथाच यथा चौरादिभिः घृतकाञ्च-नादि ग्रहणं न कर्त्तुं शक्यते तथा त्वदेकशरणा सा केनापि स्प्रष्टुमपि न शक्यते इति त्वया शीघ्रमेव चलनीयमित्याशयः ॥ ४१३ ॥

**भूमिलुलितैककुण्डलमुत्तम्भितकाण्डपटमियं मुग्धा ॥**
**पश्यन्ती निश्वासैः क्षिपति मनो रेणुपूरमिव ॥ ४१४ ॥**

अन्तःपुरस्थः कश्चित्कञ्चिदाह भूमीति इयमवरोधवधूः अस्मान्

यूनः पश्यन्ती स्वकीयं मनः क्षिपति प्रेरयतीत्यर्थः मनसैवास्मदालिङ्गनचुम्बनादिकं करोतीत्यर्थः कैः निश्वासैः श्वासाधिक्येनैवं ज्ञायते इत्याशयः रेणुपूरमिव निश्वासक्षिप्तधूलिसमूहमिवेत्यर्थः रेणुपूरपदाभ्यां विकारित्वेन मनसः नानात्वं चपलत्वं सुगमसाध्यत्वादि च व्यज्यते यद्वा अस्मन्मनः रेणुपूरमिव आकाशस्थितमिवोन्मादभीतिशालित्वेन विचित्रमिवेत्यर्थः भूमौ न तु शय्यायां लुलितं प्राप्तमेकं कुण्डलं यथा स्यात्तथेत्यर्थः उत्तंभितमुत्तोलितं काण्डपटं कडवारेति मैथिलभाषया प्रसिद्धं यथा स्यात्तथेत्यर्थः ॥ ४१४ ॥

**भवतालिङ्गि भुजङ्गी जातः कुलभोगिचक्रवर्त्ती त्वम् ॥**
**कंचुकवनेचरीस्तनमभिलषतः स्फुरति लघिमा ते ॥ ४१५ ॥**

खण्डिता नायिका नायकमाह भवतेति भुजङ्गी खिड्गस्त्री पक्षे सर्पी भवता आलिङ्गि आलिङ्गिता यतः अत एव भोगिनामनेकस्त्रीभोगकर्तॄणां मध्ये चक्रवर्त्ती महाराजः त्वं संवृत्त इत्यर्थः पक्षे भोगी चासौ चक्रवर्ती चेति द्वंद्वः तत्र चक्रं चक्राकारं वर्त्तयति करोतीति व्युत्पत्या चक्राकारेणोपवेशनकर्त्तेत्यर्थः कञ्चुकवनेचर्य्याः कञ्चुकपरिधानशीलाया जरत्याः निपतितस्तनायास्तनमभिलषतस्तनान्वेषणं कुर्व्वतः लघिमा लाघवं स्फुरति प्रकटो भवतीत्यर्थः गलितस्तनगोपनार्थमेव कञ्चुकपरिधानं तया कृतं त्वन्तु तदेवोद्घटयसीत्यर्थः पशुरूपसि स्पर्शयोग्योपि न भवसीति समुदायार्थः ॥ ४१५ ॥

**भैक्षभुजा पल्लीपतिरिति स्तुतस्तद्वधूसुदृष्टेन ॥**
**रक्षक जयसि यदेकः शून्ये सुरसदसि सुखमस्मि ॥ ४१६ ॥**

पल्लीपतिवधूः भिक्षुकासक्तेति कश्चित्कञ्चिदाह भैक्षेति भैक्षभुजा भिक्षुकेण भिक्षितान्नभोजनकर्त्रा वेत्यर्थः अनेन सर्व्वदा गमनागमनेपि अनाशङ्कनीयत्वम् एकाकित्वेन अन्यावेद्यत्वं च व्यज्यते पल्लीपतिः कुग्रामपतिः चातुर्य्यशून्यः इति वक्ष्यमाणप्रकारेण स्तुतः गुणारोपविषयः कृत इत्यर्थः स्तुतौ हेतुमाह तद्वध्वा पल्लीपतिस्त्रिया सुदृष्टेन सकामया दृष्टेनेत्यर्थः स्तुतिप्रकारमाह रक्षक ननु भोक्ता जयसि सर्वपल्लीपतिभ्यः अधिकोसीत्यर्थः यद्यस्मादेकः द्वितीय-

रहितः अतः शून्ये जनरहिते सुरसदसि देवसभास्थले पूर्व्वं पल्लीपतिना यज्ञार्थं देवसभा कृता यत्र तत्र देवविसर्ज्जनात् शून्ये अहं सुखं तिष्ठामीत्यर्थः सुरसदसि देवगृहे इत्यर्थः सम्यगेव यदि सदः शब्दस्य गृहवाचकत्वं प्रामाणिकं तथाच त्वया रक्षितोहं चौराद्युपद्रवरहिता तिष्ठामीति स्तुतिः अथ चायं पशुः सुरतासमर्थः मया भिक्षाछलेन प्रत्यहमागम्यते त्वयापि देवरदर्शनछलेनागन्तव्यं मम स्थलमिति प्रतिदिनं समागमो भविष्यतीति पल्लीपतिवधूस्तुतिच्छलेन भिक्षुः कथयतीतिवाक्यार्थः केचित्तु सुरसदसि देवसभायामनेकजनसंकुलयज्ञस्थले एवेति यावत् पल्लीपतिः भैक्षभुजा स्तुत इति योजना अहं शून्ये सुखमस्मीत्यर्थः इत्याहुः ॥ ४१६ ॥

**भोगाक्षमस्य रक्षां दृग्मात्रेणैव कुर्व्वतोऽनभिमुखस्य ॥**
**वृद्धस्य प्रमदापि श्रीरपि भृत्यस्य भोगाय ॥ ४१७ ॥**

जातिवर्णनमाह भोगेति वृद्धस्य जरत्तरस्य प्रमदा उन्मत्ता नतु कुलीना स्त्री श्रीः लक्ष्मीः अपि द्वयं प्रमदाभोक्तुरेव श्रीभोगः श्रीभोक्तुरेव प्रमदाभोगः नान्यस्येति समुच्चयद्वयं वदति भृत्यस्य परिचारकस्य प्रतिनिधेश्चेत्यर्थः उपभोगाय सुरतायोपयोगाय चेत्यर्थः किंभूतस्य भोगाक्षमस्य सुरतभोजनपरिधानपानाद्ययुक्तस्य दृङ्मात्रेण नतु क्रियया रक्षां रक्षणबुद्धिं नतु रक्षामित्यर्थः कुर्व्वतः अतिमुग्धस्य मोहप्राप्तस्येत्यर्थः ॥ ४१७ ॥

**भवितासि रजनि यस्यामध्वश्रमशान्तये पदं दधतीम् ॥**
**स बलाद्वलयितजंघाबद्धां मामुरसि पातयति ॥४१८॥**

विरहिणी नायिका दुःखदात्रीं निशामुपालभते भवितासीति हे निशे भविष्यसि का कत्र नेत्यर्थः यस्यां वेलायामित्यर्थः स्वामी विदेशादागतः प्रियः मामुरसि वक्षःस्थले पातयति पातयिष्यतीत्यर्थः किंभूतां माम् अध्वनः मार्गस्य श्रमशान्तये परिश्रमापनोदनार्थं पदं प्रियचरणं दधतीं संवाहयन्तीमित्यर्थः पुनः किंभूतां बलाद्वलयितया वक्रया जङ्घया बद्धाम् आकृष्टामित्यर्थः ॥४१८॥

**भूषणतां भजतः सखि कषणविशुद्धस्य जातरूपस्य ॥**
**पुरुषस्य च कनकस्य च युक्तो गरिमा सरागस्य ॥४१९॥**

तव नायकः साभिमान इति निन्दापरां सखीं सख्याह भूषणतामिति पुरुषस्य भूषणतां वंशप्रतिष्ठाकारकत्वं कनकस्यालङ्करणतां प्राप्तस्येत्यर्थः हे सखि कषणे स्वभावपरीक्षायां विशुद्धस्य सर्वोत्तमस्वभावस्येत्यर्थः पक्षे कषणे हेमपरीक्षापाषाणे विशुद्धस्य जाम्बूनदादिरूपस्येत्यर्थः जातं श्रेष्ठं रूपं स्वरूपं यस्य तस्येत्यर्थः अतिसुन्दरस्येति यावत् पक्षे जातरूपनामकस्य सरागस्यानुरागसहितस्य पक्षे लोहितस्य गरिमा गुरुत्वं पक्षे बहुमूल्यत्वं युक्तमुचितमित्यर्थः तथा चास्य सर्वोत्तमत्वं कनकस्येव न तु काल्पनिकं वृथा निन्दां करोषीत्याशयः ॥ ४१९॥

**भस्मपरुषेपि गिरिशे स्नेहमयी त्वमुचितेन सुभगासि ॥**
**मोघस्त्वयि जनवादो यदोषधिप्रस्थदुहितेति ॥४२०॥**

नायकाभिमानखिन्नां नायिकां सर्वोत्तमस्यास्य नायकस्याभिमानः सोढ़-एवेति वक्तुं दूती सख्याहेति वा स्ववैदग्ध्यापनाय नायकान्तरप्रेमो दूती काश्चिद्विदग्धां नायिकां काचिदन्योक्त्या वदति भस्मेति भस्मना परुषे निन्दिते गिरिशे नागरत्यागिनि पर्वतशयनशीले शिवे इत्यर्थः स्नेहमयी प्रेममयी त्वमुचितेन योग्येन सुभगासि सौभाग्यवत्यसीत्यर्थः यद्यस्माद्धेतोः त्वमोषधिप्रस्थस्य हिमवतः दुहिता कन्यका यौषधमयगिरिसुता तस्या नानारसायनभस्ममये पर्वतशयनशीले प्रेमयुक्तमेवेत्याशयः इतिहेतोस्त्वयि जनवादः अवैदग्ध्यपरिवादः अनुचितकारि-णीयमितिपरिवाद इति यावत् मोघः वृथेत्यर्थः तथाचायमेव नायकः सुरतयोग्यो नतु नायकान्तरं कर्त्तव्यमित्याशयः यद्यौषधिप्रस्थदुहिताऽचतुरात्वमिति जन-वादो मोघ इत्यन्वयः ॥४२०॥

**भयपिहितं बालायाः पीवरमूरुद्वयं स्मरोन्निद्रः ॥**
**निद्रायाम्प्रेमार्द्रः पश्यति निश्वस्य निश्वस्य ॥४२१॥**

भयपिहितमिति बालाया मुग्धायाः पीवरं पुष्टम् ऊरुद्वयं भयेन पतिकृतरतभयेन

विहितं योजितं गोपितं वा निद्रायां सत्यां स्मरोन्निद्रः कन्दर्पकृतजागरः रत्या-भावादित्याशयः प्रेम्ना भविष्यद्रताशयास्निग्ध इत्यर्थः कामातुरत्वेन निश्वस्य निश्वस्य पश्यति प्रेम्ना बलात्कारं न करोति कामातुरतया न निद्रातीति जाति-वर्णनमेतत् ॥४२१॥

भ्रमरीव कोशगर्भे गन्धहृताकुसुममनुसरन्ती त्वाम् ॥
अव्यक्तं कूजन्ती सङ्केतं तमसि सा भ्रमति ॥४२२॥

दूती नायकमाह भ्रमरीति सा नायिका त्वामनुसरन्ती अभिसरन्ती त्वामुद्दिश्य गच्छन्तीत्यर्थः अव्यक्तं वर्णोच्चारणरहितं यथा स्यात्तथा कूजन्ती शब्द-विशेषमुच्चारयन्ती तव परिज्ञानार्थमित्याशयः संकेतस्थानं त्वत्संगमाय मया दत्तं निशि रात्रौ तमसीतिपाठः सम्यक् उषःकाले सायंकाले वेति तदर्थः भ्रमति त्वदर्थं बहुधा यातीत्यर्थः किंभूता गन्धेन त्वद्विषयकप्रेमसम्बन्धेन कृता कर्षिता पक्षे सौर-भेनाकृष्टेत्यर्थः कोषमध्यस्थकुसुममन्वेषयन्ती भ्रमरी वेत्यर्थः अनेनान्याश्रितत्वेन कुसुमस्य यथा दौर्ल्लभ्यं तथान्यनायिकासक्तत्वेन त्वमपि दुर्लभ इत्यनुचितमित्या-वेद्यते तेन संकेतं प्रत्यवश्यं चलनीयमिति कथ्यते तेनापि नायके भाग्यवत्त्वादि व्यज्यते गन्धो लेशे तथा मोदे गन्धः सम्बन्धमात्रके इतिविश्वः ॥४२२॥

भ्रामं भ्रामं स्थितया स्नेहे तव पयसि तत्र तत्रैव ॥
आवर्त्तपतितनौकायितमनया विनयमपनीय ॥४२३॥

मम सख्या सर्व्वं परित्यज्य त्वदेकानुसरणं कृतं त्वन्तु कौटिल्यं कथमपि न त्यजसीति कापि नायकमाह भ्रामं भ्राममिति तव स्नेहे कुटिलप्रेम्णि पयसि जल-रूपे आवर्त्तशालित्वेन जलसाम्यं स्नेहस्य यत्र यत्रावर्त्ते त्वं तां पातयसि तत्र तत्रैव भ्रामं भ्रामं स्थितयाऽनया विनयं कुलधर्म्मं परित्यज्यावर्त्ते जलभ्रमे पतिता या नौका तद्वदाचरितमावर्त्तपतितनौकेव मम सखी जातेति वाक्यार्थः तथाच स्वाधीनायां नायिकायां कौटिल्यमनुचितमित्याशयः ॥४२३॥

भ्रमयसि गुणमयि कण्ठग्रहयोग्यानात्ममन्दिरोपान्ते ॥
हालिकनन्दिनि तरुणान्ककुद्मिनो मेधिरज्जुरिव ॥४२४॥

समीचीनं तव यौवनं दृष्ट्वा यथा सर्वे सश्लाघास्तथाहमपीति कश्चिदाह भ्रमयसीति हे गुणमयि सौन्दर्य्ययौवनादिगुणयुक्ते पक्षे बन्धनमपि आत्मीयग्रहसमीपे तरुणान् यूनः पक्षे नवान् कण्ठग्रहे आलिङ्गने पक्षे गलरज्जुबन्धने योग्यान् कालिकानन्दकारिणि हलिकतनये इत्यर्थः मेधिरज्जुः खलेदारुदाम ककुद्मिनः ककुच्छालिनो वृषभानिवेत्यर्थः मेधितुल्यता नायिकायाः रज्जुतुल्यता गुणानां वृषतुल्यता यूनां तथाच युवसमूहवतमय्यपि कृपां कुर्विति वाक्यार्थः स्वरूपवर्णनमेतदित्येके ॥४२४॥

भालनयनेऽग्निरिन्दुर्म्मौलौ गात्रे भुजङ्गमणिदीपाः ॥
तदपि तमोमय एव त्वमीश कः प्रकृतिमतिशेते ॥४२५॥

स्वभावात्कदर्य्यं महाप्रभुमन्योक्त्या कश्चिन्निन्दति भालेति हे ईश सकलसम्पदधीश्वर शिव यद्यपि तव ललाटलोचनगोलकेऽग्निर्व्वह्निरस्तीतिशेषः मौलिदेशे चन्द्रः गात्रे शरीरे सर्प्पमणिदीपाः सन्तीति विपरिणामेनान्वयः तदपि अन्धकाराभावकारणे विद्यमानेपि त्वं तमोमय एव अन्धकारमय एव अथच शिवस्तमोगुणमय एव भवति अत एव संहर्त्ता अतः प्रकृतिं प्रधानं स्वभावं वा कः अतिशेतेऽतिक्रमति न कोपीत्यर्थः अथच यथा शिवस्य न स्वभावभेदः तथा तवापि स्वभावात् कदर्य्यता न गतेत्याशयः ॥४२५॥

॥ भकारव्रज्या समाप्ता ॥

मधुमदवीतव्रीडा यथा यथा लपति सम्मुखं बाला ॥
तन्मुखमजाततृप्तिस्तथा तथा वल्लभः पिबति ॥४२६॥

अतः परं त्वया मुग्धाद्वेषो न कर्त्तव्य इति वक्तुं मुग्धा सखी मुग्धासपत्नीं गृहिणीं प्रति वदति मध्विति मद्यपानमदेन वीता गता लज्जा यस्याः सा बाला यथा यथा संमुखं स्यात्तथा लपति वदति तथा तथा वल्लभस्तव प्रेयान्

त्वन्मुखमेव पिबति नतु बालामुखमित्यर्थः न जाता तृप्तिर्यस्य स इत्यर्थः मदमत्तालापिबालामुखदर्शनेनोन्मत्तः युवतां त्वामेव चुम्बतीति बाला तव कार्य्यकारिणी न द्वेष्येत्याशयः यद्वा जरती त्वं वृथामुखचुम्बनं कारयसि नायकस्य बालाचुम्बनंविना न तृप्तिरित्यर्थः बालां दृष्ट्वा सकामो नायको नतु त्वामिति निर्ल्लज्जासीनिगृहिणीसख्युक्तिः ॥४२६॥

**मित्रैरालोच्य समं गुरु कृत्वा कदनमपि समारब्धः ॥**
**अर्थः सतामिव हतो मुखवैलक्ष्येण मानोऽयम् ॥४२७॥**

सखी नायिकामाह मित्रैरिति अयं तव कोपं विना गौरवेक्षणायास्माभिर्बलात्कारित इत्यर्थः मानः कोपः हतः निरर्थको जातः काल्पनिकोयमन्यकारितो न वास्तव इति नायकेनापि ज्ञात इत्यर्थः केन हत इत्यतः कारणमाह मुखवैलक्ष्येणेति तव मुखस्य यत् वैलक्ष्यं सम्भोगविलम्बेन मुखमालिन्यं तेनेत्यर्थः पक्षे प्रभोर्म्मुखमालिन्यमित्यर्थः मानः किंभूतःमित्रैः सखीजनैः पक्षे आप्तराजपुरुषैरित्यर्थः सममेककालमालोच्य विचार्य गुरु बृहत् कदनं कलहमपि कृत्वा समारब्धः सतां सज्जनानामर्थः प्रयोजनमिवेत्यर्थः तथाच यथा प्रभोर्न्निकटे बहुभिः कर्त्तुमारब्धस्सतामर्थः प्रभुमुखवैवर्ण्यमात्रेण हतस्तथा तव मानोपीत्याशयः ॥४२७॥

**मम रागिणो मनस्विनि करमर्प्पयतो ददासि पृष्ठमपि ॥**
**यदि तदपि कमलबन्धोरिव मन्ये स्वस्य सौभाग्यम् ॥४२८॥**

नायको मानिनीमाह ममेति हेमनस्विनि मम रागिणोऽनुरागवतः पक्षे लोहितस्य प्रातःकालीनत्वात् करं मानापनोदकमलङ्करणं हस्तं वा पक्षे किरणं ददतः योजयतश्च यदि पृष्ठमपि पक्षे भोगवैमुख्यं वा ददासि तदपि तथापि स्वस्यात्मनः सौभाग्यं सुभगत्वं कमलबन्धोः सूर्यस्येव मन्ये ॥४२८॥

**मा स्पृश मामिति सकुपितमिव भणितं व्यञ्जिता न च व्रीडा ॥**
**आलिङ्गितया सस्मितमुक्तमनाचार किं कुरुषे ॥४२९॥**

कश्चित्सखायमाह मेति मा मा स्पृश मम स्पर्शं मा कुर्व्विति सकोपमिव कथितं व्रीडा लज्जा न व्यञ्जिता भणितव्यञ्जितपदाभ्यां सुरतलोभार्थं रजोयोगगोपनमिति व्यज्यते कुपितेतिभ्रमान्मया आलिङ्गितया सस्मितं प्रतारितोऽसीति कृतस्मितं यथा स्यात्तथा हेऽनाचार रजोयोगशालिन्याः स्नानात्पूर्व्वमेव रतप्रवृत्तेत्यर्थः किं कुरुषे इत्युक्तमित्यर्थः तदपि रते वैमुख्यं नास्या इत्याशयः ॥४२९॥

**मूलानि च निचुलानां हृदयानि च कूलवसतिकुलटानाम् ॥**
**मुदिरमदिराप्रदत्ता गोदावरि किं विदारयसि ॥४३०॥**

ऐश्वर्येण प्रतिवेशिनीमनपराधां भ्रामयन्तीं काचिदन्योक्त्या वदति मूलानीति हे गोदावरि नदि निचुलानामिज्जलानां मूलानि च कूले तटे वसतिर्यासां तासां कुलटानां पुंश्चलीनां हृदयानि च किं विदारयसि उत्खनसि विदीर्णं करोषि चेत्यर्थः कूलवसतीत्यनेन स्थलान्तराभावः कुलटापदेन स्वधर्मरक्षणशालित्वं तेनानुग्राह्यत्वादि व्यज्यते चकारद्वयेन समुच्चयवाचकेन मूलहृदययोरभेदकथनेनैकविदारणेनोभयविदारणसंपत्तिः सूच्यते हृदयानि हीति पाठे हितः निश्चितं वेत्यर्थः मुदिर एव मेघ एव मदिरा तया प्रमत्ता चातुर्म्मास्यप्रवृद्धेत्यर्थः अनेन आकस्मिकसामर्थ्यं सूच्यते घनजीमूतमुदिरेत्यमरः ॥४३०॥

**मलयद्रुमसाराणामिव धीराणां गुणप्रकर्षोऽपि ॥**
**जडसमयनिपतितानामनादरायैव न गुणाय ॥४३१॥**

विज्ञस्यापि प्रभोः पण्डितेनापि भण्डनर्त्तकासमये दर्शनं कर्त्तव्यमित्याशयः हे मलयेति धीराणां पण्डितानां गुणप्रकर्षोऽपि विद्यादिगुणसमूहोऽपि अपिना दोषस्य का कथेति व्यज्यते यद्वा धीराणामपीत्यन्वयः अधीराणां का कथेत्याशयः पक्षे शैत्यसौगन्ध्यादिकमपीत्यर्थः जडानां भण्डनर्त्तकादीनां समये अवसरे निपतितानामागतानामित्यर्थः पक्षे शीतकालनिपतितानामित्यर्थः अनादरायैव अवहेलार्थमेव न गुणाय नोत्कर्षायेत्यर्थः मलयद्रुमसाराणां श्रीखण्डचन्दनानामिवेत्यर्थः ॥४३१॥

मधुमथनमौलिमाले सखि तुलसि तुलयसि किं मुधा राधाम्।
यत्तव पदमदसीयं सुरभयितुं सौरभोद्भेदः ॥४३२॥

सौभाग्यं मानिनीं काञ्चित् नव सपत्नीसादृश्यं नेत्यन्योक्त्या काचिदाह मधिवति हे तुलसि मधुमथनस्य कृष्णस्य मौलौ मस्तके मालारूपास्मीति हेतोः राधां तुलयसि सदृशीं मन्यसे किं वृथेत्यर्थः यद्यस्माद्धेतोः नव तुल्यस्योः सौरभोद्भेदः सौगन्ध्यसमूहः अदसीयं वाधासंवद्धि पदं चरणं सुरभयितुं सुगन्धीकर्त्तुमित्यर्थः मानापनोदनार्थं राधाचरणनिपतिते कृष्णे तवापि राधापदनिपातात् एवञ्च सपत्नीपदपतितायाः किं सौभाग्यमित्याशयः ॥४३२॥

मयि यास्यति कृत्वावधिदिनसंख्यं चुम्बनं तथाश्लेषम्।
प्रिययानुशोचिता सा तावत्सुरतात्तमा रजनी ॥४३३॥

× × × × ×

मृगमदनिदानमटवी कुंकुममपि कृषकवाटिका वहति॥
हट्टविलासिनि भवती परमेका पौरसर्व्वस्वम् ॥४३४॥

कश्चित्पथिकः स्वल्पहट्टाशालिनगरं सायमागतः तत्र काञ्चिद्वणिग्वधूं यौवनोद्धतां सुन्दरीं चपलां क्रयविक्रयकारिणीं दृष्ट्वा सकामः तस्या हट्टास्थितसिन्दूरान्योक्त्या तामाह मृगेति मृगमदस्य कस्तूरिकाया या निदानमादिकारणमटवी वनं नात्र कस्तूरिकेत्यर्थः अथच पद्मिनी कापि नायिका नास्तीत्यर्थः कुंकुममपि कास्मीरजन्मकृषकस्य वाटिका उपवनं वहति तादृशगौराङ्गी कापि नास्तीति भावः हे हट्टविलासिनि हट्टे विलासः प्रकाशो यस्यास्तत्सम्बोधने सिन्दूराभिधे वणिक्प्रेयसि चेत्यर्थः परं केवलमेका मुख्या भवती पौराणामन्यत आचेतनागरिकाणां मादृशां सर्वस्वं सर्व्वथा सुखदात्री भवत्येव नान्येत्यर्थः तथा च मम रात्रौ त्वमेव शरणमित्याशयः कस्तूरिका मृगमद इति कुंकुमं कास्मीरजन्मगति कृषकश्च कृषीवल इति च कोषाः हट्टविलासिनीति यौगिकं सिंदूरवाचकं भाषादौ क्वचित् प्रसिद्धमिति ॥४३४॥

**मधुदिवसेषु भ्राम्यन्यथा यथा विशति मानसं भ्रमरः ॥**
**सखि लोहकण्टकनिभस्तथा तथा मदनविशिखोपि ॥४३५॥**

वसन्ते काचिद्विरहिणी सखीमाह मध्विति हे सखि मधुदिवसेषु वसन्तदिनेषु भ्राम्यन् भ्रमणं कुर्व्वन् यथा यथा क्रमेण भ्रमरः मधुपः मानसं फुल्लकमलं मानससरोवरं पक्षे हृदयं विशति प्रविशति तेन तेन क्रमेण स्मरशरोपि लोहकसदृशः विशतीति पूर्व्वेणान्वयः पुष्पमयोपि मदनशरः वसन्ते लोहकण्टकवत् हृदयं विदारयत्यतो यथा प्रेयानायाति विदेशात्तथा कुर्व्विति श्लोकार्थः मानसं हृदयं सर इति विश्वः ॥४३५॥

**मयि चलिते तव मुक्ता दृशः सुताराः प्रिये सुपानीयाः ॥**
**सत्यमशून्याः सद्यः प्रयान्ति मम हृदयहारत्वम् ॥४३६॥**

तव प्रेमनिबद्धः कुत्रापि गन्तुं न शक्नोतीति नायको नायिकामाह मयीति हे प्रिये तव दृशः नयनस्य मयि चलिते चलितुमुद्यते आदिकर्मणि क्तः मुक्ता मौक्तिकतुल्याः अश्रुबिन्दुपरम्पराः सुताराः सुविशुद्धाः सुपानीयाः सुन्दरजलमय्यः सपनीया इति क्वचित्पाठः पानीयसहिता इति तदर्थः अशून्याः तव हृदयसंबन्धाभावशून्याः तव हृदयसंबद्धा एवेति यावत् सत्यं निश्चितं मम हृदयहारत्वं मम हृदयेपि हारालङ्करणत्वं प्रयान्ति गच्छन्तीत्यर्थः तव हृदयहारसम्पत्त्यैव मम हृदयहारा भवन्तीति विरोधः अथच मम हृदयहरणाक्षमत्वं गमनानभिमुखत्वं संपादयन्तीत्यर्थः यद्वा मुक्ता इति दृश इति च द्वयमपि प्रथमाबहुवचनं सुताराः सुविशुद्धाःसुन्दराक्षिकनीनिकाश्च सुपानीयाः समीचीनकान्तयः पानीयशब्देन कान्तिविशेष उच्यते सजलाश्चाशून्याः तव हृदयसंबद्धाः शून्याख्यदृष्टिभिन्ना इत्यर्थः मुक्ताः हारसंस्थाः दृशश्च मम हृदयक्षमत्वं प्रयान्तीत्यर्थः तथाच तव हारस्था मुक्ताः लोचनानि च प्रयाणसमये दृष्ट्वा निवृत्तो भवामीत्यर्थः दृश इति बहुवचनं व्यापारबाहुल्येन ॥४३६॥

**मुग्धे मम मनसि शराः स्मरस्य पञ्चापि सन्ततं लग्नाः ॥**
**शङ्के स्तनगुटिकाद्वयमर्प्पितमेतेन तव हृदये ॥४३७॥**

नायको नायिकामाह मुग्धे इति हे मुग्धे बाले मम हृदये शराः मदनस्य पश्चापि लग्नाः सर्वदा तिष्ठन्तीत्यर्थः इति शङ्के मन्ये स्तनगुटिकाद्वयमेतेन मदनेन तव वक्षसि दत्तमित्यर्थः शराभावात् गुटिका क्षिप्तेत्यर्थः तथाच तव गुटिकाकारस्तनं दृष्ट्वा खिन्नोऽस्मि तच्छान्तिं कुर्व्वित्ति वाक्यार्थः ॥४३७॥

**मधुमथनवदनविनिहितवंशीसुषिरानुसारिणो रागाः ॥**
**हन्त हरन्ति मनो मम नलिकाविशिखाः स्मरस्येव ॥४३८॥**

कृष्णे मनो मम लग्नमनस्त्वया तन्मिलनं कारयितव्यमिति काचिद्दूतीमाह मधुमथनेति कृष्णमुखलग्नवंशीरवस्य रागाः स्वरविशेषाः हन्त खेदे मनो मम हरन्ति सविकारं कुर्व्वन्तीत्यर्थः नलिकाविशिखाः शरविशेषाः कन्दर्पस्येवेत्यर्थः ॥४३८॥

**महतोः सुवृत्तयोः सखि हृदयग्रहयोग्ययोः समुच्छ्रितयोः ॥**
**सज्जनयोः स्तनयोरपि निरन्तरं सङ्गतं भवति ॥४३९॥**

जरत्तरं पतिमुपेक्ष्य जातिरूपयौवनादिना सदृशमुपपतिं मया नीतं कुर्व्विति दूतीं नायिकामाह महतोरिति वस्तुतस्तु समुचितेन पत्या दिवानिशं रतसुखमनुभवन्त्यास्तव वृद्धिं दृष्ट्वा ममाप्यतीवसौख्यमिति सखीकृतपरिहासः सखीं प्रति वाक्यार्थः महतोः महाकुलसंभूतयोः महापरिमाणयोः सुवृत्तयोः समीचीनवृत्तान्तयोः वर्त्तुलाकारयोः हे सखि हृदये मनसि वक्षःस्थले च ग्रहीतुं धर्त्तुं स्थापयितुं योग्ययोरुचितयोरित्यर्थः समुच्छ्रितयोः उन्नतचेतसोः सज्जनौ सज्जनश्च सज्जनौ तयोस्सदृशनायकयोः कुचयोरपि निरन्तरं यावज्जीवमनवरतञ्च सङ्गतं सम्बन्धः सुरतं च भवतीत्यर्थः ॥ ४३९ ॥

**मम वारितस्य बहुभिर्भूयो भूयः स्वयञ्च भावयतः ॥**
**जातो दिशीव तस्यां सखे न विनिवर्त्तते मोहः ॥४४०॥**

समीचीनेयमिति भ्रमेण कुलटायामासक्तः पश्चाद्बुद्ध्वा स्वमनस्तापं वयस्यं प्रति कश्चिदाह ममेति बहुभिर्म्मित्रवर्गैः पक्षे पथिकगणैः वारितस्य नेयं स्पर्श-

ग्रंथयापि समीचीनानामिति कृतनिवारणस्येत्यर्थः पक्षे नेयं प्राचीत्यादिकृतनिवा रणस्येत्यर्थः भूयो भूयः वारंवारमित्युभयान्वयि स्वयमपि भावयतः विचारयतः अनेन ममैव दोषो नान्येषामिति सूच्यते पक्षे सूर्य्यदर्शनादिना विचारयतः हे सखे तस्यां कुलटायां जात उत्पन्नः मोहः अविद्या समीचीनेयमिति भ्रम इति यावत् पक्षे प्रतीच्यां प्राचीति भ्रम इत्यर्थः निवृत्तो न भवतीत्यर्थः दिशीव तथाच तस्या वश्यादिकरणमन्त्रेण ममावस्थेयं तत्प्रतीकारं त्वमेव कुर्व्विति वाक्यार्थः मोहो मूर्च्छाप्यविद्या चेति विश्वः ॥ ४४० ॥

## मग्नोसि नर्म्मदाया रसे हृतो वीचिलोचनक्षेपैः ॥
## यद्युच्यसे तरुवर भ्रष्टो भ्रंशोऽपि ते श्लाघ्यः ॥४४१॥

वारवधूरत्नसंभोगकारिणं कञ्चन द्विजवरं किं जातमेतदिति पश्चाद्विषा- दन्तं वेश्यागृहस्थितमेव दृष्ट्वान्योक्त्या पूर्व्वपरिचितः कश्चिदाह मग्न इति नर्मदाया रेवायाः पक्षे सुखदायाः रसे जले पक्षे शृङ्गारे रसे मग्नः निमग्नः पक्षे तदेकप्रवण इत्यर्थः असि तिष्ठसि वीचिः तरङ्ग एव लोचनं तस्य क्षेपैः प्रेरणैः हृतः चालित इत्यर्थः पक्षे स्वाभिमुखः कृत इत्यर्थः असीतिपूर्व्वेणान्वितं हे तरुवर रेवा- तीरवृक्षराज पक्षे सकलश्रेष्ठज्ञाने ब्राह्मण भ्रष्टः मूलस्खलनेन पतितः पक्षे जाति- भ्रष्टः यद्युच्यसे जनैःकथ्यसे तदा एताद्दशस्य तव भ्रंशोपि पतनमपि पक्षे वेश्या- रत्नसमागमोपि श्लाघ्यः श्लाघनीयः नर्म्मदायां शरीरपातेन स्थावरस्यापि ते सद्गतिर्भविष्यति पक्षे श्लाघ्यः सकलकामिपुरुषसंमत इत्यर्थः तथा च स्वर्गे यथा जातिनियममनादृत्यैर्व्वेश्यादिसुखमनुभवन्ति पुण्यभाजो जनास्तथा त्वमि- हैव मर्त्ये स्वर्गसुखमनुभवसि किं जात्येति वैदेशिकोक्तिः ॥ ४४१ ॥

## मेनामुल्लासयति स्मेरयति हरिं गिरिश्च विमुखयति ॥
## कृतकरबन्धविलम्बः परिणयने गिरिशकरकम्पः ॥४४२॥

साक्षात्स्वस्य प्रयोजनविरहेपि समदने एव पुंसि स्वभावाद्वामलोचनानुराग- इति कश्चित् कञ्चिदुपदिशति मेनामिति यद्वा विवाहादौ मदनविकारेण न दोष- इत्यत्र शिष्टाचारं प्रमाणं कश्चिदाह परिणयने विवाहे हरकरकम्पः सात्विकभाव-

रूरः कृतः करबन्धे हस्तकङ्कणबन्धे विलम्बो येन तादृश इत्यर्थः मेनां हिमालयपत्नीं मदनदाहचिन्तितामुल्लासयति आनन्दयति जीवति कामः कथमन्यथा शिवस्य सकामस्य कम्प इति नायं वृद्धः शिव इत्युल्लासहेतुः हरिं स्मेरयति ईषद्धसितं करोति मदनदाहकोपि स्त्रीजनमनोहरणाय सकामो हर इति धूर्त्तोयमिति हास्यहेतुः गिरिं हिमालयं विमुखयति लज्जयेत्यर्थः ॥ ४४२ ॥

मधुगन्धि घर्मताम्यत्तिलकं स्खलदुक्तिघूर्णदरुणाक्षम् ॥
तस्याः कदाधरामृतमाननमवधूय पस्यामि ॥ ४४३ ॥

वैदेशिकः कश्चिन्मद्यपानकालीनं स्वस्त्रीमुखं स्मरन्नाह मधिवति तस्याः कदाचिन्मद्यपानकालीनमाननं मुखं कंपयित्वा अधरस्थं मधुरं पास्यामीत्यर्थः आननं किं भूतं मद्यगन्धि तथा घर्मश्रमजलेन ताम्यत् ग्लानं तिलकं यत्र तदित्यर्थः स्खलन्ती मदेनोक्तिर्व्वचनं यत्र तत् घूर्णत् अरुणं चक्षुर्नेत्र यत्र तदित्यर्थः ॥ ४४३ ॥

मेदिन्यां तव निपतति न पदं बहुवल्लभेति गर्वेण ॥
आश्लिष्य कैर्न्न तरुणैस्तुरीव वसनैर्व्विमुक्तासि ॥४४४ ॥

मम योग्या न भवसीति कश्चित्काञ्चिदाह मेदिन्यामिति पृथिव्यां तव चरणं न निपतति अहं बहुजनप्रेरयसीति अभिमानेन तत् मिथ्या कुतः यतः कैः युवभिः आलिङ्ग्य न त्यक्तासि अपि तु सर्वैरित्यर्थः संगमेपि विवशासीत्याशयः वसनैः वस्त्रैः तुरीवेत्यर्थः संभोगकालं विहाय यथा चतुर उपनायक उदासीनस्तिष्ठति नायिकयापि तथैव स्थेयं तेनैव प्रेमनिर्व्वाहोन्यथा खलप्रवेशः स्यादिति ॥ ४४४ ॥

मूले निसर्गमधुरं समर्प्पयन्तो रसं पुरो विरसाः ॥
नेक्षव इव परपुरुषा विविधेषु रहःसु विनिधेयाः ॥४४५ ॥

दूती नायिकां शिक्षयन्त्याह मूल इति मूले प्रेममूलकारणे संभोगे इति यावत् पक्षे मूलसमीपे निसर्गमधुरं स्वभावप्रियं स्वभावमिष्टञ्च रसं मुखं वीर्य्यं वा

द्रव्यञ्च समर्प्पयन्तो ददान इति पुरः अग्रे खलसमीप इति यावत् पक्षे पत्रसमीपे विरसा विमुखाः पक्षे अमधुराः इक्षव इव गुडवृक्षा इव परपुरुषा उपपतयः विविधेषु नानाप्रकारकेषु रहःसु सुरतेषु पक्षे गुह्येषु स्थलेषु न विधेया नोपभोग्याः पक्षे न चोष्याः का कथोपभोग्याः चोष्या एवेत्यर्थः विविधप्रकारक एकान्त एव तदुपयोगः कर्त्तव्य इत्याशयः यद्वा एकान्तेष्वपि नानाजनेषु कथनीया इत्यर्थः पक्षे न दातव्या इत्यर्थः इति यद्वा बहुधा नोपभोग्याः खलभयादित्याशयः यद्वा नानाप्रकारकविचित्रसुरतेषु अवश्यं विनिधेयाः अत एव स्वनायिकावैलक्षण्यानुभवेन वशीभूता भवन्तीत्याशयः क्वचित्तु रसेष्विति पाठः तत्राप्येवमेवार्थः अर्थभेदेनाभासभेदाः स्वयमूहनीयाः रहः सुरतगुह्ययोरिति मेदिनीकरः ॥ ४४५ ॥

**महति स्नेहे निहितः कुसुमं बहु दत्तमर्च्चितो बहुशः ॥**
**वक्रस्तदपि शनैश्चर इव सखि दुष्टग्रहो दयितः ॥ ४४६ ॥**

नायकदुर्विनयखिन्ना नायिका सखीमाह महतीति महति दृढे प्रचुरे च स्नेहे प्रेम्णि तिलतैले च निहितः तिलतैलेन शनिदोषशान्तिः विहितत्वात् कुसुमं मालादिरूपं पक्षे श्यामपुष्पं बहुधा दत्तम् अर्च्चितः सभाषितः पक्षे पूजितः बहुशः वारं वारं यदपि तदपि हेसखि दयितः प्रियः दुष्टग्रहः दुष्टाग्रहशीलः पक्षे क्रूरग्रहः वक्रः कुटिलः पक्षे दुष्टफलदाता शनैश्चर इव केनापि प्रकारेण कदापि शुभफलदाता न भवति यथा शनिस्तथाऽयं नायकः सर्व्वदा दुष्ट एव नानुरञ्जनशक्य इति भावः ॥ ४४६ ॥

**मा शबरतरुणि पीवरवक्षोरुहयोर्भरेण भज गर्व्वम् ॥**
**निर्मोकैरपि शोभा ययोर्भुजङ्गीभिरुन्मुक्तैः ॥ ४४७ ॥**

कश्चिदाह मेति खिङ्गयुवतिपुष्टस्तनयोर्भारेणाभिमानम् मा भजेत्यर्थः हेतुमाह ययोः कुचयोः भुजङ्गीभिः सर्पीभिः त्यक्तैः कञ्चुकैः शोभा सौन्दर्यमथ च खिङ्गस्त्रीत्यक्तवस्त्रेणैव यदि शोभा तदा कोभिमान इत्याशयः ॥ ४४७ ॥

**मम चलितायाश्छायां भूमावागत्य सखि मिलत्पुलकः ॥**
**स्नेहमयत्वमनुज्झन् करोति किं नैव माऽपरुषम् ॥ ४४८ ॥**

अत्यन्तसापराधोपनायके वाचनिकानुनयाद्यकारिणि त्वम् कस्मादेव प्रसन्ना केन कारणेन जानेति वादिनीं सखीं नायिका वदति हेसखि अनेन रहस्यकथनयोग्यत्वं व्यज्यते अयं नायकः मयि स्नेहमयत्वं प्रेममयत्वमनुज्झन्न त्यजन् प्रेमसूचकमानापनोदकवचनमात्रमकथयन्नित्यर्थः मा मामपरुषम् अपगतकोपामेषनायकः किन्न करोत्यपि तु करोत्यवेत्यर्थः ननु संकेतस्थलगमनं विनैव कथं त्वां सन्तोषयतीत्यतः प्रकारमाह मम नायिकायाः चलितायाः गुरुभिः सह क्वचिच्चलितायाः इत्यर्थः अनेन कथनानवसरःसूच्यते छायां शरीरच्छायां भूमावालिङ्ग्य हस्ताभ्यां भित्तिकादिमिषेण धृत्वा मिलत्पुलकः जातरोमाञ्चः कुपितायाः इतिपाठो न सम्यक् तथा च क्रियावैदग्ध्येनैव वशीभूतास्मीत्याशयः ॥ ४४८ ॥

मुषित इव क्षणविरहे रिपुरिव कुसुमेषुकेलिसंग्रामे ॥
दास इव श्रमसमये भजन्नताङ्गीं न तृप्यामि ॥ ४४९ ॥

नायकः सहचरं प्रत्याह मुषित इति क्षणविरहेऽल्पविरहे मुषित इव चोरित इव हृतधन इवेति यावत् भजन्नताङ्गीं न तृप्यामीत्यन्वयः सम्भोगेच्छानिवृत्तिः कदापि नेत्यर्थः अनेन रत्नलाभनिश्चयेपि वैदेश्यं कर्त्तुं न शक्नोमीति द्योत्यते तेन च नायिकाया अधमाभिलाषशून्यत्वेनोत्तमत्वं ममात्रैकतानत्वादि च व्यज्यते न तृप्यामीत्यनेनोत्तरोत्तरं सुरते सौख्याधिक्यमेव न त्वन्यनायिकावत् बारंवारसुरते वैरस्यमिति द्योत्यते कुसुमेषुसंग्रामे पुष्पशरयुद्धे सुरते रिपुरिव प्रतियोद्धेवात्यन्तनिर्दय इवेत्यर्थः इषुसंग्रामपदाभ्यां निर्दयप्रहारस्य युक्तत्वं गम्यते कामशास्त्रे सुरतसमये नायकेन तथैव कर्त्तव्यमिति रतिप्रक्रिया तदुक्तं दीर्घलिङ्गी दृढाघाती चिरमैथुनकारकः स एव वल्लभः स्त्रीणां न शूरो न च पण्डितइति श्रमसमये सुरतान्ते दास इव परिचारक इव सकलरतश्रमहन्तेत्यर्थः यद्यपि श्रमापनोदनं नायिकाकर्त्तव्यं तथापि स्वस्य समर्थत्वप्रीतत्वादिसूचनायेदम् ॥४४९॥

मुञ्चसि किं मानवतीं व्यवसायाद्द्विगुणमन्युवेगेति ॥
स्नेहभवः पयसाऽग्निः सान्त्वेन च रोष उन्मिषति ॥ ४५० ॥

नायिकासखी नायकमाह मुञ्चसीति मानिनीं व्यवसायेन मानापनोदक-

व्यापारेण द्विगुणः अधिकः मन्युवेगः कोपप्रचण्डतारूपो यस्या एतादृशीति मानापनोदकेनाधिककुपिता भविष्यतीति भयेन किं मुञ्चसि वृथा त्यजसीत्यर्थः हेतुमाह स्नेहभवः प्रेमसंजातः तैलसंजातश्च रोषः कोपः वह्निश्च शान्त्वेन शान्ति-वचनेन पयसा जलेन चोन्मिषति छलत्वशून्यो भवति प्रकटो भवति अपगच्छ-तीति यावत् वह्निपक्षे उद्भूतो भवतीत्यर्थः तथा च नायिकामानो नायकशान्तिव-चनादिना प्रव्यक्तः कर्त्तव्यः तेनैवाग्रे मानशान्तिरन्यथा ग्रन्थिः स्यादिति झटि-त्येव मानापनोदनं कर्त्तव्यं विलम्बो न कर्त्तव्य इत्याशयः स्नेहस्तैलादिकप्रेम्णो रिति नानार्थः ॥ ४५०॥

मलयजमपसार्य्य घनं वीजनविघ्नं विहाय बाहुभ्याम् ॥
स्मरसंतापादगणितनिदाघमालिङ्गते मिथुनम् ॥ ४५१ ॥

कश्चित्कञ्चित्प्रत्याह मलयजेति मिथुनं नायिकानायकश्च द्वयं कन्दर्पदाहात् अगणितनिदाघमवहेलितग्रीष्मदोषमालिङ्गने परस्परमालिङ्गनं करोतीत्यर्थः घनं निविडं चन्दनमपसार्य्य दूरे स्थापयित्वेत्यर्थः यद्वा मलयजमपसार्य्य घनं वाद्यं चापसार्य्येत्यर्थः वीजनस्य तालवृन्तादिचालनस्य परस्परकृतस्य विघ्नं निवारणं बाहुभ्यां नायकबाहुना नायिकावीजननिवारणं नायिकाबाहुना नायकवीजननि-वारणं कृत्वेत्यर्थः वस्तुतो बाहुभ्यामालिङ्गते इत्यन्वय एव श्रेयान् तथाच सकल-सुखसामग्रीं विहाय बहुतरं दुःखमगणयित्वाप्यालिङ्गने महासुखजनकत्व-मित्याशयः घनं सान्द्रं घनं वाद्यमित्यनेकार्थः ॥ ४५१ ॥

महतोपि हि विश्वासान्महाशया दधति नाल्पमपि लघवः ॥
संवृणुतेऽद्रीनुदधिर्न्निदाघनद्यो न भेकमपि ॥ ४५२ ॥

भयेन क्षुद्रजनशरणापन्नं महान्तं जनमन्योक्त्या कश्चिदाह महतेति महा-शयाः उच्चमनसः पक्षे बृहत्परिमाणाः हि निर्णये विश्वासात् आत्मीयत्वनिश्च यात् प्रणयाद्वा महतोपि प्रव्यक्तानपि दधति गोपयन्ति लघवः क्षुद्राः पक्षे अल्प-परिमाणाः अल्पं क्षुद्रं जनं पक्षेऽल्पपरिमाणं न दधतीत्यन्वयः उभयत्र दृष्टान्तमाह अद्रीन् मैनाकप्रभृतीन् भीतान् पर्व्वतानुदधिः समुद्रः संवृणुते गोपायति ग्रीष्मी-

कार्त्तानसरितः भेकमपि मण्डुकमपि न गोपायन्तीत्यन्वयः तथा च महतामेव शरणदानसामर्थ्यं नाल्पानामित्याशयः ॥ ४५२ ॥

**मधुधारेव न मुञ्चसि मानिनि रूक्षापि माधुरीं सहजाम् ॥**
**कृतमुखभङ्गापि रसं ददासि मम सरिदिवाम्भोधेः ॥ ४५३ ॥**

नायको मानिनीं नायिकां प्रत्याह मधिर्वति हे मानिनि मानवति रूक्षापि प्रेमरहितापि पक्षे वैद्यशास्त्रोक्तद्रव्यगुणकथने अचिक्कणे पठितापि सहजां स्वाभाविकीं माधुरीं प्रियकथनं पक्षे मधुरत्वं न मुञ्चसि न त्यजसि मधुधारेव माक्षिकप्रवाह इवेत्यर्थः तथा च वचनमात्रेण परितुष्टासि न तु हृदयेन यथा मधुधारा बहिरत्यन्तचिक्कणापि परिपाके रूक्षा भवतीत्याशयः ननु यद्यहं रूक्षा तदा किमिति प्रसाद इत्यत आह कृतं मुखस्यारम्भस्य प्रसादनारम्भस्य प्रसादनोपयस्य भङ्गः खण्डनं यया तादृश्यपीत्यर्थः पक्षे कृतः मुखे आरम्भे सम्भेदारम्भे भङ्गस्तरङ्गो यया तादृश्यपीत्यर्थः रसं शृङ्गाररसं पक्षे जलं ददासीत्यर्थः अम्भोधेः समुद्रस्य सरिदिव गङ्गादिवदित्यर्थः तथा च मानापनोदनव्यापारेणापि मम सुखमेवेत्याशयः रूक्षस्त्वप्रेम्ण्यचिक्कणे इति विशेष्यनिघ्ने विश्वः रूक्षं चणकादिमाक्षिकमिति वैद्यके मुखमादावकाये च वक्त्रं निस्सारणं मुखमिति विश्वः भङ्गो वीचिषु विख्यातो भङ्गो जयविपर्य्ययः भङ्गो भेदे रुजायाञ्चेति नानार्थः ॥ ४५३ ॥

**मदनाकृष्टधनुर्ज्याघातैरिव तरुणि पथिकतरुणानाम् ॥**
**वीणातन्त्रीक्वाणैः केषां न विकम्पते चेतः ॥ ४५४ ॥**

देशान्तरगमनोद्यतः कदा गमिष्यसीति नायिकयोक्तो नायको नायिकां प्रत्याह मदनेति हे तरुणि युवति गृहिणीतिपाठः प्रामादिकः अपरित्याज्यत्वं व्यज्यते तेन गमनस्य परायत्तत्वं व्यज्यते केषां पथिकयुवजनानां चेतः हृदयं वीणातन्त्रीशब्दैः तत्र तत्र श्रुतैः न विकम्पते न चञ्चलं भवति अपि तु सर्व्वेषामित्यर्थः कन्दर्पाकर्षितधनुर्ज्याशब्दैरिवेत्यर्थः तथा च यदा मम वीणाश्रवणं भविष्यति तदैव तव वचनं स्मृत्वा गमिष्यामि न विलम्बशङ्केत्याशयः केचित्तु वीणावादपरां नायिकां सख्याह पथिकतरुणतोषार्थमेव वीणां वादयसीति परिहासो वाक्यार्थः इत्याहुः

वीणाशब्दतुल्यं तव वचनं श्रुत्वा पथिकस्य ममार्तावाभिलाषेति कश्चित्पथिकः काञ्चित्प्रत्याहेति प्राञ्चः ॥ ४५४ ॥

**मम भयमस्याः कोपो निर्व्वेदोऽस्या ममापि मन्दाक्षम् ॥**
**जातं कुचान्तरिक्षे स्मितसंवृतिनमितकन्धरयोः ॥४५५॥**

कश्चिन्नायकः सखायं प्रति स्वकीयनायिकावृत्तांतं नैशं प्रातराह ममेति मम प्रथमतोऽन्यनायिकाभोगो जातस्स नायिकया ज्ञात इति भयं यावत्स्थितं तन्नायिकायाः कुचान्तरिक्षे स्तनयोर्मध्यदेशे यातं प्रविष्टमित्यर्थः कुचान्तरालप्रदर्शनं कारितं नायिकया अतःपरं भयं नास्तीत्याशयः अस्याः नायिकायाः कोपः अन्यनायिकोपभोक्तारं मां दृष्ट्वा क्रोधः कुचान्तरिक्षे वक्षःस्थलाकाशे हृदये इति यावत् यात इति लिङ्गविपरिणामेनान्वयः अस्याः निर्व्वेदः वैराग्यं यातः कुचान्तरिक्षे इत्यन्वयः मम कोपयोग्योपि नायं नायकाधम इति बुद्ध्या वैराग्यमित्याशयः ममापि मन्दाक्षं लज्जा कुचान्तरिक्षे यातमित्यन्वयः अपिशब्देन स्वस्मिन् धृष्टता व्यज्यते नायिकानिर्व्वेददर्शनेन लज्जा जाता परन्तु कुचान्तरं दृष्ट्वा पुनर्गतेत्याशयः स्मृत्या स्वस्य दुश्चरितस्मृत्या संवृत्या तयोरपि कोपनिर्व्वेदयोरतिधीरत्वात् गोपनेनेत्यर्थः नमिता नम्रा कन्धरा ग्रीवा ययोस्तयोरित्यर्थः सति सप्तमी द्विवचनमिदं तथा च महाकोपकारणेपि तस्या धैर्य्यक्षमादिकं कियद्वक्तव्यमुपभोगो जात एवेति श्लोकार्थः शिरोधिः कन्धरेत्यपीत्यमरः आवयोर्मध्ये मम भयं तस्याः कोप इत्यादिक्रमेणान्वयः षष्ठीद्विवचनमेव वा क्व चान्तरिक्षे इतिपाठे कुत्राप्याकाशे भयादिकं गतमित्यर्थो द्रष्टव्यः स्मितसंवृतीतिपाठे मन्दहासगोपनार्थं नम्रग्रीवयोर्म्मिलनमभूदित्यर्थः कोपकारणेपि सानुरागैव सेत्याशयः ॥ ४५५ ॥

**मुक्ताम्बरैव धावतु निपततु भुवि सा त्रिमार्गगा वाऽस्तु ॥**
**इयमेव नर्मदा मम वंशप्रभवाऽनुरूपरसा ॥ ४५६ ॥**

गृहिणयस्समतया सम्भाव्या वैषम्यं न कर्त्तव्यमिति वादिनं सहचरं द्विभार्य्यस्सखाह मुक्तेति हे सखे सा गङ्गा पक्षे कुलहीना गृहिणी मुक्ताम्बरा त्यक्ताकाशा च एवकारेण पुनराकाशसम्योगो व्यवच्छिते पक्षे सपत्न्यां मयि च कोपेन

त्यक्तवसनैव धावनं करोतीत्यर्थः एवकारेण स्वाभाविकवस्तुपरित्यागेनातिनिर्लज्जत्वं द्योत्यते भुवि पृथिव्यां निपततु लुठतु त्रिपथगा स्वर्गमर्त्यपातालगामिन्यस्त्वित्यर्थः त्रिपथगानाम्नी भवत्वित्यर्थो वा पक्षे त्रिपथगा बहुविधनिन्दितपथगामिनीत्यर्थः त्रिशब्दस्य बहुपरत्वात् प्रकरणात् निन्दितपथलाभः इयं नर्म्मदा रेवा पक्षे सुखदा नायिकेत्यर्थः मम नर्म्मदेत्यन्वयः वंशप्रभवा वेणुमूलोत्पन्ना नर्म्मदाया वेणुमूलोत्पन्नत्वात् पक्षे कुलीनेत्यर्थः अनुरूपः खातानुरूपः पक्षे स्वकुलसदृशो रसो जलं शृङ्गारश्च यस्याः सा तथेत्यर्थः ॥ ४५६ ॥

**मृगमदलेपनमेनं नीलनिचोलैव निशि निषेवस्व ॥**
**कालिन्द्यामिन्दीवरमिन्दिन्दिरसुन्दरीव सखि ॥ ४५७ ॥**

नायिकां कृष्णस्य दूतो वदति मृगेति मृगमदलेपनं कस्तूरीविन्यासं सखीपदेनहितकथनयोग्यत्वं ध्वन्यते स्वनायकं नील निचोलैव धृतैकविधनीलवस्त्रेव रात्रौ निषेवस्व कस्तूरीलेपनसेवया कृष्णाम्बरेण च कृष्णाभिसारिकात्वमेवोचितमित्याशयः कालिन्द्यां यमुनायामिन्दीवरं नीलकमलमिन्दिन्दिरस्य भ्रमरस्य सुन्दरी पत्नी वेत्यर्थः एवमेव कारणेऽलक्षिता सती विदग्धा लोकैर्ज्ञायसे नान्यथेतिभावः ॥ ४५७ ॥

**मम सख्या नयनपथे मिलितः शक्तो न कश्चिदपि चलितुम् ॥**
**पतितोसि पथिक विषमे घट्टकुटीयं कुसुमकेतोः ॥४५८॥**

कश्चन नायकं प्रलोभयितुं दूती स्वनायिकाचातुर्य्यादि वक्ति ममेति मम सखीनयनपथे नेत्रकटाक्षमार्गे प्राप्तः कश्चिदपि बहुस्त्रीकोपि चलितुं गन्तुं न शक्नोति पथिक चिरविरहितत्वेन तव गमने का कथेत्याशयः विषमे दुर्गमे परमबन्धकारके इत्याशयः प्राप्तोसि मम सखीचातुर्य्यसौन्दर्य्यलुब्धः प्राप्तबहुभोगस्त्वमत्रैव स्थास्यसीतिभावः इयं मम सखी मकरकेतोः कामस्य घट्टकुटी घट्टप्रदेशकृतकुटीसदृशी सादृश्यस्य गम्यमानत्वात् कुटीकार्य्यकारित्वाद्वा अयमाशयः कामाख्यादेशे घट्टादौ पुँश्चलीभिरेकैका कुटी क्रियते समीचीना वासयोग्या च तत्रागत्य स्थितः पथिकः कुटीस्वामिन्या मोहितो भवति तस्माद्गन्तुं न शक्नोति

यदि कदाचित्प्रपलाय्य गच्छति तदाकर्षणमन्त्रप्रभावेण प्रभातसमये पुनस्तत्रैवायात्यतस्त्वयान्यत्र गन्तुमशक्यत्वात् अत्रैव संभोगी तिष्ठेत्याशयः यद्वा महाधनदेशान्तरप्राप्तं नायकं कटाक्षयन्तीं काञ्चिद्बुद्ध्वा विद्वेषिणी प्रतिवेशिन्याह त्वदीयं सर्व्वमियं ग्रहीष्यत्यतस्त्वयान्यत्र गन्तव्यमित्याशयः ॥ ४५८ ॥

**महता प्रियेण निर्म्मितमप्रियमपि सुभग सह्यतां याति॥**
**सुतसम्भवेन यौवनविनाशनं न खलु खेदाय ॥ ४५६ ॥**

स्वापराधकुपितां नायिकां ज्ञात्वा भयेन नायिकासमीपमनागतं नायकं नायिकादूती वदति महतेति सुभग सापराधे त्वयि मम सखी पूर्व्ववत्प्रेमवती यतोतस्त्वमत्यन्तभाग्यशालीत्याशयः महता प्रियेण परमप्रेमपात्रेण निर्म्मितं कृतमप्रियं द्वेष्यं सह्यतामद्वेष्यताम् अपिना प्रियतां यातीत्यर्थः अर्थान्तरन्यासमाह सुतसम्भवेन पुत्रोत्पत्त्या यौवनविनाशनं स्तनपतनादिकं खेदाय दुःखाय न खलु नैव भवतीतिशेषः एवञ्च चिरकालसुखदसुतोत्पादो यथा स्वभावादल्पकालिकयौवनविनाशकोपि श्लाघ्यः तथा बहुधा सुखदायके स्वल्पे कोपकारके त्वयि प्रीतैव मम सखी त्वयावश्यमागन्तव्यमित्याशयः ॥ ४५६ ॥

**मानग्रहगुरुकोपादनु दयितान्येव रोचते मह्यम् ॥**
**काञ्चनमयी विभूषा दाहाञ्चितशुद्धभावेव ॥ ४६० ॥**

नायिकाकोपार्थमिथ्याविचेष्टमानं नायकं वारयन्तीं नायिकासखीं नायकश्चाह मानेति मानग्रहणे यो महान् कोपस्तस्मादनु तादृशकोपशान्त्युत्तरमित्यर्थः एवञ्च कोपेन न कापि क्षतिः प्रत्युत लाभ इत्याह दयिता प्रेयसी तथा च क्षणमपि मानो न स्थास्यतीत्याशयः अन्यैवाननुभूतसमागमेव मह्यं रोचते इच्छाविषयो भवतीत्यर्थः केवलकनकमयी भूषा भूषणं दाहसंपादितनैर्म्मल्यभावा यथेत्यर्थः तथा च मानापनोदनसामर्थ्याभिमानतयानुभूतसुरतलोभेन वृथा कोपं मया सम्पद्यते इत्याशयः ॥ ४६० ॥

॥ इति श्रीसच्चलविरचिते मकारव्रज्या समाप्ता ॥

**यूनः कण्टकविटपानिवाञ्चलग्राहिणस्त्यजन्ती सा ॥**
**वन इव पुरेऽपि विचरति पुरुषं त्वामेव जानन्ती ॥ ४६१ ॥**

नायिकासञ्चाराधिक्यं दृष्ट्वा संदिग्धमानसं नायकं दूती वदति यून इति यूनस्तरुणान् अनेन स्पृहणीयत्वमप्रतिषेध्यत्वं च व्यज्यते किंभूतान् अञ्चलग्राहिणः बलात्कारेणाञ्चलस्य वस्त्रान्तस्य ग्रहणपरानित्यर्थः वने कण्टकविटपानिव अरण्ये कण्टकमयान् वृक्षानिवेत्यर्थः अनेनानिच्छया संबद्धत्वं व्यज्यते सा मम सखी त्यजन्ती अतिरुक्षतया भर्त्सनादि कृत्वा यूनामुपेक्षां कुर्व्वाणेत्यर्थः । पुरे महानगरे एवञ्च गृहकार्य्यार्थमवश्यसंचारयोग्यत्वं कथ्यते पुरुषं सर्व्वत्र रक्षकं त्वामेव जानाति नान्यमित्यर्थः तथा च वनसंचारे यथा स्वभावात् पथिकविद्वेषिणः कण्टकवृक्षा अचेतना इति संभाव्यास्तथा महानगरे स्वभावदुर्ज्जनास्तिष्ठन्तु त्वदेकासक्ताया मम सख्याः तन्मिलनेऽपि नानुरागशङ्केत्याशयः सा तवोपेक्ष्या नेति यद्वा भोगसामर्थ्यमेवातिचपलावश्याकर्षणमन्त्रौ नान्य इति कश्चित्सखायमाह त्वामेव पुरुषमभिमतयथेष्टरतप्रदं जानन्ती अनुभवन्ती सती सर्व्वत्र विचरति यदृच्छया परन्तु न स्थिरा भवति पुनस्तत्रैवानुसरणं करोति सेति धन्यस्त्वमिति वाक्यार्थः ॥ ४६१ ॥

**युष्मासूपगताः स्मो विबुधा वाङ्मात्रपाटवेन वयम् ॥**
**अन्तर्भवति भवत्स्वपि नाभक्तस्तन्न विज्ञातम् ॥४६२॥**

गुणी दरिद्रगणो धूर्त्तं पण्डितमन्यमपरराजपूजितमनुसृत्य बहुकालं राजसेवां कृत्वाऽलब्धफलस्तमाह युष्मास्विति वचनमात्रपटुत्वेन भवद्भिः प्रतारिता वयमित्यर्थः हे विबुधाः पण्डिता इत्यर्थः पक्षे विगतबोधा मूढा इत्यर्थः युष्मासु बहुषूपगताः मिलिताः स्म बहुभिश्चिरकालमादाय भवद्भिस्त्रासेन स्थिता इत्यर्थः एवञ्चानुपेक्षणीयत्वमपेक्षायां बहुपुण्यञ्चेति व्यज्यते भवत्स्वपि पण्डितेष्वपि अपिना मूर्खे का कथेत्याशयः नान्तर्भवति अभक्तः भक्तिरहितः पक्षे भक्तरहितः दरिद्र इत्यर्थः इति प्रथमं न ज्ञानमित्यर्थस्तथा च धनग्रहणं विना न कस्यापि भवद्भिः किमपि क्रियते इति ॥४६२॥

**यत्र न दूती यत्र स्निग्धा न दृशोपि निपुणया निहिताः ॥**
**न गिरोद्यापि व्यक्तीकृतः स जारोनुमरणेन ॥ ४६३ ॥**

कश्चित्कञ्चिदाह यत्रेति सर्व्वप्रकारेण गुप्तः स जार उपपतिः अनुमरणेन जारमरणानन्तरं द्वित्रिदिनाभ्यन्तरेऽकस्मान्नायिकामरणेन व्यक्तीकृतः जनैरेवानुमित इत्यर्थः अस्याः प्रेमगोपनचातुर्य्यं सर्व्वाधिकमित्याशयः गोपनप्रकारमाह यत्र नायके कदापि दूती न प्रेषिता न वा नायकप्रेषिता गतेत्यर्थः स्निग्धाः प्रेमवत्यो दृशः कटाक्षा निपुणयाऽतिचातुरया न निहिताः न प्रेषिताः अपिना कटाक्षयोग्ये तदभावविरोधः कथ्यते अद्यापि बहुकालमपि पूर्व्ववत् न गिरः प्रेमसूचकानि गुणकथनादीनि नेत्यर्थः स भावोनुरागेणेति पाठे सखीं प्रति नायकोक्तिः कैरपि न ज्ञातो यो भावः संभोगस्वीकार- सूचकचेष्टादिरूपः स भावोऽकस्माद्रहसि मिलितया समयविशेषे सुरतदानेन पूर्वानुरागेणाद्य व्यक्तीकृतस्तयेति धन्योहमस्मीति ॥४६३॥

**या नीयते सपत्न्या प्रविश्य या वर्ज्जिता भुजङ्गेन ॥**
**यमुनाया इव तस्याः सखि मलिनं जीवनम्मन्ये ॥४६४॥**

काचित् सखीमुपदिशति येति सखिपदेन कथनयोग्यत्वं व्यज्यते तस्या नायिकाया जीवनं जीवितं पक्षे जलं मलिनं निन्द्यं मरणतुल्यमित्यर्थः पक्षे स्वभावतः श्यामं तस्याः कस्याः या सपत्न्या पतिप्रेयस्या पुर आनीयते पतिसमीपमानीयते पक्षे गङ्गया समुद्रसविधमानीयते इत्यर्थः भुजङ्गेन खिङ्गेन पतिसपत्नीप्रियेण पिशुनेनेत्यर्थः पक्षे कालियसर्प्पेणेत्यर्थः प्रविश्य पत्यनुमतिवर्ज्जिता पतिसमीपागमने वारितेत्यर्थः पक्षे जले प्रविश्य वर्ज्जिता सर्व्वप्राणिनामागमनं रुद्धमिति भावः यद्वा वर्ज्जिता दूषितेत्यर्थः पक्षे आवर्ज्जितानुरञ्जितेत्यर्थः यमुनाया इव कालिन्द्या- इव पत्रञ्च सपत्नीयुक्ताया जीवनमेव मरणमतो मत्कथनेन त्वं पत्यनुमत्या स्थित्वा तमधीनं कृत्वा सुखेन यथा स्थेयं तथा कुर्व्विति सुखदमपि सजातीयानुशरणं त्याज्यमिति कश्चिद्वदतीति कश्चित् ॥४६४॥

**यस्मिन्नयशोपि यशो ह्रीर्व्वैघ्नो मान एव दौःशील्यम् ॥**
**लघुता गुणज्ञता किं नवो युवा सखि न ते दृष्टः ॥४६५॥**

नायकं प्रथमतः सङ्गमयितुं नायिकां दूती वक्ति यस्मिन्निति हे सखि मित्रसमीपे हितमेव वक्तव्यमिति ध्वनिः स प्रतिवेशी नवोऽधुनैव लब्धयौवनः युवतिप्रौढ़ इत्यर्थः सुलभत्वं शिक्षणीयत्वं चिरभोग्यत्वं सम्प्रति यथेष्टरतिदातृत्वञ्च व्यङ्ग्यं ते तव किं प्रश्नेन दृष्टः यदि कदाचिदपि त्वया दृष्टः स्यात्तदा संप्रत्युक्तमेव स्यादित्याशयः यस्मिन्नायके औपपत्यजमयशो दुर्व्वादो यश एव सर्व्वनायिकास्पृहणीयमेवेत्याशयः यस्मिन् ह्रीर्लज्जा विघ्नः क्षणमपि भोगविरोधित्वात् क्षणमपि सकारणोपि मानो दुःशीलता शीललेशशालिन्या कर्त्तुमशक्यत्वात् कटुवचनादेः का कथेत्याशयः यस्मिन् लघुता झटिति संभाषणालिङ्गनादिरूपा गुणज्ञता वैदग्ध्यम् ईदृशे विषये लघुतैवोचितेत्याशयः एवञ्च यदि कामकलावैदग्ध्याभिमानो मदुक्तौ वा विश्वासस्तदा सङ्केतस्थानस्थापितं तं द्रष्टुं गन्तव्यं मया सहेति ॥ ४६५ ॥

**यद्वीच्यते खलानाम्माहात्म्यं क्वापि दैवयोगेन ॥**
**काकानामिव शौक्ल्यं तदपि हि न चिरादनर्थाय ॥४६६॥**

पिशुने घुणाक्षरन्यायेन समीचीनं कार्य्यं दृष्ट्वा विश्वासपरं कञ्चन कश्चिदाह यदिति खलानां स्वभावदुष्टानां माहात्म्यं महत्वं समीचीनकर्म दैवयोगेनादृष्टवशात् यत् कदाचित् दृश्यते तदपि तादृशमहत्वमपि अपिना यावज्जीवं निन्दितकार्य्यपरिग्रहः न चिरात् शीघ्रमेवानर्थाय परमानर्थकारकं भवति यथा काकानां स्वभावश्यामानां शुक्लं रूपमित्यर्थः यथा कदाचित् शुक्लरूपवान् काको दृश्यते परन्तु स काकः स्वधर्म्मं परद्रोहं न मुञ्चति दर्शनमात्रेणानिष्टकारी च भवति तथा खलमाहात्म्यदर्शने सत्फलं न भवति अतस्त्वया कथमपि खलविश्वासो न कर्त्तव्य इति भावः ॥ ४६६ ॥

**यत्खलुखलमुखहुतवहविनिहितमपि शुद्धिमेव परमेति ॥**
**तदनलशौचमिवांशुकमिह लोके दुर्ल्लभं प्रेम ॥ ४६७ ॥**

कंचित् खलसहचरं समीचीन नायकं नायिकया सङ्गमयितुं स्तुवन्ती दूती नायिकामाह यदिति तत्प्रेम इह शृङ्गारविषये लोके प्राणिमात्रे दुर्ल्लभं महापुण्येन

कदाचित्केनापि लब्धं बहुधाऽप्रसिद्धमित्याशयः अनलेन अग्निदाहेन शुद्धं पूर्व्वरूपाधिकरूपमंशुकं वस्त्रं सुवर्णसूत्रमयं यद्वाऽग्निनाऽदाह्यं देवलोकप्रसिद्धं तद्दिवेस्यर्थः अत एवात्र दुर्ल्लभमिदमित्याशयः तत् कतरत् यत्तु खलु कर्म्ममात्रविघटकत्वेन प्रसिद्धः खलः पिशुनः तस्य मुखं परपीडया दाहकत्वादग्निः तस्मिन् विनिहितमपि खलवचनविषयोपीत्यर्थः अपिर्व्विरोधे शुद्धिमेति प्रेम न गच्छतीत्यर्थः एवकारेणाशुद्धेः कदापि संबन्धो नास्तीति कथ्यते प्रत्युत खलसंबन्धे द्विगुणितं भवतीत्याशयः एवञ्च तस्य खलमैत्रीमधुना विनाशय तदनन्तरं तेन सङ्गतिः कर्तव्येति केचित्तु प्रेम्णि खलवञ्चनमावश्यमिति कश्चित् कश्चिदुपदिशतीत्याहुः यद्वा खलोपहासात् उदासीनां नायिकां दूती वदति प्रेम्णि खलसम्बन्धो भवत्येव तावता नोदासितव्यमिति। यद्वा तथैवोदासीनं नायकं नायिकासखी संबोधयति व्यञ्जनापूर्ववत् ॥ ४६७ ॥

**यन्नावधिमर्थयते पाथेयार्थं ददाति सर्वस्वम् ॥**
**तेनानयातिदारुणशङ्कामारोपितं चेतः ॥ ४६८ ॥**

कश्चित्सहचरं वदति यन्नेति यन् अवधिं कदा गमिष्यतीति व्यवस्थां नार्थयते न कारयतीत्यर्थः पाथेयार्थं पथि भक्षणार्थं सर्व्वस्वं सर्व्वधनं ददातीत्यर्थः सर्व्वस्वपदोपादानात् प्रातर्भक्षणार्थमपि नापेक्ष्यते तेन क्वचिद्धनिनि सङ्गसेयमिदानीमिति व्यज्यते तेन पूर्व्वोक्तेनानया मया यत्नेन रक्षितया चलचित्तया मम चेतश्चित्तं दारुणम् अपयशोजनकसन्देहमारोपितं चित्तं साशङ्कमित्यर्थः आरोपितपदेन निश्चयाभावः कथ्यते तेन यथाशक्त्या त्वया रक्षणीया मयाऽशक्यतया गम्यते इति ॥ ४६८ ॥

**यूनामीर्ष्यावैरं वितन्वता तरुणि चक्ररुचिरेण ॥**
**तव जघनेनाकुलिता निखिला पल्ली खलेनेव ॥ ४६९ ॥**

नायको नायिकां वदति यूनामिति हे तरुणि अनेन सर्व्वस्पृहणीयत्वेन यौवनदोषोयं तवेति ध्वन्यते जघनैकेनेत्यर्थः निखिला सम्पूर्णा पल्ली पामरवसतिराकुलिता त्वदासक्ता कृता निखिलपल्लीत्यादिना त्वत्सदृशी नान्येति सर्व्वे

त्वय्यासक्ताः परन्तु तव दोषो नास्ति ममापि त्वय्यासक्तिस्तेनैवेत्याशयः यश्च खलेन दुष्टेनेत्यर्थः यूनामीर्षया परस्परस्पर्द्धतया वैरं विस्तारयतेत्यर्थः समानः चक्रवत् रथचक्रवत् मनोज्ञेन पक्षे मुखदाक्षिण्येन चक्रस्य ग्रामप्राणिसमूहस्य रुचिरेण रुचिविषयेन कपटप्रेमपात्रेणेति यावत् सर्व्वान् सक्तान् त्यक्त्वा मय्येवासक्तासीति मम भाग्यमित्याशयः ॥ ४६६ ॥

**यावज्जीवनभावी तुल्याशययोर्न्नितान्तनिर्भेदः ॥**
**नद्योरिवैष युवयोस्संगो रसमधिकमावहतु ॥ ४७० ॥**

नायिकानायकसहचरं प्रेमज्ञं बुद्ध्वा नायकसमक्षं चरावाह यावदिति युवयोः युवा च युवती च युवानौ तयोरित्यर्थः एवञ्च द्वयोर्व्यपदेनैव कथनेन रूपकुलशीलादिना सर्व्वथासौ सादृश्यं कथ्यते तेनात्यन्तमुचितं द्वयोः प्रेमेत्याशयः सङ्गः मैत्री एषः विद्यमानः पक्षे प्रवाहद्वयसंयोगमधिकं दिने दिने वर्द्धमानं रसं प्रेम मिलित्वा शृङ्गारादिव्यवहरणं वा पक्षे जलमावहतु समन्तात् प्राप्नोत्वित्यर्थः ममाभिप्रेतं तदेव साधयिष्यतीत्याशयः पक्षे प्रवाहरूपो भवतु एवञ्च यथातिप्रवाहरूस्य सम्भेदप्रवाहस्य सकलकालुष्यरहितस्य रसस्सर्व्वश्लाघ्यः तथा युवयोस्सङ्गः सर्व्वथा मम श्लाघ्यः कार्य्यकारी चेत्याशयः यावज्जीवनं यावदायुः भावी भवनशीलः स्थिर इत्यर्थः पक्षे यावज्जलावस्थितिकालं व्याप्येत्यर्थः तुल्यः सर्व्वप्रकारेण समानः आशयश्चित्तं ययोस्तयोरित्यर्थः तथाच समानचित्तौ द्वावेव दुर्लभौ तृतीयस्य का शङ्केति व्यज्यते तेन सर्व्वथा तृतीयसङ्गकरणं नोचितमिति रहस्यव्यङ्ग्यं पक्षे तुल्यौ समानप्रमाणौ आशयौ जलाधारदेशौ ययोरित्यर्थः न्यूनाधिकप्रवाहसङ्गस्तु न मनोहारीत्याशयः नितान्तं दृढं भेदशून्यः गोप्यागोप्यसकलालापमय इत्यर्थः पक्षे संगमावधिपरमगम्यदेशपर्य्यन्तमविभक्त इत्यर्थः नदश्च नदी च नद्यौ तयोरित्यर्थः यद्वा दूतीद्वारकप्रेमकरणं परकर्णपतितं झटिति व्यक्तं भविष्यतीति द्वाभ्यां दूतीं प्रतार्य्य प्रेमकृतमत्यन्तचतुरा दूती मया ज्ञातमिति वक्तुमाशीर्वादच्छलेन यातं वृत्तान्तं कथयति केचित्तु बालां परित्यज्य परदेशगतं सखायं बालायौवनं बुद्ध्वा सखा महता श्रमेणानीय परिहसतीति वक्यार्थः इत्याहुः ॥ ४७० ॥

यन्निहितां शेखरयसि मालां सा यातु शठ भवन्तमिति ॥
प्रहरन्तीं शिरसि पदा स्मरामि तां गर्व्वगुरुकोपाम् ॥४७१॥

नायकस्सहचरं वक्ति यदिति यन्निहितां यया दत्तां मालां शेखरयसि शिरोलङ्करणं कुरुषे हे धूर्त्त सा नायिका भवन्तं पातु इत्युक्त इतिशेषः मस्तके चरणेन ताडयन्तीं गर्व्वेण सौभाग्याभिमानेन गुरुर्म्महान् कोधो यस्यास्तामेव स्मरामि तस्या एव वशोऽस्मीतिभावः ॥ ४७१ ॥

यौवनगुप्तिं पत्यौ बन्धुषु मुग्धत्वमार्ज्जवं गुरुषु ॥
कुर्वाणा हलिकवधूः प्रशस्यते व्याजतो युवभिः ॥ ४७२ ॥

इमां बालां मत्वा प्रतिवेशिना त्वया न भुज्यते युवभिर्बहुभिरुदासीनैर्भुज्यते इति नायिकाप्रतिवेशिनं कश्चिद्वदति यौवनेति पत्यौ स्वामिनि यौवनगोपनं श्वशुरकुलगमनभयात् संरक्षणभयाद्वा बन्धुषु भ्रातृवर्गेषु मुग्धत्वमल्पज्ञत्वं गुरुषु आर्ज्जवम् ऋजुतां कुर्व्वाणा युवशिक्षयैव कुर्वाणेत्यर्थः हलिकवधूः पशुतुल्यपरिवारेत्याशयः व्याजतः छलतः प्रशस्यते अर्थादुपहस्यते सर्व्वथा बालचेष्टां कुर्व्विति बालां शिक्षयित्वा पत्यादिनिकटे सर्व्वथा बालेयमित्युक्त्वा प्रतार्य्य सर्व्वा बालाश्च गृहीत्वा सर्व्वैर्भुज्यते त्वया न कथं भुज्यत इति वाक्यार्थः ॥ ४७२ ॥

यो न गुरुभिर्न्न मित्रैर्न्न विवेकेनापि नैव रिपुहसितैः ।
नियमितपूर्वः सुन्दरि स विनीतत्वं त्वया नीतः ॥ ४७३ ॥

स्वाभिप्रेतनायकेन सङ्गमयितुं दूती नायिकामाह य इति यस्सर्व्वथा दुर्व्विनीतो गुरुमित्रविवेकैरननुकूल एव कुलशत्रुहसितैः पूर्व्वं नियमनयोग्यसमयेपि विनयं न प्रापितेत्यर्थः हे सुन्दरि अनेन समीचीननायकसौलभ्यं तदनुपेक्षणीयत्वं च व्यज्यते स कयाप्यगृहीत इत्यर्थः त्वयातिविदग्धया विनीतत्वं समयेऽनीतेपि प्रापितः तथा च स्वं नायकाभासं परित्यज्य सकलगुणपुञ्जनायकरत्नं मया नीतमनुगृहाणेत्याशयः ॥ ४७३ ॥

**यन्मूलमार्द्रमुदकैः कुसुमं प्रतिपर्व फलभरः परितः ॥**
**द्रुम तन्मायसि वीचीपरिचयपरिणाममविचिन्त्य ॥ ४७४ ॥**

दुष्टधनिकनायिकासङ्गत्या महाधनं कञ्चन निवारयितुं कश्चिदन्योक्त्या वक्ति यदिति हे द्रुम एवञ्च भयेन पलायनाशक्यत्वं व्यज्यते तेन भोगार्हत्वं कथ्यते उदकैस्सरिज्जलैः यन्मूलं निदाघसमयेपि शीतलमित्यर्थः तेनासमयेपि बहुलाभ इति गम्यते प्रतिपर्व पर्व्वणि पर्वणि कुसुमं पुष्पं परितः सर्व्वतः फलभरः फलसमूह इत्यर्थः समयेऽसमये योग्यायोग्यदेशे फलाद्याधिक्यकथनेन सर्व्वदा गुप्तानुचितोचितार्थेष्टधनग्राहित्वं पुरुषे कथ्यते आलिमत्तो भवसि सर्व्वाधिकोहमितिमन्यसे यत्तद्वीचीनां चातुर्म्मास्यतरङ्गाणां परिचये संबन्धे सति यः परिणामः आमूलखननेन सर्व्वथा निपातरूपस्तमविचिन्त्य बुध्वेत्यर्थः तथा च यदा कदाचित् कोपे प्रभुगते तत्र नाश एव सर्व्वथेदं त्वया त्याज्यमित्याशयः महाधनं वैदेशिकं प्रथमतो बहुधनं दत्वा तदीयं सर्व्वं धनं ग्रहीतुं कयाचिद्दुष्टया स्थापितं नायकं काचिदाह तं द्रुममस्यतीति क्वचित्पाठः यन्मूलमित्यस्य यस्य मूलमित्यर्थः विचितं द्रुममस्यति प्रवाहे क्षिपतीत्यर्थः किं कृत्वा वीचीं क्षिपति परिचयस्य निकटवर्त्तित्वस्य यः परिणामः प्रेमबाहुल्यं तदविचिन्त्य विस्मृत्येत्यर्थः ॥ ४७४ ॥

**यस्याङ्के स्मरसङ्गरविश्रान्तिप्राञ्जला सखी स्वपिति ॥**
**स वहतु गुणाभिमानं मदनधनुर्वल्लिचोल इव ॥४७५॥**

नायिकाप्रीतिवर्द्धकसौमनस्यानभिज्ञं बहुगुणं स्वयोजितं नायकं नायिकाप्रेरिता सखी शिक्षयति यस्येति स नायकश्रेष्ठः गुणाभिमानं चतुःषष्टिकलाभिज्ञतात्वं पक्षे गुणस्य ज्याया अभिमानं ज्याप्रमाणाधिकप्रमाणत्वं मदनधनुर्लताच्छादकपट इवेत्यर्थः यस्य क्रोडे मदनयुद्धविश्रान्त्या प्राञ्जला प्रसन्ना स्वापमात्रार्थमङ्कं विशन्ती स्वपिति न तु शताग्रहेण तदानीरतमिच्छन्तीत्यर्थः एवञ्च एतादृशरतदानार्थं कामशास्त्रपरिशीलनं कृत्वाभिमानी भव नान्यथेत्याशय ॥ ४७५ ॥

यदि दानगन्धमात्राद्वसन्ति सप्तच्छदेपि दन्तिन्यः ॥
किमिति मदपङ्कमलिनां करी कपोलस्थलीं वहति ॥ ४७६ ॥

सकलगुणोपेतेन केनचित्समानजातीयेन नायकेन समानोहमिति मन्वानं नायकाभासं काचिदन्योक्त्या वदति यदीति दानस्य मदस्य गन्धमात्रात् सौरभमात्रात् मात्रपदेन नायकगतपुरुषाकारत्वान्यसकलगुणशून्यत्वं व्यवच्छेद्य दन्तिन्यः दन्तिपत्न्यः दन्तिपदेन महापराक्रमशालिपत्नीत्वं नायिकायां सूच्यते यदि कदाचिद्वसन्ति मददन्तिबुध्या प्रेम कुर्व्वन्ति सप्तच्छदेपि विषमच्छदेपि एवञ्च विषमाङ्गत्वं व्यज्यते नायके वसन्त्यपीतियोजनया नामग्रहणादिपरिग्रहः तदा मदः कलङ्कः सप्तच्छदतुल्यनायकाभासासक्तिसम्पादकया कलङ्कत्वं तेन मलिनां श्यामाम् अथचोपहासकारिणीमित्यर्थः कपोलस्थानीं गण्डस्थलीं किं वहति वृथा धारयतीत्यर्थः उत्तमनायकसमानजातीयत्वमात्रेणातिनिर्गुणस्य तव वृथा गर्व इत्याशयः ॥ ४७६ ॥

यदवधि विवृद्धमात्रा विकसितकुसुमोत्कराशणश्रेणी ।
पीतांशुकप्रियेयं तदवधि पल्लीपतेः पुत्री ॥ ४७७ ॥

× × × ×

यमुनातरङ्गतरलं न कुवलयं कुसुमलावि तव सुलभम् ॥
यदि सौरभानुसारी झंकारी भ्रमति न भ्रमरः ॥ ४७८ ॥

अतिसुन्दररूपयौवनशालिनीं कटाक्षयन्तीं सस्पृहो युवाह यमुनेति हे कुसुमलावि कुसुमं लुनातीति कुसुमलावी कर्म्मणि अणि लुञ्छेदने धातोः ङीबन्तः तत्सम्बोधने कुसुमच्छेदनकारिणीत्यर्थः एवञ्च प्रातरेव कुसुमावचयविक्रयाद्यर्थं सुविहितसंचारयोस्तव दर्शनं स्वगृहोपवनादौ सुलभमित्यवश्यं प्रेमकरणमुचितमिति व्यज्यते कुवलयमिन्दीवरं तदा तव न सुलभं न सुखप्राप्यं यमुनायाः श्यामायास्तरङ्गेन भंगेन चपलं तादित्यर्थः यदि सौरभानुशरणशीलो झङ्कारशब्दशीलश्च भ्रमरः तत्र न भवतीत्यर्थः अयं भावः तव यमुनाजलप्रवेशे

स्वभावचपलकुवलययुगलतुल्यानत्र युगलयमुनातरंगदोलायमानयमुनाकुव-लयसमूहानां प्रतिबिम्बेनासंख्येन किं त्रोटनीयमिति भ्रान्तिखिन्नायास्तव कुवलयपरिज्ञानाय शब्दायमानो भ्रमरः प्रतिकुवलयं प्रविशति सौरभाभावेन तव नेत्रयुगकुवलयप्रतिबिम्बानि त्यजति यदृच्छया तव कुवलयलाभं कारयित्वा द्रव्यं दापयति तव मित्ररूपी भ्रमरो यथा तथाहमपि तव मित्रं भवितुमिच्छामी-त्यवश्यं मामनुगृहाणेति कश्चित्तु सौरभानुसारी कमलसुगन्धित्वन्मुखसौ-रभानुसारी नगरेपि तव मुखे वारंवारं सर्वजनदृशा तो भ्रमर दंश इत्याशयः इति यदि न स्यात्तदा तत्रोपपतिदत्तदन्ताभिघातादिगोपने प्रकाराभावेन सङ्केतस्थलगमनं न स्यात् कुवलयसौलभ्यं च न स्यादित्याह ॥ ४७८ ॥

**ये शिरसि विनिहिता अपि भवन्ति न सखे समानसुखदुःखाः ॥**
**चिकुरा इव ते बाला एव जराः पाण्डुभावेपि ॥ ४७९ ॥**

अतःपरं पुत्रपौत्रादिभ्यो गृहभारं सर्व्वं दत्वा निर्व्यापारस्तिष्ठेति वादिनं सहचरं सहचर आह ये इति हे सखे शिरस्यपि धृताः अकर्त्तव्यकरणविषया अपी-त्यर्थः पक्षे मस्तके सर्व्वोपरि स्थापिता अपीत्यर्थः सर्व्वथा समानसुखदुःख-योग्यताऽप्यर्थः मम सुखेन सुखिनो मम दुःखेन दुःखिनो न भवन्ति जरया पाण्डुभावेपि वृद्धत्वेपीत्यर्थः पक्षे जरया श्वेतरूपवत्वेपीत्यर्थः अविर्विरोधे ते बाला एव मूढा एवेत्यर्थः पक्षे बालपदवाच्या एवेत्यर्थः चिकुरा इव मस्तकस्थकेशस-मूहा इवेत्यर्थः एते ज्ञानशून्यत्वादेवानधिकारिण इति स्वयमेव सर्व्वं क्रियते इत्याशयः यत्तु वृद्धपतिलंपटनाखिन्ना काचित्पतिसहचरमाहेदानीमपि चापलमस्य मदीयेन महता प्रयासेन न गतमिति व्याख्यानं तद्बहुवचनविरोधादुपेक्षितं यद्वा श्रिया मत्तस्य कृत्याकृत्यविचारो नेति केचिन्मन्त्रिणः कश्चिदाहुः ॥४७९॥

**यन्नियतनिर्गुणं यन्न वंशजं यच्च नित्यनिर्व्वाणम् ॥**
**किं कुर्म्मस्तन्निहितं धनुष्पदे देवराजेन ॥ ४८० ॥**

यदिति देवराजेन शक्रेण धनुष्पदे धनुःस्थाने धनुषकार्य्यकरणायेति यावत् तत् इन्द्रायुधं निहितं स्थापितमित्यर्थः देवराजपदेन सर्व्वशासकत्वकथनेन

स्वेच्छाचारित्वं कथ्यते अत एव वयं मन्त्रिप्रभृतयः किं कुर्म्मः किमपि कर्त्तुं न शक्यते इत्यर्थः यदिन्द्रायुधं नियतं नियमतः गुणशून्यं ज्याशून्यमित्यर्थः नियतपदेन कथमपि ज्यासम्बन्धकरणसामर्थ्यन्नेति गम्यते पुरुषपक्षे राजकार्य्यकारिगुणसामान्यशून्यमित्यर्थः न वंशजं न वेणुजं तेजोमयत्वात् पक्षे कुत्सितकुलजमित्यर्थः नित्यं सदा निर्व्वाणं शरशून्यं ज्याशून्यत्वादेव पक्षे सुखरतम् तथा च स्वेच्छया सकलगुणशून्यसकलदोषयुक्तश्च कश्चन पुरुषो राज्यभारे नियोजितः अस्माकं शक्यं किमपि नास्तीति वाक्यार्थः ॥४८०॥

**या दक्षिणा त्वमस्यामदक्षिणो दक्षिणस्त्वमितरस्याम् ॥**
**जलधिरिव मध्यसंस्थो न वेलयोः सदृशमाचरसि ॥ ४८१॥**

अनुकूलायामननुकूलः प्रतिकूलायामनुकूलस्त्वमसीति सहचरं सहचरो वदति येति या तव दक्षिणानुकूलाऽस्यां तस्यामित्यर्थः अदःशब्दस्य तच्छब्दपर्य्यायत्वात् त्वमदक्षिणः अननुकूल इत्यर्थः समुद्रपक्षे या वेला दक्षिणदिक्स्था तस्याः अदक्षिण उत्तरदिक्स्थ इत्यर्थः तदितरस्यामननुकूलायां दक्षिणः अनुकूल इत्यर्थः पक्षे उत्तरदेशस्थायां दक्षिणदेशस्थ इत्यर्थः जलधिः समुद्रः जडनिधानं वा डलयोरैक्यात् मध्यस्थः समपक्षपातः पक्षे मध्यदेशस्थः सन्नवेलयोस्समसामीप्यवर्त्तिमर्य्यादयोस्सदृशमुचितमाचरसि करोषीत्यर्थः नायकपक्षे मध्यस्थः सन् वेलयोर्व्वेलातुल्ययोस्सदृशं न करोषीत्यर्थः परञ्च जडस्य समुद्रस्य तथा करणमस्तु सचेतनस्य तवेदं वैषम्यमत्यन्तमनुचितमित्याशयः ॥४८१॥

**युगपज्जघनोरस्तनपिधानमधुरे त्रपास्मितार्द्रमुखि ॥**
**लोलाक्षि नैष पवनो विरमति तव वसनविपरिवर्त्ती ॥४८२॥**

नायकेन प्रथमसमागमं कारयन्ती दूती नायिकामाह युगपदिति युगपत्समकालं जघनस्य उरसः कुचयोश्च यत्पिधानं वपनाद्घटितानामाच्छादनमित्यर्थः तेन मधुरं मनोज्ञे नायकोन्मादसम्पादिके इति यावत् क्वचिद्विधुरे इतिपाठस्तत्र प्रथमसमागमलज्जया विकले इत्यर्थः स प्रामादिकोऽत्र सात्विकभावकथनात् त्रपया लज्जया यत्स्मितं तेनार्द्रं स्विन्नं मुखं यस्या लोले चञ्चले अक्षिणी यस्याः

तव वसनपरिवर्त्तनकारी एषः पवनः पवनतुल्यो नायको वा न विरमति भोगमकृत्वा न निवृत्तो भवतीत्यर्थः त्वं भोगं संपाद्य गच्छेति वाक्यार्थः स्वरूपवर्णनपरमिदमित्यपि केचित् ॥ ४८२ ॥

**यद्यपि बद्धः शैलैर्य्यद्यपि गिरिमथनमुषितसर्व्वस्वः ॥**
**तदपि परभीतभूधररक्षायां दीक्षितो जलधिः ॥ ४८३ ॥**

अयमपकारिणोपि रक्षक इति कश्चित्कश्चिदन्योक्त्याचष्टे यद्यपीति जलनिधिः समुद्रः जलनिधिपदेन गाम्भीर्यातिशयशालित्वं महत्वादिकञ्च व्यज्यते यद्यपि शैलैर्नानरानीतैर्बद्धः यद्यपि च पर्वतमथनेन मुषितं सर्वस्वं लक्ष्मीपारिजातादिरूपं सकलं धनं यस्य तथाभूतोस्ति एवं चास्य शैला अपकारिण इति लभ्यते तदपि-तथापि परादिन्द्रात् भीतस्य भूधरस्य मैनाकस्य रक्षणे दीक्षितः कृतनियम एवास्ति तद्वदयं प्रस्तुतोपीति ॥ ४८३ ॥

**यस्यां दिशि यस्य तरोर्य्यामेत्य शिखां यथोन्नतग्रीवम् ॥**
**दृष्टा सुधांशुलेखा निशां चकोरस्तथा.नयति ॥ ४८४ ॥**

तत्र यादृशेन तेन नायकेन त्वं दृष्टासि तादृशेनैव तेनाद्यापि स्थीयते इति दूती नायिकामाह यस्यां दिशि यस्य वृक्षस्य यां शिखामाश्रित्य उन्नतग्रीवं यथा चन्द्रलेखा दृष्टा चकोरेण तथैव स चकोरो निशां रात्रिं नयति तथैव पुनर्द्रक्ष्यामीतिविश्वासात् सुधांशुलेखेत्यनेनाह्लादकत्वं चकोर इत्यनेन च तदेकपत्नीत्वं ध्वन्यते एवं चैतादृशस्योपेक्षा तत्र न युक्ता अतः सत्वरं तदन्तिकं चलनीयमिति वाक्यार्थः ॥ ४८४ ॥

**यत्राज्जवेन लघुता गरिमाणं यत्र वक्रता तनुते ॥**
**छन्दःशास्त्र इवास्मिन् लोके सरलस्तथा किमसि ॥ ४८५॥**

लोकव्यवहारः कौटिल्यं विना नेति सहचरं सखा वदति यत्रेति हे सखि अस्मिन् लोके कपटमये मर्त्यलोके इत्यर्थः सरलः ऋजुस्वभावः पक्षे अवक्रः किमसि किमर्थमसीत्यर्थः यद्वा सरलः कुत्सित इत्यर्थः यत्र लोके आर्ज्जवेना-

वैमत्यादिमात्रपरत्वेन लघुना लाघवमयशश्चेति प्रसिद्धिरित्यर्थः पक्षे छन्दश्शास्त्रे वक्रिमा वक्ररेखापरिमाणं गुरुत्वं विस्तारयति गुरुवर्णस्य वक्रा रेखा भवतीत्यर्थः एवञ्च छन्दश्शास्त्रे लघुनः ऋजुरेखा गुरोः वक्रा तथैव लोके वक्रतां विना गौरवं नास्तीत्याशयः ॥ ४८५ ॥

**यन्नोपकारकं यन्न भूषणं यत्प्रकोपमातनुते ॥**
**गुरुणापि तेन कार्य्यम्पदेन किं श्लीपदेनेव ॥ ४८६ ॥**

अयोग्ये राजदत्तमधिकारं कश्चिन्निन्दति यन्नेति यदुपकारकं कस्याप्युपकाराय न भवति न भूषणं भवति भूषस्यायोग्यत्वात् यत्प्रकोपं श्रोतुः श्रवणमात्रेणायोग्यत्वात् क्रोधं करोतीत्यर्थः गुरुणापि महतापि तेन वृथा प्रसन्नराजादिदत्तेन पदेन मन्त्र्यादिपदेन किं कार्य्यं किं करणीयमपि तु न किमपीत्यर्थः प्रत्युत शिष्टकोपाधिक इत्याशयः श्लीपदेनेव पादस्थूलतासंपादकरोगविशेष इवेत्यर्थः अनुपकारकेणाभूषणेन समये प्रकोपस्य गमनागमनप्रतिरोधस्य सम्पादकेन चरणगुरुत्वकारकेण यथा फलं नास्ति प्रत्युत दुःखन्तथेत्यर्थः श्लीपदो रोगभेदे स्यात् इति सङ्केतसंग्रहः ॥ ४८६ ॥

**यूथपते तव कश्चिन्न हि मानस्यानुरूप इह विटपी ॥**
**प्रेरय दिनं निदाघद्राघीयः क्व खलु ते छाया ॥४८७॥**

लोभेन भ्रान्तमल्पजनमनुसरन्तं कश्चिदन्योक्त्या वदति यूथेति हे बहुगजश्रेष्ठ इह प्रदेशे तव प्रमाणस्यानुरूपः छायादानसमर्थो वृक्षो हि निश्चयेन यतो नास्त्यतः निदाघे ग्रीष्मे दीर्घदिनं गमय रक्षां कुरु क्वापीत्यर्थः खलु निश्चये एवञ्च यथा महागजस्य यूथपस्य स्वल्पवृक्षच्छाया वृथा तथा महतस्तवाल्पप्रभुसेवनमतः शीघ्रं गच्छेत्याशयः ॥ ४८७ ॥

**यद्यपि चन्दनविटपी फलपुष्पविवर्जितः कृतो विधिना ॥**
**निजवपुषैव तथापि हि स हरति संतापमपरेषाम् ॥४८८॥**

स्वभावेन विनीतं कञ्चन दरिद्रं कश्चित्स्तौति अन्योक्त्या यद्यपीति

चन्दनवृक्षः परमेश्वरेण फलपुष्पशून्यः यद्यपि कृतः एवञ्च परमेश्वरेणैव फलादिदानायोग्यत्वं संपादितं स्वाधीनेन शरीरेणापरेषां स्वभिन्नानां साधारणतया सर्व्वेषामित्यर्थः संतापं हरत्यपसारयतीत्यर्थः एवञ्च चन्दनतुल्योयं सर्व्वथा दरिद्रोपि सर्व्वेषां शरीरेण सुखदातोत्तमपुरुष इत्याशयः ॥४८८॥

॥ इति श्रीसच्चलविरचितायाञ्चेतोहारिण्यां यकारव्रज्या समाप्ता ॥

**राज्याभिषेकसलिलक्षालितमौलेः कथासु कृष्णस्य ॥**
**गर्व्वभरमन्थराक्षी पश्यति पदपङ्कजं राधा ॥४८९॥**

नायिका गुरुनायकसङ्गत्यैव गुर्व्वी भवतीति मया विचारितगुरुनायकसंगता अवश्यम्भवेति नायिकां दूती वदति राज्येति कृष्णस्य कथासु सर्व्वप्रकारोत्कर्षवर्णनरूपासु सर्व्वोत्कर्षयुतस्त्रीसमूहकृतास्वित्यर्थः राज्याभिषेकार्थं सलिलेन प्रक्षालितो मौलिर्य्यस्य तस्येत्यर्थः राधा राधैव न तु रुक्मिण्यपीत्यर्थः एवञ्चोत्तमपरनायकवशीकरणे गर्व्वो न तु स्वनायकवशीकरणे इत्याशयः निजचरणकमलं पश्यति गर्व्वभरेणाभिमानसमूहेन मन्थरे मन्दे अक्षिणी यस्याःसेत्यर्थः तथा च राज्याभिषिक्तस्य सर्व्वथा सर्व्वैः पूजितस्यातिपवित्रस्य कृष्णमस्तकस्य मत्पदमेव मानापनोदनार्थं शरणमिति गर्व्वः तथा च पश्य राधाभावतुल्यो रुक्मिण्यादिभावोपि नास्त्यतः सर्व्वथा मदुक्तेन नायकेन संगता भूत्वा राधातुल्या भवति वाक्यार्थः ॥ ४८९ ॥

**रतिकलहकुपितकान्ताकरचिकुराकर्षमुदितगृहनाथम् ॥**
**भवति भवनं तदन्यत्प्राग्वंशः पर्णशाला वा ॥४९०॥**

विदेशस्थः सहचरमाह रतीति रतिकलहे रत्यर्थकलहे कुपिता कोपवती या कान्ता अल्परतापेक्षिणीत्यर्थः तस्याः कराभ्यां यश्चिकुराकर्षः शीर्षाकर्षणं रतिनिवारणार्थं तेन मुदितो लब्धमोदो यो गृहपतिः स यत्र तद्भवनं गृहस्थगृहं भवति तद्भिन्नं प्राग्वंशः यज्ञवस्तूपयोगि गृहं पर्णशाला वा मुनितपःकुटी वेत्यर्थः तया विना प्रासादादिकं कुटीवद्धानीति सर्व्वमुपेक्ष्येदानीमेव स्वगृ-

हश्चलनीयमित्याशयः प्राग्वंशः प्राक् हविर्गेहादित्यमरः पर्णशालोटजस्त्रियामित्यपि ॥ ४६० ॥

**रोगी राजायत इति जनवादं सत्यमद्य कलयामि ॥**
**आरोग्यपृच्छके त्वयि तल्पोपान्तागते सुभग ॥४६१॥**

नायिका नायकमाह रोगीति रोगी राजवदाचरतीतिलोकप्रवादः अद्य अहं तथ्यं जानामीत्यर्थः जनवादपदेन न द्वितीया एतेनाभ्युत्थानाद्यदाकोपो मास्त्विति व्यज्यते त्वयि आरोग्यपृच्छके रोगानवृत्तिप्रश्नकर्त्तरि तल्पोपान्तागते मत्समीपभूमिं प्राप्ते इत्यर्थः सुभगपदेनौदासिन्येन चिरकालानन्तरजिज्ञासया कोपो व्यज्यते भूमावुपविश्यारोग्यप्रश्नेनैव गुरुसमक्षं मम सर्व्वं सम्पन्नं तावतौदास्यं नोचितमित्याशयः कश्चिद्वैद्यं प्रति नायिकोक्तिरियमित्याह तन्न नाडीपरीक्षकस्य प्रश्नानुपपत्तेः राजेतिसुभगेतिच पदयोर्व्यर्थत्वापत्तेश्च ॥४६१॥

**रुद्धस्वरसप्रसरस्यालिभिरग्रे नतं प्रियम्प्रति मे ॥**
**स्रोतस इव निम्नम्प्रति रागस्य द्विगुण आवेगः ॥४६२॥**

नायिका सखीमाह रुद्धेति अग्रे नतं प्रणतं प्रियं प्रतिप्रेम्णः द्विगुणआवेगः आधिक्यमित्यर्थः पक्षे शीघ्रतेत्यर्थः आलिभिः सखीभिः रुद्धो मानार्थस्वेच्छायाः प्रसरः कार्य्यकारित्वं यस्य तस्येत्यर्थः पक्षे स्वेच्छया गमनमित्यर्थः यद्वा स्वरसस्य स्वजलस्य प्रसरः प्रवाह इत्यर्थः स्रोतस इव प्रवाहस्येवेत्यर्थः निम्नं नीचदेशं प्रति यथा तथेत्यर्थः सखीरुद्धस्य प्रेम्णः प्रियं दृष्ट्वा स्वभावेन द्वैगुण्यमित्यर्थः ॥ ४६२ ॥

**रूपमिदं कान्तिरसावयमुत्कर्षः सुवर्णरचनेयम् ॥**
**दुर्गतमिलिता ललिते भ्रमसि प्रतिमन्दिरद्वारम् ॥४६३॥**

प्रतारणया केनचिद्भिक्षुणा संगतां नवीनवयस्कां स्वनिकटे स्थापयितुं काचिद्गोपजीविन्याह रूपमिति इदं सुन्दरं रूपं गौरत्वादिति कान्तिः प्रभाप्रवाहः असौ दौष्कौल्येपि विद्यमानः अयं सकलनायिकाशिरोमणित्व-

सूचकः सुवर्णानां सुन्दरककारादिवर्णानां रचनोच्चारणरूपेयं भाग्यसूचकेत्यर्थः यद्वा सुवर्णस्य हेम्नः पूर्व्वपतिदत्तस्य रचनाऽलंकरणनिर्म्माणरूपेयं प्रत्यक्षेत्यर्थः दरिद्रेण संगता त्वं ललिते समुदायसुन्दरि तथा च प्रत्येकावयवसौन्दर्यसमुदायसौन्दर्य्याभ्यां युते इत्यर्थः प्रतिमन्दिरद्वारं भिक्षार्थं दरिद्रेण नीतासीत्यर्थः यद्वा चैतन्यं विना सर्व्वं वृथेति भिक्षुकहस्तगतां शालभञ्जीमुद्दिश्य कश्चिदाह सुवर्णरचना हेमरचनेत्यर्थः वस्तुतस्तु दरिद्रनायिकामतिसुन्दरीं महाधनेन स्वनायकेन संगमयितुं शालभञ्जिकोक्तिच्छलेनाहेति तत्वं दर्शनमात्रसाभिलाषलम्पटोक्तिरियमित्यपि कश्चित् ॥४६३॥

**रचिते निकुञ्जपत्रैर्भिक्षुकपात्रे ददाति सावज्ञम् ॥**
**पर्य्युषितमपि सुतीक्ष्णश्वासकदुष्णं वधूरन्नम् ॥४६४॥**

अस्या उपपतिसङ्गाऽस्मिन्निकुञ्जे इति मया ज्ञातमिति कश्चित्कश्चिदाह रचिते इति निकुञ्जपत्रैः सङ्केतकुञ्जपत्रैः बहुवचनेन बहुपत्रत्रोटनेन सङ्केतस्यानावृतत्वेन बहुकालवियोगेनावज्ञाश्वासोष्णताद्यं युक्तत्वमावेद्यते भिक्षुकपात्रे इत्यनेन स्वल्पपत्रसाध्यत्वं कथ्यते सावहेलं ददाति कोपात्पर्य्युषितमपि भिक्षुकाय पूर्व्वदिनस्थापितमपि पूर्व्वदिनानागमनेनापि कोप एवेति अप्यर्थः श्वासेन भविष्यद्विरहजेनेषदुष्णमन्नं वधूः युवतीत्यर्थः एवं प्रत्यहं नायासि यद्यायासि तदा ममाप्रियमाचरन्नेवेत्याशयः इदमेव निकुञ्जमस्यास्संकेतस्थलमिति कोपेन मया ज्ञातमित्याशयः यद्वाऽयमेव भिक्षुकोऽस्याः उपपतिरिति मया ज्ञातमिति काचित् कश्चिदाह निकुञ्जपत्रैः भिक्षुकसङ्केतनिकुञ्जपत्रैः पात्रे रचिते एवञ्च मया गतं न त्वया गतमित्याशयः अत एव कोपेन बहुपत्रभङ्गः पर्य्युषितमित्यनेन व्यवस्थां कृत्वा नागतो भूरिति कोपात्तदेवान्नं गृहाणेत्याशयः तथा च त्वं प्रत्यहं नायास्यतो मयापि नागतमिति वाक्यार्थः ॥४६४॥

**रक्षति न सखि निजस्थितिमलघुः स्थापयति नायकः स यथा ॥**
**तिष्ठति तथैव तद्गुणविद्धेयं हारयष्टिरिव ॥४६५॥**

इयमिदानीं जारासक्ताऽस्मदुपदेशं न शृणोतीति काश्चिन्नायिकासपत्नी

वदति रक्षतीति हे सखि इयं सपत्नी स नायक उपपतिः येन प्रकारेण स्थापयति व्यापारयतीत्यर्थः तथैव तत्प्रकारेणैव तिष्ठतीति नियमेन स्थिता तस्य नायकस्य गुणेन सौन्दर्य्यादिना विद्धा वशीभूतेत्यर्थः निजस्वभावं न रक्षत्येतत्कुलोचितं किमपि न करोतीत्यर्थः अलघुः महानायक इत्यर्थः यथा हारयष्टि मेरुः स्वसूत्रविद्धां पराधीनां करोतीति यद्वा अलघुः अनर्घ्येत्यर्थः यौवनमत्तेति यावत् नायकः श्रेष्ठपुरुषे हारमध्यमणावपीतिविश्वः ॥४६५॥

**राजसि कृशाङ्गि मङ्गलकलशी सहकारपल्लवेनेव ॥**
**तेनैव चुम्बितमुखी प्रथमाविर्भूतरागेण ॥४६६॥**

बाल्यमारभ्यासक्तनायकेन कृतोद्वाहां सखीं सखी परिहसति राजसीति कृशाङ्गि नूतनविवाहवति आम्रपल्लवेन मङ्गलकर्म्मकलशीव शोभसे इत्यर्थः मङ्गलपदेन सर्व्वदर्शनीयत्वं पल्लवपदेन परम्परयोग्यत्वं च व्यज्यते तेनैव प्रथमप्रीतनायकेनैवेत्यर्थः चुम्बितं मुखं यस्यास्सेत्यर्थः प्रथमं बाल्ये आविर्भूतो रागोऽनुरागो यस्य तेनेत्यर्थः तथा च कौमारसमये कः पतिस्तेभिप्रेत इति पृष्टया त्वया यस्य नाम गृहीतं स एव ते पतिसंपन्न इति सखीपरिहासो वाक्यार्थः ॥४६६॥

**रूपगुणहीनभार्य्या भवति लघुर्द्धूलिरनितचपलेव ॥**
**प्रथयति पृथुगुणनेया तरुणी तरणीव गरिमाणम् ॥४६७॥**

कुरूपातिनिन्दितनायिकासङ्गतं सखायं सखाह रूपेति रूपेण सौन्दर्य्यादिना गुणेन चातुर्य्यादिना शून्या भार्य्या ऊढा लघुः लाघवहेतुरित्यर्थः पक्षे रूपं नीलादिः गुणः गुरुत्वादिः तद्रहिता वायुचञ्चला धूलिरिवेत्यर्थः पृथुना महता गुणेन चातुर्य्यादिना पक्षे सूत्रेण नेया नयनयोग्या तरुणी युवती गरिमाणं महत्वं पक्षे महाशयत्वं ख्यापयतीत्यर्थः एवञ्च स्वस्त्र्यपि तुच्छा लाघवहेतुः कुत्सिता सर्व्वथा त्याज्येत्याशयः ॥४६७॥

**रागे नवे विजृम्भितविरहक्लममन्दमन्दाक्षे ॥**
**सस्मितसलज्जमीक्षितमिदमिष्टं सिद्धमाचष्टे ॥४६८॥**

नवीनं प्रेम कृत्वा मुग्धया सह पश्चात्तामननुज्ञाप्य क्वचिद्गतः पुनरागत्य विरहखिन्नं त्रुटितरागाशङ्काव्याकुलं नायकं नायिकासख्याह रागेति रागे स्नेहे नवे श्रेष्ठेऽचिरोत्पादितत्वेनास्थिरे विजृम्भतेन आरम्भसमये एव त्रियोगदुर्व्व-लेनेत्यर्थः विरहेण यः क्लेशः दुःखाधिक्यं तेन स्वल्पं मन्दाक्षं लज्जा यत्र तस्मिन् त्वदागमनानन्दपूर्व्वकलेशाधिना मुग्धत्वात्कर्त्तव्यामपि लज्जां न करो-तीत्याशयः स्मितसहितलज्जापूर्व्वकमिदं निरीक्षणं नायिकाकृतं कर्तृ इष्टं तवाभिप्रेतं सिद्धं कथयतीत्यर्थः पूर्व्वं लज्जाद्यभावेपि तव दर्शनमात्रेण सल-ज्जत्वादिना निश्चीयते इत्याशयः सखायं सखाहेति वा वस्तुतः पतिविरहखिन्नां सस्पृहं कञ्चन पश्यन्तीं दृष्ट्वा दूत्युक्तिर्नायकं प्रतीति सम्यग्विचार्य्य त्वयि हृदयं दर्शयतीत्याशयः ॥४६८॥

**रोषोपि रसवतीनां न कर्क्कशो वा चिरानुबन्धी वा ॥**
**वर्षाणामुपलोपि हि सुस्निग्धः क्षणिककल्पश्च ॥४६६॥**

नायिकादूती नायकमाह रोषोपीति रसवतीनां सम्भोगादिसकलरसज्ञा-नामित्यर्थः पक्षे जलवतीनां रोषोपि मानोपि अपिः समुच्चये न कर्क्कशः परुष-वचनतुच्छक्रियो नेत्यर्थः पक्षे व्यक्तकठिनतादोषो नेत्यर्थः न च चिरस्थायी भवतीति समानं वर्षाणामुपलः करका यथा सुस्निग्धा अचिरकालस्था तथेत्यर्थः एवञ्च मम सख्याः कोपोपि सुखायेत्यधुनैव दर्शनार्थं चलनीयमित्याशयः ॥४६६॥

**रोदनमेतद्धन्यं सखि किं बहु मृत्युरपि ममानर्घ्यः ॥**
**स्वप्नेनेव हि निहितो नयनमनोहारिणा तेन ५००॥**

रोषं त्यजेतिवादिनीं सखीं नायिकाह रोदनमिति एतद्वियोगादिनावधि सत-तं रोदनं धन्यं प्रियहेतुकत्वात् हे सखि किं बहु वक्तव्यमित्यर्थः तेन प्रियेण विहितः सम्पादितः मृत्युरपि मरणमपि अनर्घ्यः बहुमूल्य इत्यर्थः मरणेनापि स न त्यज्यते किं रोदनादिनेतिभावः तेन कथंभूतेन नयनमनोहारिणा सौन्दर्य्यान्नयनहारिणा सकलगुणाश्रयत्वान्मनोहारिणा च कदाचित् युगपदुभयहारिणेत्यर्थः नयनमनो-

व्यापारहारिणा स्वप्नेनेव यथा स्वप्ने रोदनं मरणं वा इष्टमेव जनयति तथा प्रियेण कारितं तदुभयमिष्टजनकमेवेतिभावः ॥५००॥

**रोषेणैव मया सखि वक्रोपि ग्रन्थिलोपि कठिनोपि ॥**
**ऋजुतामानीतोयं सद्यः स्वेदेन वंश इव ॥५०१॥**

रोषेणेति हे सखि असौ नायको सुदुष्टत्वेन प्रसिद्धः ऋजुतां नायिकाभिप्रेतमार्गमित्यर्थः पक्षे सरलतामानीतः प्रापितः सद्यः तत्क्षणमित्यर्थः वक्रः कुटिलः पक्षे अनृजुरित्यर्थः ग्रन्थिलो गूढदुष्टाशयः पक्षे ग्रन्थिमयः कठिनो दयाशून्यः पक्षे कठिनस्पर्श इत्यर्थः वंशो वेणुर्यथेत्यर्थः अपिरेकस्य निवारणमन्याशक्यं किमु सर्व्वस्येति मम सामर्थ्यं सर्व्वाधिकमित्यावेद्यते तथा च सर्व्वप्रतारकोयमिति कोपेन सम्यक् प्रतार्य्य स्वाभिमतमखिलं संपाद्य पश्चान्निस्त्वमस्वं त्यक्ष्यामीति वेश्योक्तिः सखीं प्रति अथवाऽतिचतुरनायिकोक्तिः वस्तुतः सौन्दर्य्यादिसकलगुणवत्यपि बहुदोषनायकासक्ता त्वं कथमसीति वादिनीं सखीं नायिका वदति पश्य मयाऽयं क्षणमध्ये सर्व्वदोषशून्यः कृत इति ॥ ५०१ ॥

**रजनीमियमुपनेतुं पितृप्रसूः प्रथममुपस्थे ॥**
**रञ्जयति स्वयमिन्दुं कुनायकं दुष्टदूतीव ॥ ५०२ ॥**

तत्र नायको दूत्याशक्त इत्यन्योक्त्या सखीं सखी वदति रजनीमिति इयं प्रत्यक्षा पितृप्रसूः सायंसन्ध्या रजन्याः प्रथमं रजनीं रात्रिमुपनेतुं चन्द्रेण सङ्गमयितुमुपतस्थे आगता स्वयमेव रञ्जयति रक्तं करोत्युदये रक्तस्वभावत्वात् अथ च रमयतीत्यर्थः यथा कुत्सितं नायकं नायिकां वञ्चयित्वा दुष्टा दूती रमयतीत्यर्थः ईदृश एव नायक इति भावः सायंसन्ध्या पितृप्रसूरित्यमरः यद्वा नायकानुरञ्जने कस्यापि विश्वासो नोचित इति सखी नायिकां वदति ॥ ५०२ ॥

॥ इति श्रीसचलविरचितं रकारव्रज्या समाप्ता ॥

**लग्नासि कृष्णवर्त्मनि सुस्निग्धे वर्त्ति हन्त दग्धासि ॥**
**अयमखिलनयनसुभगो न भुक्तमुक्तां पुनः स्पृशति ॥ ५०३ ॥**

बहुनायिकासुलभनायकातिसक्तां सखीमन्योक्त्या सदसि निवारयन्ती सखी वक्ति लग्नासीति तैलमये वर्त्तिके इत्यर्थः पक्षेऽतिप्रेमवति लग्ना संबद्धा कृष्णवर्त्मनि वह्नौ पक्षे कृष्णस्य सकलसाधारणस्य श्रीकृष्णस्य वर्त्मनि मार्गे इत्यर्थः कृष्णपदेन कलङ्कः फलं भविष्यतीति सूच्यते हन्त खेदे दग्धासि भस्मीभूतासीत्यर्थः पक्षे सकलजनोपहास्यासीत्यर्थः अयं दीपः सकलजननयनसहकारी पक्षे सकलनायिकाकटाक्षसुखद इत्यर्थः भुक्तमुक्तां भस्मावशेषे त्यक्तां पक्षे एकदा भोगं कृत्वा त्यक्तामित्यर्थः पुनः कदाचिदपि न स्पृशति तस्याः स्पर्शमपि न करोति भस्मनि वह्न्यसंबन्धात् पक्षे नायिकाबाहुल्यात् पुनस्सम्भोगस्य कासंभावनेत्यर्थः वर्हिः शुष्मा कृष्णवर्त्मेत्यमरः ॥ ५०३ ॥

**लक्ष्मीः शिक्षयति गुणानमून्पुनर्दुर्गतिर्विधूनयति ॥**
**पूर्णो भवति सुवृत्तस्तुषाररुचिरपचये वक्रः ॥५०४॥**

भाग्योदये सर्वगुणोदयो विपरीते विपरीतमिति कश्चित्कश्चिदाह लक्ष्मीरिति लक्ष्मीः सम्पत्तिः गुणान् चातुर्य्यादीन् प्रत्यक्षसिद्धान् शिक्षयति स्वभावादुपदिशतीत्यर्थः दुर्गतिरसंपत्तिः दारिद्र्यमिति यावत् गुणान् विधूनयति नाशयतीत्यर्थः दृष्टान्तमाह तुषाररुचिश्चन्द्रः पूर्णः पौर्णमास्यां स्थितः सुवृत्तः सुन्दरमण्डल इत्यर्थः अपचये शुक्लद्वितीयायां स्थितः वक्रः कलारूपत्वादपूर्णः वृत्तशून्यः स्वभावात् ॥ ५०४ ॥

**लूतातन्तुनिरुद्धद्वारः शून्यालयः पतत्पतगः ॥**
**पथिके तस्मिन्नञ्चलपिहितमुखो रोदितीव सखि ॥५०५॥**

काचित्सखी वदति लूतेति हे सखि शून्यालयः ग्रामसमीपस्थं जनरहितं तव शङ्के गृहमित्यर्थः तत्र नायके पथिके वैदेशिके सति अञ्चलेन वस्त्रान्तेन पिहितं गुप्तं मुखं यस्य स रोदनं कुर्व्वदिव लक्ष्यते इत्यर्थः लूतातन्तुभिर्म्मर्कटीसूत्रसमूहैः निरुद्धं द्वारं यस्य स पतंगः पक्षिणो यत्र एवञ्च तव सङ्केतस्थलं ज्ञात्वा न केनापि गम्यते त्वया नायकानन्तर नीत्वा तत्र गन्तव्यं द्वयोरपि रोदननिवारणम्भविष्यतीत्याशयः ॥ ५०५॥

लग्नं जघने तस्याः सुविशाले कलितकरिकरक्रीडे ॥
वप्रे सक्तं द्विपमिव शृङ्गारस्त्वां विभूषयति ॥५०६॥

दूतीनायकमाह लग्नमिति तस्याः मया योजितायाः जघने लग्नं रतासक्तं त्वां शृङ्गारः संभोगः पक्षे गजप्रसाधनं भूषयति शोभितं करोतीत्यर्थः एवञ्च तत्र कार्य्यं सम्पन्नं ममापि द्रव्यादिदानं सम्पादनीयमित्याशयः सुविशाले विस्तीर्णे कलिता प्रदर्शिता करिकरेण कामशास्त्रोक्तकरिहस्तनामकेन सय्योंजिता संकोचितनामिका मध्यमाद्वयेन प्रसारितकनिष्ठिकातर्ज्जनीकेन क्रीडा यत्र तस्मिन्नेत्यर्थः पक्षे करिकरेण शुण्डादण्डेनेत्यर्थः वप्रे उच्चस्थाने सक्तं गजमिवेत्यर्थः एवञ्च तुल्यपुष्टशरीरयोस्तरुणयोरेवमेव सर्व्वदास्त्वित्याशयः अश्लीलकथनं करणञ्च दूत्याद्युक्तो न दोषायेति कामशास्त्रम् ॥ ५०६ ॥

लिप्तं न मुखं नाङ्गं न पक्ष्मती न चरणाः परागेण ॥
अस्पृशतेव नलिन्या विदग्धमधुपेन मधु पीतम् ॥५०७॥

प्रथमत एव यौवनोद्धतनायकसंगता नायिका नायकमन्योक्त्याह लिप्तमिति परागेण लिप्तमिति वचनविपरिणामेण संबध्यते परागेण पुष्परजसा मुखाङ्गपक्षमूलचरणाश्च न लिप्ता लिप्ता इत्यर्थः विदग्धमधुपेन सकलनायकश्रेष्ठभ्रमरेण मधुपानेऽप्यनुचितमदशून्येनेत्याशयः पद्मिन्या मधु पीतं मध्वेव पीतं किमन्यत्परगोपनार्थं स्पर्शमकुर्व्वतेव पीतमेवञ्च भ्रमरवन्मद्यपानासक्तेनापि नायकेन महता दन्तनखघातशृङ्गाररसविभूषणदृढस्पर्शनादिसुरतलक्षकमकुर्व्वतेव परकीया भुज्यते तथा त्वया विधेयमिति व्यज्यते यद्वा पुलकमात्रं रतलक्षकं परिज्ञाय परिहसन्ती किमपि चिन्हं मम नेति सुरतं गोपयन्तीं सखीं सख्याह द्वयोरपि वैदग्ध्यातिशयस्सर्व्वाधिक इत्याशयः वस्तुतः कस्यचिन्नायिकां सङ्केतस्थलमानीय भीता दूती नायकमाहेति तत्त्वम् ॥५०७॥

लग्नं जघने तस्याः शुष्यति नखलक्ष्म मानसं च मम ॥
भग्नमविशदमवेदनमिदमधिकरागसाबाधम् ॥५०८॥

विदेशे नायकश्चिन्तयति लग्नमिति तस्या जघने लग्नं मया दत्तं नखचिह्नं मम मानसञ्च सममेव शुष्कं भवति शोषे विशेषमाह नखचिह्नं भग्नं द्वितीयचिह्नरहितं वियोगादित्याशयः विभक्तं वा अविशदमश्वेतं किञ्चिदरुणमिति यावत् न वेदनं पीडारहितं कामोद्भवात् इदं मानसमधिकरागं समधिकानुरागं पक्षे लोहितं साबाधम् उत्कटपीडया सह वर्त्तमानं कदा तस्यास्समागमो भवितेति विरहिनायकचिन्तावाक्यार्थः दूतीं प्रति नायकोक्तिरिति वा तत्र शीघ्रं यथामिलनम्भवति तथा विधेयमितिवाक्यार्थः ॥५०८॥

**लज्जयितुमखिलगोपीनिपीतमनसं मधुद्विषं राधा ॥**
**अज्ञेव पृच्छति कथां शम्भोर्दयिताद्धतुष्टस्य ॥५०६॥**

एवं रीत्या पत्युरन्यस्त्रीभोगनिवारणं कर्त्तव्यं नतु कोपादिनेत्युपदिशति सखी सखीम् लज्जयितुमिति शम्भोः शिवस्य कथां राधा पृच्छति दयितायाः पार्वत्या यदर्द्धं तेन तुष्टस्य प्राप्तसविधभोगस्यात्युत्तमपुरुषस्यापि शिवस्य दयिताद्धेन कथं परितोष इति कथामित्यर्थः यथा च परमेश्वरोप्यर्द्धपरितुष्टः त्वं तु परस्त्रीकोटिभिरप्यतुष्ट एवेतिचित्रम् ॥५०६॥

**लक्ष्मीनिश्वासानलपिण्डीकृतदुग्धजलधिसारभुजः ॥**
**क्षीरनिधितीरसदसो यशांसि गायन्ति राधायाः ॥५१०॥**

स्त्रीजनस्य पतिवशीकरणमेव सकलसौख्यदं नान्यदिति कश्चिदाह लक्ष्मीरिति दुग्धसमुद्रसमीपस्थाः राधायाः यशांसि बहूनि गायन्ति गाने हेतुमाह लक्ष्म्याः निश्वासः राधासक्तस्य कृष्णस्य विरहादित्याशयः स एव दहनमयोऽनिलो वायुः तेन पिण्डीकृतं दुग्धजलधिसारं तद्भोजिन इत्यर्थः तथाच राधाप्रसादादेव लक्ष्मीनिश्वासस्तेनास्माकं चारुभोजनमित्याशयः राधाया वशीकरणेन लक्ष्मीरपि जितान्यासां का कथेति त्वयावश्यं पतिवशीकरणं कर्त्तव्यमिति सापत्न्ये दुःखं सर्व्वाधिकमिति ॥५१०॥

**लीलागारस्य बहिः सखीषु चरणातिथौ मयि प्रियया ॥**
**प्रकटीकृतः प्रसादो दत्वा वातायने व्यजनम् ॥५११॥**

अत्यन्तं कुपिता नायिका कृतमहापराधेनापि मया प्रसादितेति नायकस्स-खायमाह लीलेति क्रीडागृहस्य बहिर्गवाक्षसम्मुखे अनेन ताडनभयेन गृहगमन-मशक्यमिति व्यज्यते झटिति नायिकाप्रसादयोग्यता च सखीषु सर्व्वासु सतीष्वित्यर्थः बहुवचनेन सर्व्वासामनुकूलत्वेनावश्यं कार्य्यसिद्धिरिति व्यज्यते चरणातिथौ प्रणते सति मयीत्यर्थः प्रियया कोपेऽपि प्रियकारिण्या प्रसादः प्रकटीकृतो व्यक्तीकृत इत्यर्थः वातायने गवाक्षिकायां व्यजनं तालवृन्तविशेषं दत्वेत्यर्थः एवञ्च सर्व्वसखीचरणपतितं मां दृष्ट्वा सखीजनेनाकथनेऽपि मानो गतो गवाक्षमुद्रणेन लोकेनापि न दृश्यसे रतार्थमागन्तव्यमित्याशयः यद्वा वातायने व्यजनमदत्वेत्यर्थः सकलसखीचरणपतितं सस्पृहं मां दृष्ट्वा प्रसादो व्यक्तीकृतः नतु दर्शने विघ्नलेशोऽपि कृतः यद्वा दत्वा त्यक्त्वा तथा च व्यजनमपि तापहारि त्यक्तं त्वामपहाय नान्यस्तापहारीति प्रसादसूचनाय यद्वा प्रसादः प्रकृष्टस्सादः अवसादः वियोगदुःखाधिक्यं गवाक्षे मम नयनपथे व्यजनं दत्वा प्रकटीकृतः दिवानिशं व्यजनहस्तयैव मया स्थीयते त्वां विना तापशान्तिर्न्न ममेति भावः यद्वा पवनकारकमपि व्यजनं स्वदोषेणैव गवाक्षपवनरोधकं पश्य ममैव दोषः तव न कोपीति वा अन्ये सम्भवन्तोपि कियन्तोर्था विस्तरभयान्न लिखिताः ॥५११॥

इति श्रीसचलविरचितायां गोवर्द्धनसप्तशतीटीकायां लकारव्रज्या समाप्ता ।

**वर्णहतिर्न्न ललाटे न लुलितमंगं नचाधरे दंशः ॥**
**उत्पलमहारि वारि च न स्पृष्टमुपायचतुरेण ॥५१२॥**

काचित्काञ्चिदाह वर्णेति ललाटे भाले वर्णहतिः घृतमिश्रितसिन्दूरादिवि-लुप्ति न कृता अङ्गं कपोलकुचादि न लुलितमित्यर्थः अधरे दन्तदंशोऽपि नेत्यर्थः दृष्टा-न्तमाह उपायं जानता केनचिदुत्पन्नं कमलादि हृतं जलं न स्पृष्टं यथेत्यर्थः तथाचानेनात्यन्तचतुरेण सर्व्वप्रकारकगोपनेनेयं भुज्यते केनापि न ज्ञायते मया तु महता श्रमेण किञ्चिदनुमितमित्याशयः ॥५१२॥

**व्यालम्बिचूर्णकुन्तलचुम्बितनयनाञ्चले मुखे तस्याः ॥**
**बाष्पजलबिन्दवोलकमुक्ता इव पान्थ निपतन्ति ॥५१३॥**

विदेशस्थं नायकं कश्चिद्वदति व्यालम्बीति हे पान्थ त्वन्नामैव पथिकेति तेन कदा वैदेश्यं कर्त्तव्यमिति न जानासीत्याशयः तस्यास्तव पत्न्याः पतिव्रताया वदने अश्रुजलबिन्दवः निपतन्ति अलकमुक्ता इव चूर्णकुन्तलस्य मुक्ता इवेत्यर्थः मुखे किंभूते व्यालम्बिनो ये केशास्तैश्चुम्बितं नयनकोणं यस्य तस्मिन्नित्यर्थः तथाच यदवधि त्वमागतस्तदवधि केशादिसम्मार्ज्जनाभावेन नयनपतितकेशादश्रुबिन्दुनिपातोऽधुनापि दृश्यतेऽतस्त्वं झटिति गृहं व्रजेति वाक्यार्थः ॥५१३॥

**विनयविनता दिनेसौ निशि मदनकलाविलासलसदंगी ॥**
**निर्व्वाणज्वलितौषधिरिव निपुणप्रत्यभिज्ञेया ॥५१४॥**

दूती नायकं वदति विनयेति असौ नायिका दिवसे विनयेन विनताविशेषेण नम्रा रात्रौ कामकलाशोभिताङ्गीति अतिचतुरजनज्ञानगोचरा न सामान्यस्येत्यर्थः निर्व्वाणा दिवसे प्रकाशशून्या रात्रौ उज्ज्वलिता देदीप्यमानौषधिरिवेत्यर्थः एवञ्चात्यन्तविदग्ध्या मया तवाधीना क्रियते इति यद्वा निर्गुणायामस्यामतिविदग्धोपि नायकः कथमनुरक्त इतिवादिनीं काञ्चित्काचिदाह तथाच रहसि निपुणेयं नायकोपि तथैव उचितमेव प्रेम द्वयोरितिभावः ॥५१४॥

**विहितबहुमानमौना सखीपुरो धैर्य्यदम्भमातनुते ॥**
**रागार्त्तिकाकुयाच्ञा लघुवीक्ष्या रहसि पुनरेषा ॥५१५॥**

इयं वृथादम्भशालिनीति काचित् काञ्चिद्वदति विहितेति बहुविधसम्मानेपि कृते मौनावलम्बिनीत्यर्थः अभिमानमयीतियावत् सखीनामग्रे धैर्य्यं दम्भं च विस्तारयतीत्यर्थः रहस्येकान्ते नायकसमीपे अनुरागेण अर्त्या काक्वा मामङ्गीकुर्व्विति याचनेन च लघुवीक्ष्या लघुजनदर्शनीयेत्यर्थः यद्वा लघ्वी वीक्ष्या नर्त्तकीव वीक्षणयोग्येत्यर्थः लघुर्वीर्य्येति पाठे च अल्पपराक्रमेत्यर्थः पुनश्शब्देन क्षणे क्षणे वैपरीत्यं सूचयते एषेत्यनेन निन्दितत्वं तथा च नायिका कलङ्करूपेय-

मित्याशयः यद्वा सखीमध्ये साभिमानां दृष्ट्वा विमुखं नायकं दूती वदति सभायामेवेदृशी रहसि स्वल्पप्रयाससाध्या तवार्धानैवेति व्यज्यते ॥५१५॥

**विषमशरविशिखखिन्ना पल्ली शरणं यमेकमभिलषति ॥**
**तस्य तव च्छायेव स्वीया जायाऽपि भयभूमिः ॥ ५१६ ॥**

धनिनं पल्लीपतिपुत्रं स्वनायिकाभीत्या पल्लीनायिकाविमुखं पल्ली नायिकया संगमयितुं दूत्याह विषमेति यम् एकं सकलयुवमुख्यं पल्ली पल्लीस्था नायिका सर्व्वेत्यर्थः विषमशरेण कामशरेण व्याकुलेत्यर्थः शरणं त्राणकर्त्तारमिच्छतीत्यर्थः विषमेत्यनेन नायिकायाःसुखसाध्यत्वं पल्लीपदेन बहुत्वं शरणपदेन सकलदुःखनिवारणक्षमत्वमभिलषति पदेन श्रेष्ठनायकानुरागवत्वं व्यज्यते तस्य सकलश्रेष्ठस्य तव स्वीया स्वीयैव अपिरवधारणे भिन्नक्रमान्वितः भयस्य पल्लीनायिका भोगे भयस्य हेतुः काक्वा नेत्यर्थः भयाभावे हेतुमाह छायेव सर्व्वदानुगतेत्यर्थः तवाभिप्रेतमात्रकारिणीति यावत् तथा च पतिव्रतायास्तवाभिप्रेतमात्रकारिण्यास्तव न किमपि भयं मयानीताः पल्लीनायिका यथेष्टं भुङ्क्ष्वेतिवाक्यार्थः स्वजायाविमुखं प्रति कस्यचिदुक्तिः वैमुख्यमनुचितमिति वाक्यार्थ इति ऋजवः ॥५१६॥

**विविधायुधव्रणार्बुदविषमे वक्षःस्थले प्रियतमस्य ॥**
**श्रीरपि वीरवधूरपि गर्व्वोत्पुलका सुखं स्वपिति ॥५१७॥**

प्रायो वीरताः स्त्रियेत्यत्र स्त्रीपदेन सर्व्वापिविवक्षिता न च काचिदिति कश्चित्कश्चित्प्रत्याह विविधेति प्रियतमस्य पत्युः पक्षे शूरस्य वक्षसि विविधास्त्रप्रहारकृतव्रणगोलकेन निम्नोन्नते लक्ष्मीरपि वीरपत्न्यपि सुखेन स्वापं करोति पक्षे तिष्ठतीत्यर्थः अपिद्वयं समुच्चये गर्व्वेण रोमाञ्चिता पक्षे प्रष्टेत्यर्थः एवञ्च अर्बुदो मांसपिण्डे स्यात्संख्याभेदेपि कीर्त्तित इति धरणिः मृदुं नायकं दूती वक्ति पराक्रमः कर्त्तव्य इति वा प्रौढभार्य्याम्प्रति कश्चिद्वदतीति वा ॥ ५१७ ॥

**वैमुख्येपि विमुक्ताः शरा इवान्याययोधिनो वितनोः ।**
**भिन्दन्ति पृष्ठपतिताः प्रिय हृदयं मम तव श्वासाः॥५१८॥**

अन्यनायिकाभोगिनं नायकं नायिका वदति वैमुख्ये इति हे प्रिय विरोधि लक्षणया प्रेमशून्येत्यर्थः तव श्वासा नायिकान्तररतश्रमजनितदीर्घनिश्वासा इत्यर्थः मम मानसं विदारयन्तीत्यर्थः पृष्ठदेशे लग्नाः पृष्ठदेशे सुप्तत्वात् वैमुख्येपि विपरीतस्वापेपि अनुरागशून्यत्वेपीतिवाक्यार्थः विशेषेण त्यक्ताः कपटस्नेहद्योतनार्थमित्याशयः पक्षे क्षिप्ता इत्यर्थः विगतशरीरस्य कामस्यान्याययुद्धप्रवृत्तस्य बाणा इवेत्यर्थः इदानीं रतिस्पृहा तव नास्त्येवेति भावः मम प्रतारणार्थं मुक्ता अपि तव श्वासा हृदयं सकामं कुर्व्वन्त्येवेति मम न कोपलेशोपीति वार्थः ॥ ५१८ ॥

**व्यक्तमधुना समेतः खण्डो मधुराक्षि दशनवसने ते ॥**
**यन्नवसुधैकसारं लोभिनि तत्किमपि नाद्राक्षम् ॥ ५१६॥**

कश्चिन्नायिकां वदति व्यक्तमिति हे मधुराक्षि मधुरे दर्शनसुखजनके नयने यस्यास्तत्सम्बोधनं मदिराक्षीति क्वचित्पाठः स एवार्थः दशनवसने दशनच्छदे मिलितः खण्डः शर्कराविशेषः अनुभूत इति शेषः हे लोभिनि लोभसक्ते इत्यर्थः वचनगोपनेन लोभः सुधैकसारं सुधामुख्यसारं तद्वचनं यत् किमप्यनिर्व्वचनीयमित्यर्थः नाद्राक्षं नाश्रौषमित्यर्थः तथा च मुखमुद्रणं नोचितमित्याशयः यद्वा कदाचिदधिकपीडितां स्वल्पचुम्बनसम्भाषणपरां रतविमुखीं रतिसिद्ध्यर्थं नायक आह व्यक्तमिति हे मदिराक्षि मदयुते अरुणे अक्षिणी यस्या इत्यर्थः मदिरापदेन घूर्णितत्वं नवीनयौवनारम्भो रताभिप्रायश्च सूच्यते तव दशनवसने अधरे खण्डः शर्कराखण्डः किंभूतः व्यक्तमधुना स्वच्छमधुना माक्षिकेन समेतः मिलितः तथाच मधुशर्कराच तवाधरे द्वयमप्यस्ति यत्किमपि सर्व्वोत्कृष्टं विशिष्यवक्तुमशक्यं सम्भोगाख्यमिति यावत्तत्तदपि न वसुधैकसारं नवीनाप्रसिद्धसुधामयमित्यर्थः सुधाधिकमिष्टमिति यद्वा तद्वसुधैकसारं नेत्यर्थः सर्व्वसारमितिभावः नापश्यमेकदानुभूतमेवेत्यर्थः अथ च भिन्नभिन्नरसेपि मध्वादौ द्राक्षामिष्टासर्वत्रास्तीत्याशयः तथा च किञ्चिद्ददासि किञ्चिन्नेति लोभिष्ठा त्वं प्रथमसुरतवत् द्वितीयं सुरतं दत्वा मां सप्राणं कुर्व्विति वाक्यार्थः ॥५१६॥

**बालाविलासबन्धादप्रभवन्मनसि चिन्तयन् पूर्व्वम् ॥**
**सम्मानवर्जितां तां गृहिणीमेवानुशोचामि ॥ ५२० ॥**

कश्चित्सखायमाह वालेति इदानीं बालायाः पश्चादूढ़ायाः ये विलासबन्धाः क्रीडाप्रबन्धाः तेभ्यः अप्रभवन् अन्यत्र सर्व्वत्रासमर्थः प्रथममूढ़ायाः स्वल्पमपि सम्भाषणं कर्त्तु मशक्नुवन्नेत्यर्थः प्रथमं सम्मानेन महतीं तामिदानीं दीनामनुशोचामि अत्यन्तं दीना सा जातेत्यर्थः उभयसम्भाषणंनास्तीत्याशयः ॥ ५२० ॥

वीजयतोरन्योन्यं यूनोर्विंयुतानि सकलगगात्राणि ॥
सन्मैत्रीव श्रोणी परं निदाघेपि न विघटिता ॥ ५२१ ॥

कश्चिदाह वीजयतोरिति अन्योन्यं परस्परं वीजयतोः व्यजनचालनं कुर्व्वतोरित्यर्थः अन्योन्यपदेन युगपदेव व्यजनद्वयचालनं सूच्यते यूनोरित्यनेन समाभिलाषादि सूच्यते श्रोणीमपहाय सर्व्वाणि शरीराणि विभिन्नानीत्यर्थः निदाघेपि ग्रीष्मसमयेपि अनावश्यविघटनयोग्यता सूच्यते श्रोणी केवलं न विभिन्नेयर्थः सतां मित्रतेवेत्यर्थः सर्व्वापेक्षया कामावाधाधिकेति वाक्यार्थः ॥ ५२१ ॥

व्याकोपं मानिन्यास्तमो दिवः कासरं कलमभूमेः ॥
बद्धमलिञ्च नलिन्याः प्रभातसन्ध्यापसारयति ॥ ५२२ ॥

उपपतिविसर्ज्जनं शीघ्रं कर्त्तव्यमिति दूती नायिकां वक्ति मानिन्याः व्याकोपं कोपाधिक्यं व्याकोषमितिपाठे मुखमुद्रणमित्यर्थः प्रभातसन्ध्या प्रातःकालीना सन्ध्येत्यर्थः अपसारयति दूरीकरोतीत्यर्थः दिनस्यान्धकारमपसारयति कलमभूमेः शालिमयक्षेत्रस्य कासरं महिषमित्यर्थः अपसारयतीत्यन्वयः कमलिन्याः रात्रौ संकोचरुद्धं भ्रमरञ्चापसारयतीत्यन्वयः तथाच यथा मयानीतः गुप्तस्तथा गुप्त एव मया निष्काशनीय इत्याशयः ॥ ५२२ ॥

वक्षसि विजृम्भमाणे स्तनभिन्नं त्रुटति कञ्चुकं तस्याः ॥
पूर्वदयितानुरागस्तव हृदि न मनागपि त्रुटति ॥ ५२३ ॥

सखी नायकं वदति वक्षसीति वक्षसि वक्षस्तले विजृम्भमाणे उन्नतकुचशालिनीत्यर्थः कञ्चुकं कूर्प्पासकं कुचेन भिन्नं त्रुटति स्फुटतीत्यर्थः तस्याः ममसख्या इत्यर्थः तथाच मम सखी सर्व्वदा त्वय्यासक्ता तव स्मरणमात्रेण सका-

मा चेत्यर्थः तव तु पूर्व्वं या दयिता प्रिया तस्यां यो दृढ़ प्रेमा स तव हृदये क्षणमपि भग्नो न जायते सा सरला त्वमतीव वक्रः मम सख्या न बुध्यते किञ्चिदित्यर्थः ॥ ५२३ ॥

**व्यक्तिमवीक्ष्य तदन्यां तस्यामेवेति विदितमधुना तु ॥**
**हर्म्यहरिमुखमिव त्वामुभयोः साधारणं वेद्मि ॥५२४॥**

नायिकासखी नायकमाह व्यक्तिमिति तदन्यां व्यक्तिं सखीभिन्नां व्यक्तिमवीक्ष्यादृष्ट्वा द्वितीयां प्रेयसीमदृष्ट्वेत्यर्थः तस्यां मम सख्यामेवेत्यर्थः त्वमासक्त इतिशेषः मयेदानीमेव ज्ञातमिदं नतु पूर्व्वं त्वामुभयोः नायिकयोस्साधारणं समानं जानामीत्यर्थः गृहमध्यवर्त्तिगृहद्वारमिवेत्यर्थः गृहान्तर्व्वर्त्तिभवनद्वारं हरिमुखं विदुरितिव्याडिः ॥५२४॥

**व्यजनस्येव समीपे गतागतैस्तापहारिणो भवतः ॥**
**अञ्चलमिव चञ्चलतां मम सख्याः प्रापितं चेतः ॥ ५२५**

नायिकासखी नायकं वदति व्यजनेति भवतो नायकस्य वारंवारं समीपेगमनागमनैः मम सख्याश्चेतः चित्तं चञ्चलतां मदनातुरत्वं प्रापितमित्यन्वयः अञ्चलमिव मम सख्या इतस्ततः चलनेन वस्त्रं चित्तं च द्वयमपि चञ्चलमाभूदित्यर्थः तापहारिणः मदनसन्तापशान्तिकारकस्य व्यजनस्येव समीरणोत्पाद द्वारेण ग्रीष्मनाशकस्येवेत्यर्थः यथा त्वमुत्कण्ठितः तथा मम सखीत्याशयः यद्वा नायकं दूती वदति सख्या अञ्चलमिव मम चेतश्चञ्चलतां प्रापितमित्यन्वयः चिन्ता च कत्रानयोस्समागमो भविष्यतीति रूपा स्थलं दृष्ट्वा संगमः कार्य्य इत्याशयः ॥ ५२५ ॥

**वितरन्ती रसमन्तर्म्ममार्द्रभावन्तनोषि तनुगात्रि ॥**
**अन्तः सलिला सरिदिव निवससि बहिरदृश्याऽपि ॥५२६॥**

कस्याञ्चिन्नायिकायां दूतीप्रेषणायोग्यायां बहुकालसक्तोऽलब्धरतिर्न्नायकःकदाचिद्रहःप्राप्तां तामाह वितरन्तीति अन्तः अन्तःकरणे पक्षे वालुकाधः रसं रतिं

मन्दस्मितकटाक्षादिना पक्षे जलं वितरन्ती विस्तारयन्ती पक्षे धारयन्तीत्यर्थः हे कृशाङ्गि ममार्द्रभावं प्रत्यक्षीकृतशृङ्गाररसं पक्षे जलमयत्वं तनोषि विस्तारयसीत्यर्थः एवञ्च कटाक्षादिना ममाश्वासो जातोन्यथाकरणे विश्वासघात इति ध्वन्यते अन्तर्ज्जला नदीव मम हृदि निवससि अदृश्यान्तर्बहिरप्यदृश्येत्यर्थः यथा अन्तस्सलिला सरिद्वालुकानिस्सरणं विना रसेन कमपि न कृतार्थयति तथा त्वं सम्यग्दर्शनादि विना न मां जीवयसीतिवाक्यार्थः त्वयि मम महत् प्रेमास्तीति नायको नायिकामाहेति ऋजवः ॥५२६॥

विहितविविधानुबन्धो मानोन्नतयावधीरितो मानी ॥
लभते कुतः प्रबोधं स जागरित्वेव निद्राणः ॥५२७॥

प्रणिपातकारिणि सापराधेपि नायके मानत्यागः कर्त्तव्योऽवश्यमन्यथा रसाभासः स्यादित्युपदिशति नायिकामन्यवृत्तान्तेन सखी विहितेति मानी नायकः दूतीद्वारेण स्वयञ्च कृतो विविधोनेकप्रकारोऽनुबन्धोऽनुनयो येन स इत्यर्थः मानोन्नतयाऽधिकमानशालिन्यावधीरितः प्रणिपातपरोपि नाङ्गीकृत इत्यर्थः प्रबोधं परितोषं पक्षे जागरणं कथं लभते नैव लभते इत्यर्थः निद्राण इव आरब्धनिद्र इवेत्यर्थः ॥५२७॥

व्रीडाविमुखीं वीतस्नेहामाशङ्क्य काकुवाङ्मधुरे ॥
प्रेमार्द्रसापराधां दिशति दृशं वल्लभे बाला ॥५२८॥

नायकानुनयासक्ता दूती नायिकामाह त्वयानुतं कृतमित्यपि वदति प्रौढा सखीवक्ति व्रीडेति बाला मुग्धा वल्लभे प्रिये दृशं नयनं दिशति प्रेरयतीत्यर्थः दृशं किंभूतां प्रेमार्द्रां सस्नेहां वैमुख्येन सापराधामित्यर्थः बाला व्रीडया लज्जया नतु प्रेमशून्यत्वेन प्रवाङ्मुखेत्यर्थः वल्लभे काक्वा स्वरविशेषेण वचनेन च माधुर्य्यशालिनीत्यर्थः अनुनयेनैव वशीकर्त्तव्या नतु बलात्कारादिनेत्याशयः किं कृत्वा लज्जाविमुखीं मनाग्लज्जया कृतवैमुख्यां वीतस्नेहां गतप्रेमरसामाशङ्क्य नतु निश्चित्येत्यर्थः शङ्कामात्रेणेदृशी दशा निश्चये किं पुनः कर्त्तव्यमित्याशयः तथाच बालयाप्येवं क्रियते प्रौढया त्वया कोपितः प्रियोऽवश्यमनुनेतव्य इत्याशयः ॥५२८॥

बाष्पाकुलं प्रलपतोर्गृहिणि निवर्त्तस्व कान्त गच्छेति ।।
यातं दम्पत्योर्दिनमनुगमनाऽवधिसरस्तीरे ।।५२९।।

कश्चित्कञ्चिद्वदति बाष्पेति दम्पत्योः स्त्रीपुंसयोः दिनं समस्तमनुगमनकरणार्थं सरोवरनिकटे गतमित्यर्थः सरः पदेन रात्रिवासायोग्यत्वं तेन परावृत्य आगमनमिति व्यज्यते बाष्पाकुलं यथा स्याद्रोदनाकुलं यथा स्यादित्यर्थः प्रलपतोरनर्थकवचनेन दिवसं नयतोरित्यर्थः तदेवाह हे गृहिणि निवृत्ताभावेतिकान्तवाक्यं कान्तगच्छेतिगृहिण्या वाक्यमिति प्रलपतोरित्यन्वयः प्रेमोल्लङ्घनमतीवकठिनमित्याशयः ॥ ५२९ ॥

वक्षःशापिनि दीर्घश्वासे वाङ्मात्रसुघटितघनघर्म्मे ।।
सुतनु ललाटनिवेशितललाटिके तिष्ठ विजितासि ।।५३०।।

मया पुरुषायितया सुरतसमापनं कर्त्तव्यमिति प्रतिज्ञायारब्धविपरीतरतां झटिति शान्तां बालामुपहसति नायकः हे सुतनु सुन्दरशरीरे एवञ्च विकाराधिक्येन व्याकुलासोढ़मशक्येति व्यज्यते वक्षःशापिनि व्यापाराक्षमत्वात् दीर्घश्वासे नविडरतनिश्वासे अग्रेप्यसामर्थ्यात् वाङ्मात्रसौन्दर्य्ययुक्तं नतु युद्धसामर्थ्यमितिभावः श्रमं विनैव निविडघर्म्ममये इत्यर्थः ललाटे मम ललाटदेशे निवेशिता ललाटिका यया सेत्यर्थः मदुपर्य्येव पतिता तिष्ठानुक्रमरतं कुर्व्वित्यर्थः विवादे हीनप्रतिज्ञस्याक्षरेण व्यञ्जनालभ्यमपि भङ्गं निर्दिशति विजितासीत्यर्थः वृथागर्व्विताासीत्याशयः ॥५३०॥

विचरति परितः कृष्णे राधायां राजचपलनयनायाम् ।।
दशदिग्वेधविशुद्धं विशिखं विदधाति कुसुमेषुः ।।५३१।।

कृष्णे शृङ्गारे सर्व्वदिक्षु संचारशीले सति रागेणानुरागेण चञ्चलनेत्रायां राधायां सत्यामित्यर्थः यथा कृष्णः सर्व्वदिग्गामी तथानयनमपि दशदिक्षु वेधे विशुद्धं शरं कामो विदधातीवेत्यर्थः एतावदेव स्नेहसारमितिकवेरुक्तिः कृष्णे राधासक्तो जातइति कश्चित् वदति वा ॥५३१॥

**वीक्ष्यैव वेत्ति पथिकः पीवरबहुवायसं निजावासम् ॥**
**सौन्दर्य्यैकनिधेरपि दयितायाश्चरितमविचलितम् ॥५३२॥**

काचित् परदेशस्थपतिकामाह वीक्ष्यैवेति पथिको विदेशादागतः वीक्ष्यैव दृष्ट्वैव प्रियायाः चरितमाचरितमविचलितमदुष्टं पातिव्रत्यसूचकं वेत्ति जानातीत्यर्थः किंभूतायाः सौन्दर्य्यैकनिधेः एवञ्च चरितभङ्गयोग्यता सूच्यते किं वीक्ष्य निजगृहमनेकपुष्टवायसमित्यर्थः पत्यागमनशकुनसूचकबलिदानेन पातिव्रत्यसूचनमेवञ्च पतिं प्रतारयसीत्याशयः ॥५३२॥

**विमुखे चतुर्म्मुखेपि श्रितवति चानीशभावमीशेपि ॥**
**मग्नमहीनिस्तारे हरिः परं स्तब्धरोमाऽभूत् ॥५३३॥**

महाविपदुद्धारे पुरुषोत्तमस्यैवोत्साहो नान्यस्येति कश्चिदन्योक्त्या वदति चतुर्म्मुखे ब्रह्मणि विमुखे सुखशून्ये इतिविरोधे उद्धारपराङ्मुखे इत्यविरोधः ईशेपि समर्थेप्यनीशभावमीशत्वाभावं श्रितवतीतिविरोधे उत्साहशून्यत्वमिति तत्परिहारः निमग्नाया धराया उद्धरणे हरिः विष्णुस्तब्धरोमा शूकरावतारोभूदित्यर्थः रोमाञ्चितशरीरश्चाभूदित्यर्थः चतुर्म्मुखेशपदाभ्यां योग्यस्यापि तदकरणेन हीनत्वं विष्णौ सर्व्वाधिक्यंच व्यज्यते तेन परोपकारोऽवश्यं कर्त्तव्य इति व्यज्यते ॥५३३॥

**वापीकच्छे वासः कण्टकवृतयः सजागरा भ्रमराः ॥**
**केतकविटप किमेतैर्न्ननु वारय मञ्जरीगन्धम् ॥५३४॥**

काञ्चिदसतीं नानाप्रतिबोधेन सतीं कर्त्तुं व्याकुलं कश्चिदाह वापीति केतकवृक्ष एवञ्च सकण्टकत्वेन क्रूरत्वं तेन परनिवारणसामर्थ्यं व्यज्यते विटपपदेन धूर्त्तत्वं व्यज्यते एभिः पूर्व्वोक्तरक्षकैः किं फलं न किमपीत्यर्थः मञ्जरीसौरभं वारयेत्यर्थः मञ्जरीगन्धपदेन रूपचापल्यादिख्यातिरुच्यते नन्ववधारणे तथाचैतत्स्वभावनिवारणमशक्यमेवेति भावः निवारणप्रकारमाह वापीकूले वासः नौकागमनसाध्ये स्थले निवासः तत्रापि कण्टकमय्यो वृतयः वेष्टनानि पक्षे सावधान-

परिजनानि गोपनानि भ्रमरा अलयः पक्षे यामिकास्सर्व्वदाजागरणशीला इत्यर्थः एवञ्च सा स्वैरिणी रुद्धापि चापल्यं करोत्येवेति वृथा तव प्रयास इत्याशयः ॥५३४॥

**विचलसि मुग्धे विधृता यथा तथाविशसि हृदयमदये मे ॥**
**शक्तिःप्रसूनधनुषःप्रकम्पलक्ष्यं स्पृशन्तीव ॥५३५॥**

नायको नायिकां वक्ति विचलसीति मुग्धे सुन्दरि विधृता हस्तादावित्यर्थः यथा येन प्रकारेण तथा तेन प्रकारेण मम हृदयं प्रविशसीत्यर्थः अदये दयाशून्ये इत्यर्थः तत्रापि गन्तुमुद्यतासीत्यर्थः लक्ष्यं शरव्यं प्रकल्प्य चिन्तयित्वा सम्यग्निरूप्येतियावत् कामस्य स्पर्शसाचण्डीशक्तिरेवेत्यर्थः तथाच सम्यग्लग्ना कामशक्तिर्ईशमीमवस्थामापादयत्येवमेव त्वमपसृता यदि तदा ममापि तथैव स्यादिति भावः ॥५३५॥

**विहितासमशरसमरो जितगांगेयच्छविः कृताटोपः ॥**
**पुरुषायितो विराजति देहस्तव सखि शिखण्डीव ॥५३६॥**

दूती सखी नायिकां वदति विहितेति तव देहो विराजति हे सखि तव विपरीतरतमपि मां दर्शयसि धन्याहं नायकोपि मयि तोषमेष्यतीत्याशयः विहितः वारंवारं कृतः असमशरसमरः अनुक्रमकामयुद्धं येन नायके शान्ते विपरीताचरमित्याशयः पक्षे असमेन भीष्महननायोग्येन शरेण युद्धं येनेत्यर्थः जिता गाङ्गेयस्य हेम्नः छविः कान्तिर्य्येन हेमाधिककान्त इत्यर्थः पक्षे गङ्गापत्यस्य भीष्मस्य कान्तिरित्यर्थः शरीरान्तरेपि स्त्रीशरीरिणा युद्धं कान्तिहारीत्यर्थः यद्वा असमः अनुपमेयः छविहारित्वकारकत्वादित्यर्थः कृताटोपः स्वाभाविकस्त्रीपराक्राधिकपराक्रमो नेत्यर्थः पक्षे कृतो विविधास्फोटो येनेत्यर्थः पुरुषायितः पुरुषपदाचरित इत्यर्थः शिखण्डीव यथा पूर्व्वं स्त्री पश्चात् पुरुषो भूत्वा भीष्ममयोधयत् शिखण्डी तथा त्वमसीत्याशयः ॥ ५३६ ॥

**वृतिविवरनिर्गतस्य प्रमदाबिम्बाधरस्य मधु पिबते ॥**
**अवधीरितपीयूषः स्पृहयति देवाधिराजोऽपि ॥ ५३७ ॥**

निन्दापरं लम्पटाह वृतोति प्रकृष्टमदशालिन्या बिम्बफलतुल्यस्योष्ठस्य वृतिच्छिद्रनिर्गतस्य सम्यग्रताभावेपि चुम्बनमात्रेणैव कृतार्थता व्यज्यते मधु सुधा मद्यं वा पिबते जनाय स्पृहियोगे चतुर्थी इन्द्रोपि स्पृहां करोतीत्यर्थः निन्दितामृतः पीयूषपदेनाजरामरताधिकं मोक्षसुखं सूच्यते देवाधिराजपदेन सर्व्वसुखानुभवशालित्वं व्यज्यते तथा च सर्व्वस्वर्गसुखाधिकं परप्रमदाचुम्बनसुखं कथमन्यथेन्द्रोप्यहल्याकुन्त्यादौ तथाकरोदित्याशयः ॥ ५३७ ॥

**बासितमधुनि वधूनामवतंसे मौलिमण्डने यूनाम् ॥**
**विलसति सा पुरकुसुमे मधुपीव न सा वनप्रसूनेषु ॥ ५३८ ॥**

निर्गुणनायकसङ्गमिच्छन्तीं समीचीनां सखीं निवारयन्ती सखी वक्ति वासितेति मधुपी भ्रमरी पक्षे मद्यपानासक्ता नायिकेत्यर्थः वधूनां रमणीनामित्यर्थः प्रकृतनायिकायां सर्व्वनायिकाधिक्यं बहुवचनेन द्योत्यते अवतंसे श्रुतिभूषणरूपे पुष्पे इत्यर्थः विलसतीत्यन्वयः सर्व्वनायिकालङ्करणालङ्करणभूतत्वं प्रकृतनायिकायां बुध्यते यूनां मौलिमण्डने पुरकुसुमे नगरसंभूतमल्लिकादिकुसुमे विलसतीत्यन्वयः बहुत्वद्योत्यं यथेष्टसञ्चारशालित्वं वनप्रसूनेषु निर्गन्धारण्यकुसुमेषु न विलसतीत्यर्थः तथाच विविच्य गुणिपरिग्रहमेव करोति न गुणशून्यस्य त्वन्तुनिर्गुणमन्यं किमिति गृह्णासीति यद्वा मम सखीं मया योजितां किमिति नाङ्गीकरोषीति वादिनीं दूतीं नायको मत्त आह सर्व्वत्र सञ्चारिणी नास्माकं योग्येति भाव इत्याहुः वस्तुतः काञ्चिद्पयौवनशालिनीं विदेशस्थपतिकां नातिक्षामां प्रतिवेशिनीं दृष्ट्वा किमाचारेयमिति तत्सखीं पृच्छन्तं नायकं सख्याह सर्व्वसप्तम्यन्तेन सह नकारो योज्यः समीचीनमध्यमाधममध्ये क्वचिदपि सा न विलसतीत्यर्थः तर्हि कथं दृष्ट्वैव लक्ष्यते इत्यत आह मधुपीति तथाच दिवानिशं मनोरथेन प्रियाधरपानपरा कदाचिदपि वियोगदुःखाभावात् पतिव्रता हृष्टा पुष्टा चेतिवाक्यार्थः ॥ ५३८ ॥

**व्रीडाप्रसरः प्रथमं तदनु च रसभावपुष्टचेष्टेयम् ॥**
**जवनी विनिर्गमादनु नटीव दयिता मनो हरति ॥ ५३९ ॥**

लज्जामात्रसारा तव प्रिया कथं तव मनोहारिणीति वादिनं सखायं नायक आह व्रीडेति इयं सम्प्रति सलज्जा प्रथममागमनसमये व्रीडाप्रसरः लज्जाधिक्यमस्या इत्यर्थः तदनन्तरं शृङ्गारैः भावैरभिप्रायैश्च पुष्टाधिका चेष्टा यस्यास्तादृशीत्यर्थः अत एव मम दयिता प्रेयसी मनोहारिणीत्यत्राह रजन्या त्रियामाया विनिर्गमादनु पश्चाद्रात्रिशेषे चतुर्थप्रहरे इत्यर्थः केव नटी नर्त्तकीवेत्यर्थः यथा नटी प्रथमं किञ्चिल्लज्जिताऽथ शृङ्गारचेष्टाप्रचुरा रात्रिशेषे मनो हरति तथेयमपीत्यर्थः क्वचित् जवनीविनिर्गमादिति पाठः तत्र जवनी गृहसदृशं वस्त्रनिर्मितमावरणम् नटी यथा जवन्यां लज्जावशादिवान्तर्गता भवति जवन्यात्वहि रङ्गदेशे समागतातु रसभावपुष्टां चेष्टां करोति तथेयमपीत्यर्थः ॥ ५३९ ॥

**वाससि हरिद्रयेव त्वयि गौराङ्ग्या निवेशितो रागः ॥**
**पिशुनेन सोपनीतः पतता क्षारोदकेनेव ॥ ५४० ॥**

दूती नायकं वदति वाससीति त्वयि त्वय्येव एकवचनेनान्यत्र नेत्याशयः रसः अनुरागः पक्षे पीतिमेत्यर्थः निवेशितः कर्त्तुमारब्धः वाससि वस्त्रे हरिद्रया गौराङ्ग्या यथेत्यर्थः स रागः पिशुनेन सूचकेनापनीतो दूरीकृत इत्यर्थः पतता आपतता मध्ये प्रविशतेत्यर्थः क्षारजलेन यथा हरिद्रारागः संबन्धमात्रेणापनीयते एवं मम सख्याः प्राथमिकानुरागः प्रतिरुद्धो मम सख्याश्च नापराधः पुनस्तथैव सम्पाद्य इत्याशयः ॥ ५४० ॥

**विष्वग्विकासिसौरभरागान्धव्याधबाधनीयस्य ॥**
**क्वचिदपि कुरङ्ग भवतो नाभीमादाय न स्थानम् ॥ ५४१ ॥**

कुत्सितराज्ये विदिताधिकधनरत्नेन नस्थेयं यदि स तिष्ठति तदाऽवश्यं मरणमाप्नोतीति कश्चिदन्योक्त्या कश्चिदुपदिशति विष्वगिति हे कुरङ्ग एवं चापराधशून्यत्वं द्योत्यते क्वचिदप्यत्र राज्ये वने वा न स्थानं न निरुपद्रुतं स्थानमित्यर्थः नाभीं गृहीत्वेत्यर्थः नाभीपदेनापरित्याज्यत्वं सूच्यते भवतः किंभूतस्य विष्वक् सर्व्वतः प्रसरणशीलेषु सौरभेषु यो रागो लोभस्तेनान्धा ये व्याधास्तद्बाधनीयस्य मारणयोग्यस्येत्यर्थः सौरभविशेषणेन गोपनाशक्यत्वमन्धपदेन कर्त्तव्याकर्त्तव्य

विवेकशून्यत्वं व्याघ्रपदेन सर्व्वदा विघ्नित्वं व्यज्यते तथा च धनरक्षणपूर्व्वकजीवनेच्छा तव यदि तदा प्रपलाय्य अन्यत्र निर्भयं स्थानं गच्छ अत्र धनत्यागेन कदाचिदवस्थानं नान्यथेत्याशयः ॥ ५४१ ॥

वटकुटजशालशाल्मलिरसालबहुवारसिन्दुवाराणाम् ॥
अस्ति भिदा मलयाचलसम्भवसौरभ्यसाम्येपि ॥५४२॥

एकवंशजत्वेप्येकजातीयगुणवत्वेपि कश्चन भेदो वर्त्तत एवेति कश्चित् कञ्चिदाह वटेति मलयपर्व्वतसम्भवं यत्सौरभ्यं चन्दनसौरभं तेन सौरभरूपसामान्यधर्म्मेण तुल्यत्वेपीत्यर्थः पूर्व्वोक्तानां भिदा वैलक्षण्यं वर्त्तते इत्यर्थः मलयसम्भूतानां वटादीनां सौरभसत्वेति भेदो वर्त्तते यथा तथा गुणिनामपीत्यर्थः ॥५४२॥

विनिहितकपर्द्दकोटिं चापलदोषेण शङ्करं त्यक्त्वा ॥
वटमेकमनुसरन्ती जाह्नवि लुठसि प्रयागतटे ॥ ५४३ ॥

सामान्यवनिताङ्काचिदुपहसति सखी विनिहितेति विनिहिता धृता कन्दर्पस्य जटाजूटस्य कोटिरग्रभागो येन तमित्यर्थः पक्षे दत्ताकपर्दानां वाराटकानां कोटिः कोटिसंख्यापरिमिता येन तं बहुधनदातारं नायकमित्यर्थः चापलदोषेण-सर्व्वत्रास्थैर्य्यदोषेणेत्यर्थः शङ्करं शिवं पक्षे सम्भोगेन बहुधनदानेन च सुखकारकमित्यर्थः त्यक्त्वा जटातो निपत्य पक्षे परित्यज्य वटं वटवृक्षमक्षयवटमिति यावत् पक्षे एकं कपर्द्दकमनुसरन्ती संगच्छन्ती पक्षे कपर्द्दकमेकं गृह्णन्तीत्यर्थः जाह्नवि जह्नुसुते पक्षे समीचीनकुलजे पवञ्चान्यपापहारिणी स्वच्छा पवित्रा बहुसौन्दर्य्यशालिनी यथा गङ्गा त्वमपि तादृशी भूत्वा किं करोषीति महतीनिन्दां लुठसि प्रवहसि पक्षे शय्यांविनैव शेषे इत्यर्थः प्रयागे देशे पक्षे प्रकृष्टयागमये पुण्यस्थले एतादृशस्थले पापाचरणमतिनिषिद्धं तथाच न कुलोचितं नवा धनोपार्जनोचितं करोषि केवलं निन्दितमेव करोषीति स्त्रीलाञ्छनरूपासीत्यर्थः ॥५४३॥

वेद चतुर्णां रजनी प्रहराणां संगमे वियोगे च ॥
चरणानामिव कूर्मी सङ्कोचमपि प्रसारमपि ॥ ५४४ ॥

जागरणव्याकुलं नायकं दृष्ट्वा किमिति मत्सखीं विनैव जागरितोसीति वादिनीं दूतीं नायक आह वेदेति सा तव सखी वेदविधातुं जानातीत्यर्थः किं वेद रात्रिघटकप्रहरचतुष्टयस्य सङ्गमे संभोगकाले सङ्कोचं संकुचितत्वं क्षणतुल्यत्वमितियावत्तत्र सखीं वेदेत्यन्वयः वियोगे मानादिना वियोगकाले रजनीप्रहरचतुष्टयस्य प्रसारं विस्तारं तत्र सख्येव विधातुं जानातीत्यर्थः केव कूर्मीव कमठीव चरणानां सङ्कोचं प्रसारंच यथा स्वेच्छया करोति न कस्यापि शृणोतीत्युपालम्भः रजनीवेदेत्यन्वनयो न युक्तो नायिकायामनुपयोगादिति प्रतिभाति ॥५४४॥

**वृतिविवरेण विशन्ती सुभग त्वामीक्षितुं सखीदृष्टिः ॥**
**हरति युवहृदयपञ्जरमध्यस्था मन्मथेषुरिव ॥ ५४५ ॥**

बहुविधनायकसमुदायस्थमात्मानं पश्यन्तीं नायिकां दृष्ट्वा किञ्चिद्विमनस्कं नायकं बुद्ध्वा सख्याह वृतीति मम सखी वृतिविवरेण वृतिकृतमार्गेण मुख्यमार्गत्यागेनान्यानवलोकनीयत्वं ध्वन्यते विवरपदेन महता प्रयासेन बहिर्गमनेन प्रेमाधिक्यं व्यज्यते सुभग भाग्यशालिन् सर्व्वस्पृहणीय नायिकाप्रेमपात्रताऽनेन सूच्यते त्वां त्वामेवेत्यर्थः ईक्षितुं सम्यग्द्रष्टुमित्यर्थः सखी किंभूता यूनामुदासीनानां त्वया सहोपविष्टानां हृदयानि मनांसि तैः कृतो यः पञ्जरः तन्मध्यस्था तद्वेष्टितेत्यर्थः दृष्टिः हरति भवन्तं यूनश्चेतिशेषः मदनेषुरिव कामशर इवेत्यर्थः इषुर्द्वयोरित्यमरः मदनशरतुल्यत्वकथनेन सौन्दर्य्यातिशयो द्योत्यते तथाच त्वामेव पश्यति नान्यान् एतेनानुरागवती मम सखी औदास्यं न युक्तमित्याशयः ॥ ५४५ ॥

**विपणितुलासामान्ये मा गणयैनन्निरूपणे निपुणम् ॥**
**धर्म्मघटोऽसावधरीकरोति लघुमुपरि नयति गुरुम् ॥ ५४६ ॥**

कश्चित्कञ्चित्प्रत्याह विपणीति विपणितुलासामान्ये पण्यवीथीस्थिततोलकजातीये यद्वा विपणितुलासमूहे इति सप्तम्यन्तार्थः एवं धर्म्मघटं दिव्यपरीक्षकमित्यर्थः निरूपणे तत्त्वख्यापने उचितकरणे वा निपुणं यिज्ञत्वेन प्रसिद्धं विज्ञं चेत्यर्थः मा गणय मा गणितं कुरु यतः असौ लघुं स्वल्पपरिमाणमधः करोति अन्या

तुलार्द्धं नयति गुरुं गुरुपरिमाणमुपरि नयति अन्याधो नयति एवञ्चासौ धर्म्मघट-तुल्यो नायको विपरीतकारी नोचितकारीत्यतोऽस्मिन् विश्वासो न कर्त्तव्य इत्याशयः यद्वा तुलासामान्यमध्ये एनं धर्म्मघटं मा गणय विलक्षणमेव गणयेत्यर्थः लघुं क्षुद्रमधरीकरोत्यनादरेण स्थापयति गुरुं महान्तं समादरेण स्थापयतीत्यर्थः एवञ्च तत्वज्ञो यथोचितकर्त्तायमेव नान्य इत्याशयः ॥ ५४६ ॥

**वासरगम्यमनूरोरम्बरमवनी च वामनैकपदम् ॥**
**जलधिरपि पोतलंघ्यस्सतां मनः केन तुलयामि ॥ ५४७ ॥**

सर्व्वगुणापेक्षया चित्तोन्नतिः समीचीनेति कश्चिदाह वासरेति अनूरोश्चरण-हीनस्य सूर्य्यसारथेरत्यन्तचलनासमर्थस्यैकदिनगमनयोग्यं नभो भूमिश्च वामनस्य खर्वस्यैकपदमितेत्यर्थः समुद्रः पोतेन नौकया लङ्घनयोग्यः सज्जनमनः अलङ्घ्येन केन तुलयामीत्यर्थः ॥ ५४७ ॥

**विततमोमषिलेखालक्ष्मोत्सङ्गस्फुटाः कुरङ्गाक्षि ।**
**पत्राक्षरनिकरा इव तारा नभसि प्रकाशन्ते ॥ ५४८ ॥**

शुक्लाभिसारं परित्यज्य कृष्णाभिसारेण नायकमनुसरेति दूती नायिकामाह वितततेति हे कुरङ्गाक्षि मृगाक्षि आकाशे तारानिकराः ताराणां समूहाः प्रचुरतराः अव्यक्ताश्च प्रकाशन्ते शोभन्ते यन्त्रे श्यामपट्टफलके अक्षरसमूहा इव श्वेताक्षरसमूहा इवेत्यर्थः विततं विस्तीर्णं यत्तमस्तद्रूपमषिलेखालक्ष्मोत्सङ्गे तन्मध्ये स्फुटा व्यक्ता इत्यर्थः एवञ्चास्तं गते चन्द्रे ताराधिक्यं दृश्यते कृष्णाभिसारोऽधुना विधेयः नायकसंगतां सखीं सन्ध्यान्धकारो निवृत्तः प्रसन्नमाकाशं जातं नायकं विसृज्य शीघ्रं गृहं गन्तव्यमिति सखी वदति रात्रिरायाता न केनापि श्रूयते विपरीतरतेन मां कृतार्थयेति नायिकां प्रति नायकोक्तिरिति वा श्वेते पत्रे श्यामा अक्षरा यथा तथा श्यामे पत्रे श्वेता पत्राक्षरा व्यक्ता भवन्ति न सजातीयाः एवंच सपत्नी-वैजात्येन त्वया प्रिये स्थेयं तेन लोके प्रव्यक्ता भविष्यसि नान्यथेति सखीं प्रति सख्युक्तिरित्यपरे ॥ ५४८ ॥

**विविधाङ्गभंगिषु गुरुनूतनशिष्यां मनोभवाचार्यः ॥**
**वेत्रलतयेव बालां तल्पे नर्तयति रतरीत्या ॥ ५४९ ॥**

साभिलाषं कञ्चिन्नायकं पश्यन्तीं सखीं निवारयन्ती सख्याह विवधेति मनोभवाचार्यः कामोध्यापकः मनोभवपदेन सर्वदा सन्निहितत्वं व्यज्यते तेन दिवानिशं रत्यासक्तिः तथाच कदाप्यनवकाशो व्यज्यते तेनापि संप्रत्यन्यनायिका-प्रेमपात्रत्वाभावः कथ्यते नवीनां शिष्याम् अनेन प्रथमाचार्यत्वं कामे कथ्यते तेन नायिकान्तराभावस्तेनापि स्वनायिकामात्रापेक्षित्वम् विविधा नानाप्रकाराः अङ्ग-भङ्गयः अङ्गचेष्टा मोट्टायितादयस्तासु गुरुः सम्यक् शिक्षकः तल्पे शय्यायां रतस्य सुरतस्य या रीतिः परिपाटी तयेत्यर्थः कया वेत्रलतयेव यथा कश्चिदाचार्यः शिष्यं पाठयति तद्वदित्यर्थः एवञ्च बालायां नानावैदग्ध्यशालिन्यां सदा सक्तोयं नायको न कुत्राप्यासक्तो भवितेति वृथास्मिन् कटाक्षप्रक्षेप इत्युपदेशः बालाया-मत्यन्तासक्तोसीतिवादिनं सखायं सखा वदति अशक्या तवेयमिति वा वाक्यार्थः स्वरूपकथनं मात्रं वेति परे ॥ ५४९ ॥

## विपरीतमपि रतन्ते स्रोतो नद्या इवानुकूलमिदम् ॥
## तटतरुमिव मम हृदयं समूलमपि वेगतो हरति ॥ ५५० ॥

नायको नायिकामाह विपरीतमिति इदं ते तव रतं विपरीतमपि अनुकूल-मितिविरोधः विपरीतमुपरि स्थितया कृतं रतमनुकूलमभिलषितमित्यविरोधः वेगतः पराक्रमाधिक्यात् हरति सम्यक् सुखयतीत्यर्थः एवमेव त्वया कर्तव्यमित्याशयः नद्याः सरितः स्रोत इव अनुकूलं तीरपर्यन्तगामि विपरीतं रोधः तरुं यथा समूलं हरति पातयतीत्यर्थः ॥ ५५० ॥

## वैभवभाजां दूषणमपि भूषणपक्ष एव निक्षिप्तम् ॥
## गुणमात्मनामधर्म्मं द्वेषञ्च गृणन्ति काणादाः ॥ ५५१ ॥

दारिद्र्यमतिनिन्द्यमिति कश्चित् कञ्चिदाह वैभवेति वैभवभाजां बहुवित्तशा-लिनां पक्षे विभोर्भावः वैभवं सर्व्वमूर्त्तिसंयोगित्वं व्यापकत्वमिति यावत्तद्व-तामित्यर्थः दोषोपि अपिना गुणग्रहः पक्षे दोषत्वेन गणनीयमपि भूषणपक्षे अलङ्करणपक्षे गुणपक्षे चेत्यर्थः निक्षिप्तं स्वीकृतं पक्षे गणितम् एवकारेण भ्रमेणापि दूषणत्वेन गणनीयत्वं कथ्यते आत्मनामधर्म्मं पापं द्वेषञ्च वैशेषिका गुणत्वेन

गणयन्ति दोषगणनयोग्यत्वेपि गुणत्वेनैव गणयन्ति मुनयोपि मादृशाङ्का वार्त्तेतिभावः यद्वा कणमत्तीति कणादः तदनुयायिनो दरिद्रा इत्यर्थः तथात्र दरिद्रस्य गुणदोषविवेकसत्वेपि विपरीतकथनमेव नोचितत्वादित्वं दारिद्र्यदोषेण दारिद्र्यमतिनिन्द्यं धनिनां दोषसत्वेपि न केनापि कथ्यते इतिश्लोकार्थः ॥५५१॥

**वक्राः कपटस्निग्धा मलिनाः कर्णान्तिके प्रसज्जन्तः ॥**
**कं वञ्चयन्ति न सखे खलाश्च गणिकाकटाक्षाश्च ॥५५२॥**

खलवेश्ययोरसमागमो न कर्त्तव्य इति सखा सखायं वदति वका इति-दुर्जनाः वेश्याकटाक्षाश्च हे सखे एवञ्चोपदेशार्हत्वं व्यज्यते कञ्जनं न वञ्चयन्ति न प्रतारयन्ति अपितु प्रतारकानपि प्रतारयन्तीत्यर्थः किमुत भवादृशं सरलमतिमित्याशयः चकारद्वयं सर्व्वथा द्वयोः साम्यं समुच्चिनोति वक्राः कुटिलाः कपटस्निग्धा मिथ्याप्रेममया मलिनाः पापाः पक्षे पापजनका इत्यर्थः श्यामा वा कर्णान्तिके कर्णसमीपे प्रसज्जन्तः मन्दं मन्दं सर्व्वदुश्चरितं वदन्तः पक्षे पतन्त इत्यर्थाः एवञ्च यथा वेश्यासमागम इह परत्र च दुःखदस्तथा खलसमागम इति श्लोकार्थाः ॥ ५५२ ॥

**विद्युज्ज्वालावलयितजलधरपिठरोदराद्बहिर्य्यान्ति ॥**
**विशदौदनद्युतिमुषः प्रेयसि पयसा समं करकाः ॥५५३॥**

क्षीरोदनपाकार्थं पत्युरङ्कादुव्रजन्तीं नायिकां रतार्थी नायक आह विद्य द्विति हे प्रेयसि एवंचाज्ञाकारित्वं व्यज्यते करकाः पयसा जलेन पक्षे दुग्धेन समं विनिर्य्यान्ति समीपमायान्तीत्यर्थः एवञ्च पायसे द्रुतत्वं भोजनयोग्यत्वं कथ्यते श्वेततण्डुलकान्तिहारकाः विद्युतां या ज्वाला तया वेष्टितो यो जलधरस्तदुदररूपपाकपात्रात् एवञ्चाग्निययोमयपाकपात्रात् समीचीनपायसलाभे सति न प्रयोजनं पाकस्येति संभोगकाल एवायमितिभावः ॥ ५५३ ॥

**व्यजनादिभिरुपचारैः किम्मरुपथिकस्य गृहिणि विहितैर्म्मे ॥**
**तापस्त्वदूरुकदलीद्वयमध्ये शान्तिमयमेति ॥ ५५४ ॥**

विदेशादागतो नायको नायिकामाह व्यजनेति गृहिणि बहुव्यापारशालित्वमुचितमित्याशयः मरुदेशादागतस्य मे पवश्चात्युष्णतादोषेण वियोगेन च रतिरेव प्रथममपेक्षितेतिभावः व्यजनशीतजलेन मम न शान्तिरिति तर्हि कथमित्यत आह तापोयं त्वदीयोरुद्वयरूपकदलीकाण्डमध्यस्थस्य मम शान्तिमाप्नोति नान्यथेति सुरतं सम्पाद्य गृहव्यापारं कुर्व्विति वाक्यार्थः ॥ ५५४ ॥

वैगुण्येपि हि महतां विनिर्म्मितं भवति कर्म्म शोभायै ॥
दुर्व्वहनितम्बमन्थरमपि हरति नितम्बिनी नृत्यम् ॥ ५५५ ॥

महतामसमीचीनकर्म्मकरणेपि नाधिका निन्दा क्षुद्रस्य स्वल्पनिन्दितकर्म्मकरणेपि महती निन्देति कश्चित्कञ्चित्प्रत्याह वैगुण्येपीति महतां श्रेष्ठानां पक्षे महापरिमाणवतां कृतं कार्य्यं शोभायै यशसे पक्षे मनोहराय भवति वैगुण्येपि दुष्टत्वेपीत्यर्थः अर्थान्तरन्यासमाह नितम्बिनीकर्तृकं नृत्यं नटनं हरति चित्तमितिशेषः वैगुण्यमाह वहनायोग्यनितम्बेन मन्थरमपि नृत्यविरोधिस्थैर्य्ययुक्तमपीत्यर्थः नृत्यवैगुण्येपि नितम्बशोभां दृष्ट्वा दृष्ट्वा हृष्यतीत्यर्थः ॥ ५५५ ॥

वीक्ष्य सतीनां गणनारेखामेकान्तया स्वनामाङ्काम् ॥
सन्तु युवानो हसितुं स्वयमेवापारि नावरितुम् ॥ ५५६ ॥

काचित्काञ्चिद्वदति वीक्ष्येति कदाचिदस्मिन्नगरे पतिव्रता केति गणनारेखादानसमये तया भवद्भिः पतिव्रतात्वेन कथितया स्वनामचिह्नितामेकां रेखां सतीयमितिसूचिकां दृष्ट्वा वरितुं गोप्तुं नापारि स्वकीयं हास्यमपि गोप्तुं समर्था नेत्यर्थः युवानः तदुपभोगकर्त्तारस्तिष्ठन्तु हसितं तदुपभोगकर्तृभिर्यद्धसितं तत्किं वक्तव्यमित्याशयः इमां सतीं मत्वा किमुपेक्षसे सर्व्वथाऽसतीमल्पप्रज्ञामुपभुङ्क्ष्वेति नायकं प्रति दूतीवाक्यं वा ॥ ५५६ ॥

विन्ध्याचल इव देहस्तव विविधावर्त्तनर्म्मदनितम्बः ॥
स्थगयति गतिम्मुनेरपि सम्भावितरविरथस्तम्भः ॥ ५५७ ॥

पथिक किमिति संस्थितोसीति नायिकयोक्तः पथिको नायिकामाह विन्ध्येति

तव देहः देहपदेनोपचयशालित्वं तेनारब्धयौवनकर्तृत्वेन स्पृहणीयत्वं कथ्यते विन्ध्याचल इव अचलपदेन स्थिरत्वं व्यज्यते नानाप्रकारकक्रीडनदाता नितम्बो यस्य स इत्यर्थः पक्षे विविधावर्त्ता अनेकाम्भोभ्रममयी नर्म्मदानाम्नी नदी यत्र तादृशकटकशालीत्यर्थः सम्यग्भावितः सम्पादितः रविरथस्य स्तम्भो येन रूपातिशयशालिदेहस्पर्शनेन सूर्य्योऽपि रथं स्थापयतीत्यर्थः यद्वा नितम्बेन रविरथचक्रजयाद्रविरथस्तम्भः पक्षे उन्नततया रविरथरोधी विन्ध्य इति पुराणवार्त्ता मुनेः स्थिरचित्तस्यापि कामोद्रेकेन गमनं निवारयतीत्यर्थः किमुत मादृशस्य चिरवियुक्तस्य यूनः पथिकस्येत्याशयः पक्षे मुनेरगस्त्यस्य गतिं दक्षिणदेशगमनं स्थगयति रुणद्धि वृद्धिनिवृत्त्यर्थं तथाच त्वां दृष्ट्वा गन्तुमसमर्थ एवास्मिन् समये स्वगृहमितिवाक्यार्थः ॥ ५५७ ॥

**वृतिभञ्जन गञ्जनसह निकाममुद्दामदुर्न्नयाराम ॥**
**परवाटीशतलम्पट दुष्ट वृष स्मरसि गेहमपि ॥ ५५८ ॥**

स्वनायिकायां परपुरुषान्निवारयन्तं लम्पटवृत्त्या दिवानिशं पर्य्यटन्तं प्रति कश्चिद्वृषोक्त्याह वृतीति वृतेर्गृहवेष्टनस्य भङ्गेन गञ्जनं भर्त्सनं सहते यस्स तथा-सर्व्वजनविद्धदुष्टाचरणस्थान परोपवनशतगमनशील हे कुत्सितवृषभ गेहं निजावस्थानगृहं स्मरसि नेत्यर्थः अपिना समीचीनाचरणपरिग्रहः एवञ्च यथा त्वं लम्पटस्तथा तव नायिका द्वयोस्समाना गतिरितिभावः ॥ ५५८ ॥

**वंशावलम्बनं यद्योविस्तारो गुणस्य यावनतिः ॥**
**तज्जालस्य खलस्य च निजाङ्कसुप्तप्रणाशाय ॥ ५५९ ॥**

महाकुलसम्बद्धस्य महाकुलानुत्पन्नस्य खलस्वभावस्य विश्वासो न कर्त्तव्य इति कश्चित्कञ्चित्प्रत्याह वंशेति यद्वा महाकुलस्य यदि दैवदोषात् खलता तदा तस्य विश्वासो न कार्य्यः तत्रापि तस्योत्कटत्वादित्याह जालस्य आनायस्य दुष्टस्य च निजाङ्के निजमध्यभागे पक्षे निजक्रोडे सुप्तानां पतितानां पक्षे स्वापमाचरतां विश्वस्तानामिति यावत् प्रणाशाय परिग्रहाय मरणाय चेत्यर्थः वंशस्य प्रसारकरवंशस्य पक्षे महाकुलस्यावलम्बनं योगः पक्षे सम्बन्धादि

द्वितीयपक्षे उत्पत्तिः यत् विस्तारोऽधिकविस्तृतत्वं गुणस्य दाम्नः पक्षे गुणस्य शीलादेर्विस्तारः सर्व्वजनीनत्वमवनतिः मृदुत्वेन झटिति संकुचितत्वं पक्षे विनयनम्रता तथाच कथमपि खलविश्वासो न कर्त्तव्य इत्याशयः ।। ५५९ ।।

**विन्ध्यमहीधरशिखरे मुदिरश्रेणीकृपाणमयमनिलः ॥**
**उद्याद्विद्युज्ज्योतिः पथिकवधायैव शातयति ॥ ५६० ॥**

वर्षारम्भे जिगमिषुं नायकं नायिकासखी निवारयति विन्ध्येति विन्ध्यपर्व्वतोपरि मेघपङ्क्तिरूपतरवारिम् असावनिलः उद्यतया तडिल्लतया ज्वालाऽग्निकणो यत्र तादृशस्समीरणः वियोगिवाधार्थं तीक्ष्णं करोतीत्यर्थः एवञ्चास्मिन्समये वियोगः कथमपि न कर्त्तव्यः करणे द्वयोरपि मृत्युरित्याशयः ।। ५६० ।।

**व्यालम्बमानवेणीधुतधूलि प्रथममश्रुभिर्धौतम् ॥**
**आयातस्य पदं मम गेहिन्या तदनु सलिलेन ॥ ५६१ ॥**

पातिव्रत्यशालिनी मम प्रेयसीति सखायं सखा वदति व्यालम्बमानेति आयातस्य चिरप्रवासादित्यर्थः मम पदं प्रथमं नेत्रजलेन धौतं क्षालितं गृहिण्या प्रक्षालनार्थचरणग्रहकाले पदं किंभूतं व्यालम्बमाना जटाभूता या वेणी तया धुता चालिता दूरीकृतेतियावद्धूलिः पथलग्नं रजो यस्मिन् तदित्यर्थः तदनु अश्रुप्रक्षालनानन्तरं जलेन धौतं तथा च मानादिकं किमपि न कृतं प्रसाद एव व्यक्तीकृत इत्याशयः ।। ५६१ ।।

**वक्षःस्थलसुप्ते मम मुखमुपधातुं न मौलिमालभसे ॥**
**पीनोत्तुङ्गस्तनभरदूरीभूतं रतश्रान्ते ॥ ५६२ ॥**

विपरीतरतश्रान्तां नायिकां नायक आह वक्ष इति मम वक्षसि शयिते विपरीतरतश्रमेणेत्यर्थः मम मुखमुपधातुं मिलितं कर्त्तुं चुम्बितुं वा मौलिं मस्तकं नालभसे न प्राप्नोषीत्यर्थः अत्र मम दोषो न किन्तु तवैव इत्याह मुखं किंभूतमुच्चस्तनभारेण दूरीभूतं दूरे स्थितमित्यर्थः एवञ्च कठिनोन्नतस्तनदोषेण चुम्बनमुखं न लभसे तवैव दोष इत्याशयः रते सुरते परिश्रान्ते एवञ्च

स्तनद्वयमपहाय कुचाप्याबयोस्संबन्धो नास्तीति परिहासो वाक्यार्थः ॥ ५६२ ॥

**वदनव्यापारान्तर्भावादनुरक्तमानयन्ती त्वम् ॥**
**दूति सतीनां सार्थं तस्य भुजङ्गस्य दंष्ट्रासि ॥ ५६३ ॥**

स्वनायिकासमीपस्थां दूतीं दृष्ट्वा कश्चिदाह वदनेति हे दूति भुजङ्गस्य खिङ्गस्य पक्षे सर्प्पस्य दन्तवत्कार्य्यकारिण्यसि पक्षे दन्तरूपासीत्यर्थः पतिव्रता-समूहं प्रति अनुरागशालिनं लम्पटं प्रापयन्ती त्वमित्यर्थः वदनस्य व्यापारो वचन-विन्यासस्तेनान्तर्भावोऽन्तर्हृदयप्रवेशः तस्मान्नायिकानुरागपात्रं पक्षे वदनस्य व्या-पारः दंशव्यापारः तदन्तर्भावात् तत्प्रवेशादनु पश्चाद्रक्तं शोणितमानयन्तीत्यर्थः एवञ्च तव सन्निधानेन पतिव्रतापि चपला भवति किमुतान्यादृशीति तव सन्नि-धानं सर्व्वथा निवारणीयमित्याशयः ॥ ५६३ ॥

इति गोवर्द्धनसप्तशतीविवरणे श्रीसच्चर्लामिश्रकृते रसदीपिकायां वकारव्रज्या समाप्ता

**श्रीरपि भुजङ्गभोगे मोहनविज्ञेन शायिता येन ॥**
**सोपि हरिः पुरुषो यदि पुरुषा इतरेपि किं कुर्म्मः ॥ ५६४ ॥**

स्वनायिकायामन्यनायकसमागममसहिष्णुं नायकमानयन्तीं दूतीमुपहसन्तं कश्चित्कश्चिदाह श्रीरपीति मोहने सुरते विज्ञेन विशेषज्ञेन यद्वा मोहनः सर्व्वस्त्री-वशीकरणसमर्थः एवञ्च एकनायिकासमागमानन्तरं न तामिच्छत्यपरामेवेच्छतीति भावः भुजङ्गस्य सर्प्पस्य भोगे शरीरे पक्षे भुजंगस्य खिड्गस्य भोगे सुरते श्रीरपि सर्वोत्तमापि अपिनान्यासां का कथेत्यर्थः शायिता स्वापिता पक्षे योजिता स पुरुषा-भासरूपः हरिः पुरुषः पुरुषोत्तमो यदि लोकैरुच्यते तदान्येपि पुरुषा एवेति संसार-रीतिरेवातिलम्पटानां न दूतीदोष इत्यर्थः ॥ ५६४ ॥

**शङ्के या स्थैर्य्यमयी श्लथयति बाहू मनोभवस्यापि ॥**
**दर्पशिलामिव भवतीं कतरस्तरुणो विचालयति ॥ ५६५ ॥**

अत्यन्तपुष्टशरीरां सुकुमारनायकासक्तां मानवतीं नायिकां सख्याह शङ्क इति कतरस्तरुणो युवा भवतीं स्थूलशरीरां विचालयति रतिसमये चालयितुं शक्नोतीति

न कोपीत्यर्थः तथा चातिसुकुमारं रन्तुं स्वयमभ्यस्य वशयान्यथा प्रेमभङ्ग एवेतिभावः इति शङ्के इत्यन्वयः दर्पशिलामिव गर्वभञ्जिकां स्थूलां शिलामिव मनोभवस्य बाहू श्लथयति भवती उत्थापयितुं न शक्यते इत्याशयः स्थैर्य्यमयी नापल्यसमयेपि स्थिरेत्यर्थः मयटोनियमार्थत्वात् कोपव्यञ्जकः संबुद्धिपदाभावसंप्रदायः तथा चातिसुकुमारेण पुष्पास्त्रेण शिलाचालयितुं न शक्यते तथाऽनेन नायकेन त्वमित्यवश्यं चलनीयं नायकसमीपमित्युपदेशः ॥ ५६५ ॥

शार्दूलनखरभङ्गुर कठोरतरजातरूपरचऽनोपि ॥
बालानामपि बाला सा यस्यास्त्वमपि हृदि वससि ॥ ५६६ ॥

नायिकाया असमानं मत्वा नायकमन्योक्त्या सखी वदति शार्दूलेति हे व्याघ्रनख भङ्गुरवक्त्र तथाच बहुदोषोसीतिभावः कठोरतर कठोरादपि कठोरोसीत्यर्थः जातरूपरचनः हेमकृतरचनाविशेषवानपि तथाच त्वं गृहेपि स्थापयितुमयोग्य इतिका कथा हृदयस्थापने अतः यया मम सख्या हृदये स्थाप्यसे सातीव विमूढेत्यर्थः व्याघ्रनखरूपालंकरणपक्षे सुव्यक्तोर्थः ॥ ५६६ ॥

श्रुत एव श्रुतिहारिणि रागोत्कर्षेण कण्ठमधिवसति ॥
गीत इव त्वयि मधुरे करोति नार्थग्रहं सुतनुः ॥५६७॥

मम यथेष्टं द्रव्यं नायिकार्थं गृहाणेति वादिनं नायकं नायिकासखी वदति श्रुत एवेति श्रवणसमय एव मनोहारिणि रागगनचमत्कारेण कण्ठाभ्यन्तरं स्थिते गीते गाने अत्यन्तमाधुर्य्यशालिनि यथा गीतार्थस्य ग्रहणं न करोति समीचीनगानश्रवणे श्रोता कृतकृत्यो भवति तथा श्रवणसमये एव सर्व्वेषां श्रवणहारिणि श्रुतमात्र एव श्रवणप्रीतिजनके नायिकाया यस्त्वयि रागः प्रेम तस्योत्कर्षेणाधिक्येन नायिकाकण्ठे स्थिते अत्यन्तसौन्दर्य्यशालिनि त्वयि प्रीता मम सखी अर्थस्य द्रव्यस्य ग्रहणं न करोति तस्या धनशालिन्या धनानपेक्षत्वात् आग्रहेण दाने कुपितैव भविष्यतीति भावः सुतनुः सुन्दरी सर्व्वथानुपेक्षणीयेत्यर्थः तथाच सर्व्वनायकापेक्षया तवाधिकं सौख्यं मया सम्पादितं मह्यमेव धनं देहीत्याशयः ॥५६७॥

श्रीः श्रीफलेन राज्यं तृणराजेनाल्पसाम्यतो लब्धम् ॥
कुचयोस्सम्यक्साम्याद्गतो घटश्चक्रवर्त्तित्वम् ॥५६८॥

समीचीनेन साम्यं यथा क्रियते तथैव फलं भवतीति कश्चित् कंचिदुक्ति श्रीरिति श्रीफलेन बिल्वफलेनात्यल्पसाम्यतः कुचयोरल्पसादृश्यतः शोभा लब्धेत्यर्थः तृणराजेन तालेन फलद्वारकाल्पसाम्यतः मध्यमसाम्यतः राज्यं राजपदवाच्यत्वं प्राप्तमित्यर्थः समीचीनसाम्यतः घटश्चक्रवर्त्तित्वं चक्रे वृत्तत्वमथच सार्व्वभौमत्वं गत इत्यर्थस्तथाच महता यथायथाधिकं साम्यं क्रियते तथातथा फलाधिक्यं भवतीत्यर्थः ॥५६८॥

श्रोणी भूमावङ्के प्रियो भयं मनसि पतिभुजे मौलिः ॥
गूढः श्वासो वदने सुरतमिदं चेत्तृणं त्रिदिवम् ॥५६९॥

काचिदधमा कस्याश्चित्तथाविधं रतं स्तौति श्रोणीति श्रोणी नितम्बो भूमौ शय्यातो बहिरित्यर्थः पतिभयात् प्रियो जारः अङ्के क्रोडे पतिभयं मनसि पतिभुजे शिरः गूढो निलीनः पतिभयात् श्वासः रतश्रमजन्यः श्वास इत्यर्थः ईदृशं सुरतं यत्तन्मरणं विनैव स्वर्गतुल्यमित्यर्थः ॥५६९॥

श्लिष्यन्निव चुम्बन्निव पश्यन्निव चोल्लिखन्निवातृप्तः ॥
दधदिव हृदयस्यान्तः स्मरामि तस्या मुहुर्ज्जघनम् ॥५७०॥

सखायं वक्ति कश्चित् श्लिष्यन्निवेति आश्लेषं कुर्व्वन्निव एवं चुम्बनं दर्शनमुल्लेखं कुर्व्वन्निवेत्यर्थः स्मृतौ हेतुः अतृप्त इति तस्या जघनं स्मरामि नान्यमित्यर्थः तादृशी नान्येतिभावः ॥५७०॥

शिरसि चरणप्रहारं प्रदाय निस्सार्य्यतां स ते तदपि ॥
पादाङ्कितो भुजंगः कालिय इव सुमुखि कालिन्द्याः ॥५७१॥

नायकदुर्नयेन कुपितां सखीं सखप्राह शिरसीति स दुर्व्विनीतो नायकः मस्तके चरणप्रहारं दत्वा निस्सार्य्यतां बहिः क्रियतां ईदृशापराधे इदमेवोचितमिति

यद्यपि तदपि तथापि ते तवैव सः अतो नेदं युक्तं यतो नायमन्यत्र गन्ता गतोपि सर्व्वत्र तवैवायमित्येव सर्व्वैर्ज्ञेय इत्यर्थः यथा विष्णुना पादेनाङ्कितः कालियो भुजङ्गः समुद्रगतोपि यमुनाया एव ख्यातोभूत् नान्यासां तथायमपि तथाच तवैवायश इति संवरणमेव युक्तमित्याशयः ।।५७१।।

**शोच्यैव सा कृशाङ्गी भूतिमयी वा भवतु गुणमयी वा ॥**
**स्नेहैकवश्य भवता त्यक्ता दीपेन वर्त्तिरिव ॥५७२॥**

विभूतिसौन्दर्य्याभिमानवर्त्तायमिति भ्रमेण नायिकायामुदासीनं नायकं नायिकासख्याह शोच्येति सानिरूपधि तत्र प्रेममात्रं कृशाङ्गी बहुविधदुःसरणासमर्थैश्वर्य्यवती नानासौन्दर्य्यादि गुणमपि भवतु तावता सर्व्वसुन्दरातिधनिनस्तरकिमित्यर्थः समुचितनवैयर्थ्यमप्यर्थं हेस्नेकैकस्य मुख्यतया प्रेममात्रेण नायिकाधीनभवता त्यक्ता मम सखी सर्व्वथा शोच्यैव धनसौन्दर्य्यादिकं तस्या सर्व्वं व्यर्थमेवेतिभावः दीपेन वर्त्तिके भवतस्समयी बहुतन्तु यद्यपि तैलमुख्द वश्येन दीपेन त्यक्तायेत्यर्थः ॥५७२॥

**शुक इव दारुशलाकापञ्जरमनुदिवसवर्द्धमानो मे ॥**
**कृन्तति दयिताहृदयं शोकःस्मरविशिखतीक्ष्णमुखः ॥५७३॥**

अत्यन्तविरहखिन्नां नायिकां श्रुत्वा वैदेशिकस्सखायं वक्ति शुक इति परदेशागमनजन्यः शोकः दयिताया हृदयं कृन्तति कृणत्ति किंभूतः कन्दर्प्पबाणवत्तीक्ष्ण मुखमारम्भो यस्य स इत्यर्थः प्रतिदिनमुपचीयमानश्च काष्ठशलाका पञ्जरप्रसिद्धा ताभिः निर्म्मितं यत्पञ्जरं तत् शुको यथा कृन्तति तथेत्यर्थः दिने दिने वर्द्धमानो मदनशरतीक्ष्णमुखश्च शुको भवतीत्यर्थः गन्तव्यमिति व्यज्यते ॥ ५७३ ॥

**श्रुत्वाकस्मिकमरणं शुकसूनोस्सकलकौतुकैकनिधेः ॥**
**ज्ञातो गृहिणीविनयव्यय आगत्यैव पथिकेन ॥५७४॥**

विदेशगमनोद्यतः परोक्षे स्वनायिकारक्षार्थमाह श्रुत्वेति पथिकेन विदेशादा-

गत्यैव गृहिण्या विनयव्ययो मर्य्यादानाशः असतीत्वमिति यावद् ज्ञातः रक्षककथनं विनैवेत्येवकारेण व्यज्यते गृहिणीपदेन गतयौवनाया इयमवस्था किंवक्तव्यं विद्यमानयौवनायास्तस्या इतिव्यज्यते तेन स्त्रीमात्रं न विश्वासविषय इति व्यज्यते तेन चासां समागमो जन्मान्तरेपि मास्त्वित्यादि शुकसूनोः आकस्मिकं रोगमाज्जरादिनिरपेक्षं मरणं श्रुत्वा शुकपदेन सहजमरणायोग्यत्वं व्यज्यते तेनानयैव मारित इत्यवधानं तेन च स्वस्यापि नायिकाभयं परित्याज्यत्वञ्च व्यज्यते शुकमारणे हेतुगर्भं विशेषणमाह सर्व्वस्य कैतुकस्य दृष्टस्य श्रुतस्य वा मुख्यनिधिः स्थानं तस्य तथाच मदीय दुश्चारितं यद्दृष्टं श्रुतं च सकृदपि तत्सर्व्वं प्रत्यहं करोति पठति च कथमपि न विस्मरति पत्युरग्रेपि करिष्यत्यवश्यमिति तया शुको मारित इत्याशयः तथाच धर्म्महानिः कथनं विनापि मया ज्ञातव्या पापापलपनं कथमपि न भवतीत्युपदेशः काचित्काञ्चिदुक्तीत्येके ॥५७४॥

**शीलितभुजङ्गभोगा क्रोडेनाभ्युद्धृतापि कृष्णेन ॥**
**अचलैव कीर्त्यते भूः किमशक्यन्नाम वसुमत्याः ॥५७५॥**

काञ्चिदत्यन्तासतीं सतीत्वेन स्तुवतीं सखीं सख्याह शीलितेति शीलितः आधारतयानुभूतः भुजङ्गस्य शेषनागस्य भोगः फणा यया सा पृथ्वी पक्षे शीलिता अनुभूता भुजङ्गानां विङ्गानां भोगा संभोगा आलिङ्गनचुम्बनरतादयो यया सेत्यर्थः कृष्णेन कृष्णरूपेण क्रोडेन वराहेणाभ्युद्धृतापि संसाररक्षार्थं जलादुपरि स्थापिता अचलपदार्थविरोधार्थमिदं पक्षे कृष्णेन कृष्णतुल्येन बहुसहस्रपरस्त्रीभोगकुशलेनेत्यर्थः क्रोडेन भुजाभ्यन्तररूपक्रोडेनाभ्युद्धृतापि नानाविधरतव्यापारेणोपरि नीतापीत्यर्थः भूः सर्व्वसहा पक्षे सकलापराधाश्रयश्च अचलैव अचलापदवाच्यैव भूर्भूमिरचलेत्यादिकथनादित्यर्थः पक्षे अचलैवाचलश्चलैव चापल्यदोषरहितैव कीर्त्यते कथ्यते कोषैः लोकैर्व्वेत्यर्थः नाम निश्चयेन वसुमत्यास्सर्व्वरक्षार्थं स्थापितायाः पृथिव्याः सर्वं योग्यं पक्षे धनशालिन्या इत्यर्थः तथाच धनाधिक्ये वेश्यातुल्यापि लोकैः पतिव्रतोच्यते धनाभावे पतिव्रतापि दुष्टेतिकथ्यते लोककथाशून्यं न किमपि मया तत्त्वतो ज्ञायते सात्यन्तमसतीत्याशयः ॥ ५७५ ॥

श्यामा विलोचनहरी बालेयं मनसि हन्त सज्जन्ती ॥
लुम्पति पूर्वकलत्रं धूमलता भित्तिचित्रमिव ॥५७६॥

श्यामरूपायां बालायामासक्तोसीति वादिनीं पूर्व्वनायिकासखीं नायक आह श्यामेति श्यामरूपवती यद्यपि विलोचनस्य हरणकर्त्री तथापि बाला षाडशवर्षा यतः तथाच यौवनयोगमात्रेण नयनहारित्वं नतु पूर्व्वकलत्रवदस्याः स्वाभाविकमित्यर्थः पक्षे श्यामा अश्रुपातेन नयनहारिणी चेत्यर्थः हन्त खेदे पूर्व्वकलत्रलोपशङ्कया खेदः हृदये सज्जन्तो नयनद्वारेण हृदि विशन्तीतिसमानं पूर्व्वकलत्रम् आजन्मपरिशीलितामुत्तमां तव सखीमित्यर्थः लुम्पति विस्मारयति यथा धूमलता पूर्व्वविशेषणविशिष्टा भित्तिस्थं चित्रं लिखितं लुम्पति तथेत्यर्थः ॥५७६॥

शतशो गतिरावृत्तिः शतशः कण्ठावलम्बनं शतशः ॥
शतशो यामीतिवचः स्मरामि तस्याः प्रवासदिने ॥५७७॥

तस्या नायिकायाः विदेशगमनदिने शतशो गतिः समीपात् आवृत्तिः समीपं प्रति शतशः कण्ठावलम्बनं प्रेम्णा शतधाहमपि सहैव यामीति वचः शतधा यत् कृतं तत्प्रत्यहं स्मरामीत्यर्थः एवञ्च परदेशाच्चलनीयं शीघ्रमिति परदेशयुक्तिः सखायं प्रति ॥ ५७७ ॥

श्रुतपरपुष्टरवाभिः पृष्टो गोपीभिरभिमतं कृष्णः ॥
शंसति वंशस्तनितैः स्तनविनिहितलोचनोनुमतम् ॥५७८॥

वसन्तसमये परदेशं यामीति नायिकासमीपे वादिनं नायकं नायिकासखी निवारणार्थमाह श्रुतेति श्रुतः परपुष्टस्य कोकिलस्य वचः शब्दः प्रथमतो याभिस्ताभिरित्यर्थः वसन्ते प्रथमकोकिलरवश्रवणसमये स्त्रीभिस्समीपस्थं प्रति वक्तव्यं किं तत्राभिप्रेतं यद्दृ॰यनेऽस्माभिरयपुरुषेणाभिमतं वक्तव्यमिति पाश्चात्यगुर्ज्जरादिलौकिकम् गोपीभिर्विदग्धाभिरपि कृष्णः चित्तकर्षकः अपृष्टोपि चित्ताकर्षकः किं पुनः पृष्ट इत्याशयः स्तनदत्तनयनो वंशीशब्दैः परगोपनार्थमभि॰

लषितं चुम्बनालिङ्गनादिकं शंसति कथयति तथाच पशुतुल्यानामपि गोणीनामियं रीतिरतिविदग्धातिप्रीतयोर्व्वसन्तसमये गमनकथापि मास्त्वत्याशयः ॥५७८॥

**शङ्करशिरसि निवेशितपदेति मा गर्व्वमुद्वहेन्दुकले ॥**
**फलमेतस्य भविष्यति तव चण्डीचरणरेणुमृजा ॥५७९॥**

सखीसमूहे स्थितां काञ्चित् स्वाधीनपतिकां मम सपत्नीभयं नास्तीति वादिनीं तत्सपत्नीसखी अन्योक्त्या वक्ति शङ्करेति शङ्करस्य मस्तकनिवेशितचरणाहमतोऽन्ये नायकाः किंवक्तव्या इत्यभिमानेन मद्दं गर्व्वं माव्रहेत्यन्वयः इन्दुकाले इत्यनेन चन्द्रमेकमधीनं कृत्वापि द्वितीयशङ्करोप्यधीनः कृत इति गर्व्वहेतुः एतस्य गर्व्वस्य फलं चण्डीचरणधूलिभिः मृजा मार्ज्जनरूपं भविष्यति यदा कुपितचण्डीचरणप्रणामी शिवो भविता तदेत्यर्थः मम स्वामिनीकोपे सर्व्वं मिथ्येतिभावः ॥५७९॥

**शाखिशिखरे समीरणदोलायितनीडनिर्वृतं वसति ॥**
**कर्म्मैकशरणमगणितभयमशिथिलकेलि खगमिथुनम् ॥५८०॥**

अनेकजनयन्त्रितनायिकादूती नायिकासमीपगृहगमनाय नायकमाह्वयन्तीं भीतो नायक आह शाखीति शाखिशिखरे खगमिथुनं वसति शिखरपदेनोच्चता तेन पतनभययोग्यता व्यज्यते वायुचपलकुलाय सुखितं बहुविधोपद्रवशालित्वेपि आकाशगमनसामर्थ्ये सत्यपि खगमिथुनं स्वगृहं न त्यजत्यदृष्टमात्रशरणं न गणितं पतनादिभयं येन स्वगृहे भयसमूहेपि स्थेयमेव सर्व्वैरित्याशयः न शिथिला मन्दा क्रीडा यस्य तदशिथिलकेल्यतिदृढरतीत्यर्थः तथाच सर्व्वत्र गमनसमर्थमपि खगमिथुनं बहुविधोपद्रवशालिस्वगृहमेव रतार्थं सेवते नान्यत् तथाहमपि निरुपद्रवं समीचीनं स्वगृहं सेवे तत्र कृपा चेदत्रायातु यथोचितं तव तस्याश्च करोमीति सातीवभाग्यशालिनी अत्रागन्तुमसक्ता त्वं विरोधभयादिकं त्यक्त्वा तत्रैव गत्वा तां सरसयेतिदूती नायकमाहेति केचित् अत्रनीडनिवृत्तमिति व्याख्या चिन्त्या वस्तुतो महाप्रभुनायिका प्रथमसमागमभीतं नायकं नायिकाश्वासयति रतिपूरणार्थमिति वयम् ॥५८०॥

**शुक सुरतसमरनारद हृदयरहस्यैकसार सर्व्वज्ञ ॥**
**गुरुजनसमक्षमूक प्रसीद जम्बूफलं दलय ॥५८१॥**

जम्बूवृक्षाधस्तात् कृतसंकेताया नायिकाया अनागमनकोपेन गुरुजनमध्ये-स्थितं तामेव मूकीभावमालम्ब्य चिन्तयन्तं प्रतिवेशिनं नायकं गुरुजनप्रतिरोधेन मम विलम्बो जातः पश्चान्मया गतं भवानागतवान् तदानीं न ममापराधः इति पुनश्चलनीय मयाप्यागम्यते शीघ्रमिति शुकान्योक्त्या नायिकाह शुकेति शुक-पदेन सर्व्वथाविचार्य्यकर्तृत्वं व्यज्यते तेन वृथाकोपशून्यत्वंच व्यज्यते सुरतस-मरे रतयुद्धे नारद निर्द्दय यथा युद्धदर्शने नारदो निर्द्दयस्तथेत्यर्थः एवञ्च कामशास्त्ररीत्या नायिकातर्पकत्वं तेनातिस्पृहणीयत्वमावेद्यते हृदये यानि रहस्यानि गोप्यानि प्रेमभोगादीनि तेष्वेकमुख्यसारप्रधान तथाच सर्व्वरहस्य-सारभूतस्त्वमत एव सर्व्वज्ञमच्चित्तवृत्तिविषयं सर्व्वं जानासीत्यर्थः एवञ्च त्वदेकशरणाया ममानागमनं बलवद्बाधकं विना नेत्यपि जानास्येवेत्याशयः सर्व्वज्ञान्तमेकमेव वा पदम् गुरुजनाग्रे मूक मदनुचिताकथक एवञ्च सर्व्वदामम-हितकारी किमर्थमद्य वैपरीत्यमित्यर्थः प्रसादं कुरु भोजनविलम्बकोप त्यज जम्बू-फलं फलानि यथेष्टं दलय विदारयेत्यर्थः जात्यभिप्रायेणैकवचनमनेकफलविवेचनेन बहुकालं तत्रैव स्थितमिति व्यज्यते यद्वा बहुपरिश्रमेण एकमेव फलं मिलितं नान्य-दित्येकवचनार्थः तेन वृक्षे फलाभावात् मनुष्याभावः तेनच सर्व्वदा सङ्केतयोग्यत्वं ध्वन्यते यद्वा प्रातरेव सङ्केतगमनेनाल्पप्रातराशः शुकः कोपेन ममाऽनयं गुरुपुरो वक्ष्यतीतिभिया जम्बूफलहस्ता नायिका शुकं सम्बोधयति शुकनारदादिपदेन ब्रह्मचारित्वं तेन कामवार्त्तानभिज्ञत्वं फलपदेन तव भक्षार्थमेव वने गतं नान्यथे-त्यादि व्यज्यते ॥५८१

**शिरसा वहसि कपर्द्दं रुद्र रुदित्वापि रजतमर्ज्जयसि ॥**
**स्वस्याप्युदरस्यार्द्धम्भजतस्तव वेत्ति कस्तत्वम् ॥५८२॥**

चौर्य्यप्रतिग्रहादिनानानिन्दितप्रकारेण धनार्जनपरं कुटुम्बतुल्यं कञ्चन कद-र्य्यमन्योक्त्या कश्चिन्निन्दति शिरसेति कपर्द्दं जटाजूटं पक्षे वराटकं शिरसा मस्तकेन वहसि धारयसि एकत्वं विवक्षितं योगरूपधारिणा भिक्षुणा शिरसि

वराटिका ध्रियते इतिसमाचारः तथाच सज्जनैः सुवर्णमपि न धार्य्यते शिरसा का कथा कपर्दस्येति रुद्र रोदनशील रजतं रौप्यं रोदनं कृत्वैवाऽर्ज्जयसि सोरोदीयदरोदीत्तद्रुद्रुद्रस्य .रुद्रत्वमित्याद्यर्थवादाद्रोदनाद्रजतोपतिरिति स्वस्योदरस्यार्द्धं भजतः धारयतः पूरयतश्चापि तेनान्योदरपूरणे का चर्च्चेत्यर्थः तव तत्वं चरितं को वेद न कोपीत्यर्थः एवंविधकार्य्यस्य का चर्च्चेतिभावः ॥५८२॥

श्रोतव्यैव सुधेव श्वेतांशुकलेव दूरदृश्यैव ॥
दुष्टभुजङ्गपरीते त्वं केतकि न खलु नः स्पृश्या ॥५८३॥

अनेकविट्संगतनायिकां सद्वृत्तो नायक आह श्रोतव्येति दुष्टसर्प्पवेष्टिता त्वं खलु निश्चये नः अस्माकं स्पृश्या न भवसीत्यर्थः हे केतकि यथा सुधा अमृतं श्रोतव्यमेव मर्त्यानां न प्राप्यमित्यर्थः चन्द्रकलादूराद्दृश्यैव न तत् स्पृश्या यथेत्यर्थः सर्प्पसम्बन्धो रक्षार्थममृतमात्रे इत्याशयः तथाच यद्यपि स्पृहणीयासि सर्व्वथा तथापि दुष्टभयात्त्यज्यसे राजपत्नी यद्वा राजपुरुष आह नः राजपुरुषाणामस्माकमित्यर्थः इतिवा ॥५८३॥

श्रवणोपनीतगुणया समर्प्पयन्त्या प्रणम्य कुसुमानि ॥
मदनधनुर्ल्लतयेव त्वया वशं दूति नीतोऽस्मि ॥५८४॥

नायिकादूतीं नायक आह श्रवणेति हे दूति एवञ्च त्वद्गुणेनैवेदं प्रेम तिष्ठति त्वत्कारितमेव भवतीतिभावः त्वया वशमधीनतां प्रापितोस्मीत्यर्थः त्वत्कथनमात्रेणैव गमिष्यामि नतु तस्या वैदग्ध्येनेतिभावः त्वया किंभूतया श्रवणे मम कर्णे उपनीताः प्रापिता नायिकागुणाः सौन्दर्य्यादयो यया पक्षे कर्णान्तिके उपनीतो गुणो ज्यारूपो ययेत्यर्थः प्रणामं कृत्वा नायिकाप्रेषितानि सुबुद्ध्यानीतानि वा पुष्पाणि समर्पयन्त्या मह्यमित्यर्थः पक्षे प्रकृष्टनमनं भुग्नतां कृत्वा पुष्पाणि प्रयच्छन्त्या पुष्पमयत्वान्मदनधनुर्ल्लतायाः इत्याशयः ॥५८४॥

शाखोटकशाखोटज वैखानसकरटपूज्य रट सुचिरम् ॥
नादरपदमिह गणकाः प्रमाणपुरुषो भवानेकः ॥५८५॥

मूर्खवदने गुणिनामवस्थानं नोचितमिति कश्चिद्वदति कश्चित् शाखोटकेति हेकाक पूज्य काकराजेत्यर्थः सुचिरं रट शब्दं कुरु तेनैव सिद्धिः इह नगरे प्रमाण-पुरुषस्सत्यवचनः पुरुषः भवानेकः नतु व्याससमोऽप्यन्य इत्यर्थः गणका ज्योतिश्शा-स्त्रविशारदाः इह नगरे आदरस्य पदं स्थानं नेत्यर्थः काकेनैव गणककार्य्यं क्रियते इतिभावः शाखोटकस्य शाखायामुटजं कुटी यस्य तस्य करटपूज्यस्य संबोधनं वैखानस आकाशयायिमुनिस्वरूपेत्यर्थः तथाचास्मिन्नगरे सर्व्वविद्यावान् काकराज एव प्रसिद्ध इत्यस्यगुणिश्रद्धा नास्तीति गुणिना न स्थेयमेवात्रेतिभावः ॥५८५॥

## शशिरेखोपमकान्तेस्तवाद्यपाणिग्रहं प्रयातायाः ॥
## मदनासिपुत्रिकाया इवाङ्गशोभा कदर्थयति ॥५८६॥

तस्मिन्नेव दिने विवाहितायाः सख्युः पत्न्याः सौन्दर्य्यं सखायं प्रति कश्चिद्वक्ति शशिरेखेति शशिरेखोपमा चन्द्रकलातुल्या कान्तिः शोभा यस्याः एवञ्च मृदुत्वं निष्कलङ्कत्वं सौन्दर्य्येण सर्व्वनमनीयत्वञ्च व्यज्यते अद्येदानीमेव तव पाणिग्रहं त्वत्कृतविवाहं प्राप्तायाः इत्यर्थः अङ्गशोभा शरीरसौन्दर्य्यं कदर्थयति द्रष्टारं विव-शङ्करोतीत्यर्थः पक्षे चन्द्ररेखाकान्तेः शाणीकृतत्वात् अद्य प्रथमदिन एव पाणिग्रहं मदनहस्तग्रहणं प्राप्तायाः इत्यर्थः एतेनोपभुक्तत्वं व्यज्यते तेनास्याः पाणिग्रहणमात्रे-ण तवास्याश्च सौन्दर्य्यं किं वक्तव्यमितिपरिहासो वाक्यार्थः यद्वा अनेन सर्व्वो-त्तमनायकेन तव विवाहङ्कारयित्वा संगतिष्कार्य्यते इतिविवाहात् पूर्व्वं वदन्ती दैवादन्यविवाहितां तां प्रत्याह अद्येत्यत्रान्येतिपाठः शोभेत्यत्र शोभामितिपाठः यथामदनक्षुरिकाया मदनभिन्नपुरुषहस्तगतायाः शोभां मदनान्यः पुरुषो नाशयति तथा तवापि शोभां पुरुषाभासोयं नाशयत्यतो मदुक्तनायकेनैव सङ्गतिः कर्त्तव्येत्याशयः ॥५८६॥

## शैथिल्येन भृता अपि भर्त्तुः कार्य्यन्त्यजन्ति न सुवृत्ताः ॥
## बलिना कष्टे बाहौ वलयाः कूजन्ति धावन्ति ॥५८७॥

स्वामिकार्यं सद्वृत्तैनैव क्रियते नासद्वृत्तैरिति कश्चित्कञ्चिद्वक्ति शैथिल्येति सद्वृत्ताः सकलसमीचीनवृत्तशालिनः पक्षे सुन्दरं वृत्तं मण्डलं येषां ते भर्त्तुः

स्वामिनः पक्षे धारकस्य शैथिल्येनानास्थया धृताः निकटे सेवादौ स्थापिताः किंवक्तव्या इत्यर्थः पक्षे शैथिल्येन श्लथतया धृता अपि बलवता बाहौ आकृष्टे सति बलिपदेन निवारणानर्हत्वं व्यज्यते वलयाः बाहुलङ्करणरूपाः शब्दायमाना भवन्ति धावनञ्च कुर्व्वन्तीत्यर्थः तथाच सुवृत्तेन वलयेन श्लथस्थापितेन स्वाश्रयरक्षार्थमेवं क्रियते सचेतसैताद्दशेन कथं न स्वामिकार्य्यं कर्त्तव्यमित्यर्थान्तरन्यासः ॥५८७॥

॥ इति श्रीसचलविरचिते शकारव्रज्या समाप्ता ॥

**षट्चरणकीटजुष्टं परागघुणपूर्णमायुधम्मुक्त्वा ॥**
**त्वां मुष्टिमेयमध्यामधुना शक्तिं स्मरो वहति ॥ ५८८ ॥**

नायको वारंवारं यद्दृच्छातो नायिकां भुक्त्वा पुनरपि तां भोक्तुकाम आह षट्चरणेति. स्मरः कामः एवञ्च स्मरणमात्रेण पुनरिच्छेति ध्वन्यते त्वां शक्तिमस्त्रविशेषरूपां वहति अधुनाधुनैव मुष्टिना मातुं योग्यो मध्योवलग्नप्रदेशो यस्यास्तामित्यर्थः एवञ्च ममान्येषां वा ईद्दशभोगपरम्परा न द्दष्टा न श्रुतेति त्वन्माहात्म्यमेव न ममातो ज्ञायते त्वामासाद्याधुनैव मदनस्येद्दशी शक्तिर्म्मिलिता तथाच तवाधिकश्रमेपि स्वदोषजनितस्य मदुन्मादस्य पुनः शान्तिः कर्त्तव्यैवेति भावः स्वधनुस्त्यागे हेतुमाह आयुधं पुष्पं धनुः मुक्त्वा त्यक्त्वेत्यर्थः षट्चरणरूपा भ्रमररूपा ये कीटास्तैर्जुष्टं सेवितं कोटालयमेव सदेत्यर्थः परागः पुष्पधूलीरूपस्स एव घुणस्तद्रूपचूर्णमयं यतः अतः त्यक्त्वा नवीनां तदधिकां शक्तिं मदनो जग्राहेत्यर्थः ॥ ५८८ ॥

॥ इति श्रीसचलमिश्रविरचितायां भावहृदयाख्यटीकायां षकारव्रज्या समाप्ता ॥

**सा दिवसयोग्यकृत्यव्यपदेशात्तस्य केवलं गृहिणी ॥**
**द्वितिथेर्दिवसस्य परा तिथिरिव सेव्या निशि त्वमसि ॥५८९॥**

सपत्नीप्राबल्येन खिन्नां नायिकां सखी वक्ति सेति सा प्रथमा दिवसे यानि कृत्यानि तेषु योग्यो यो व्यपदेशः इदं कुरु इदं कुरु इत्यादि कथनं तस्मात्तस्य त्वदुपभोगपरस्येत्यर्थः केवलं गृहिणी केवलपदेन भोगाभावो व्यज्यते दिवा एका

तिथिः रात्रौ चापरा तिथिः यत्र दिवसे एतादृशस्य दिवस्यापरातिथिय्यथा रात्रिमात्रकर्त्तव्यसकलकर्मण्युपयुज्यते तथा दिवाकृत्ये प्रथमा सम्भोगे त्वमेवेत्यसूया न कर्त्तव्या तवैवाधिकं सुखं तस्यास्तु महता श्रमेण गृहिणीतिपदमात्रम् ॥ ५८९ ॥

**स्तननूतननखलेखालम्बी तव घर्मबिन्दुसन्दोहः ॥**
**आभाति पट्टसूत्रे प्रविष्ट इव मौक्तिकप्रसरः ॥ ५९० ॥**

सखीं सख्याह स्तनेति कुचसम्बन्धिनवीननखचिह्ने स्थितः एवञ्च स्थिरत्वं व्यज्यते निशावसानश्रमस्वेदसमूहः रक्तपट्टसूत्रे प्रविष्टो ग्रथितो मालारूपो मौक्तिकसमूह इवाभाति नूतनपदेन रेखाया रक्तत्वं संदोहपदेन श्रमातिशयो व्यज्यते तेन च त्वं मद्य एव सुरतं संपाद्यागतासि वृथा मां नेतिवाक्येन वञ्चयसीतिभावः ॥ ५९० ॥

**सौभाग्यगर्व्वमेका करोतु यूथस्य भूषणं करिणी ॥**
**अत्यायामवतोर्य्या मदान्धयोर्म्मध्यमधिवसति ॥५९१॥**

सुन्दरे नायके धननन्तमुपेक्ष्यासक्तां सामान्यवनितां मातोपदिशति सौभाग्येति यूथस्य गजसमूहस्य व्यञ्जनया सकलकामुकस्य भूषणमलङ्करणभूता एका करिणी एकेत्यनेन यूथे द्वितीयायाः संचारमपि न सहते इत्याशयः सौभाग्यगर्वं सर्व्वसुभगत्वगर्व्वं करोतु तुल्यतया स्वकार्य्यकरणादित्याशयः अत्यायामवतोरतिविशालयोरथच महाधनयोर्म्मर्द्देनान्धयोर्य्युद्धवारणार्थं या मध्यदेशमधितिष्ठतीत्यर्थः तथाच युद्धप्रवृत्तयोरपि समाधानं कृत्वा कमपि न विमुखयति एवञ्च त्वया सर्व्वे नायकास्समाधेया नत्वेकस्मिन् पक्षपातो विधेय इत्युपदेशः ॥५९१॥

**स्वचरणपीडानुमितत्वन्मौलिरुजाविनीतमात्सर्य्या ॥**
**अपराद्धा सुभग त्वां स्वयमियमनुनेतुमायाता ॥५९२॥**

पादप्रणामेनापि मानभङ्गमनिच्छन्ती नायके गते पश्चात्तापनाहूतैव नायकसमीपं गता तदा नायिकालाघवनिवारणाय नायिकासखी नायकमाह स्वचरणेति

हेसुभग विना प्रयासमेतस्या आगमनादधिकसौभाग्यं मर्त्यमण्डले नास्तीत्याशयः त्वामियमनुनेतुं परितुष्टं कर्त्तुं स्वयमागता न मयानीतेत्याशयः अपराद्धोत्कटापराधयुक्ता उत्कटापराधमाह स्वस्याश्चरणे या पीडा दुःखाधिक्यं तत्प्रयोजकानिदृढ़प्रहारप्रयोज्यत्वेन हेतुना नुमिता या तव मस्तकरुक् तया अवनतं गतं मात्सर्य्यं कोपो यस्यास्सेत्यर्थः एवञ्चाल्पापराधेपि चरणप्रतिपातं कुर्व्वतस्ते नापराधः प्रत्युत दृढप्रहारेण तव पीडाकारिकाहमेवापराद्धेतिस्वयमागतेत्याशयः नायिका नायकं स्वयमाहेतिवा केचित्तु सखीमध्यस्थं नायकमनाहूतागता तदा विहसन्तीस्सखीर्दृष्ट्वा नायिकासखी नायिकालाघवनिवारणाय मृषैव कलयित्वा नायकं वदतीति विदग्धाः प्राहुः ॥५६२॥

स्नेहमयान् पीडयतः किञ्चक्रेणापि तैलकारस्य ॥
चालयति पार्थिवानपि यः स कुलालः परं चक्री ॥ ५६३ ॥

राज्ञः स्वकीयसेवकप्रजाद्यनुरञ्जनं प्रबलशत्रुनिवारणं च द्वयमेव सर्वस्वं नान्यदिति कश्चित्कञ्चिदाह स्नेहमयानिति स्नेहमयान् तैलमयान् पक्षे प्रेमप्रचुरान् प्रजासेवकसचिवादीन् अपिना मध्यविधानां का कथेत्यर्थः तैलकारस्य यन्त्रविशेषेण चक्रपदवाच्येन किं चक्रीतैलकार इत्यभिधानात् अथच राज्ञः प्रजापीडनमात्रकारिण्या सेनया किमित्यर्थः पार्थिवान् पृथिवीविकारान् चालयति भ्रामयति यः कुलालोपि नीचोपि स परं केवलं चक्री प्रशस्तचक्रवानित्यर्थः पक्षे पार्थिवान् भूमिपान् चालयति स्थानभ्रष्टान् करोति स एव चक्री सेनावान्नान्य इत्यर्थः तथाच स्वकीयसकलजनरञ्जनक्षमः प्रबलशत्रुविद्रावक एव पार्थिवो नान्य इतिभावः॥५६३॥

सरले न वेद भवती बहुभंगा बहुरसा बहुविवर्त्ता ॥
गतिरसतीनेत्राणां प्रेम्णां श्रोतस्वतीनाञ्च ॥५६४॥

सपत्न्याः पतिनिकटे विलक्षणविविधकटाक्षविक्षेपं दृष्ट्वा सरलस्वभावां खिन्नांसखीं सखी वदति सरलेनेति असतीनयनानां व्यक्तिभेदेन दृष्टिभेदेन वा बहुत्वं प्रेम्णां श्रोतस्वतीनां च द्वात्रिंशद्भेदाः साम्याधिक्यन्यूनत्वविधानं नानाविधजल तरङ्गश्च गतिरिति भवती सरलत्वान्न जानातीत्यर्थः अध्याहृतेन कर्म्मणा उक्तत्वान्न

द्वितीया गतिं पक्षत्रयेपि विशेषयति बहुभङ्गा भङ्गो वक्रतादिरधिकादित्वेन ज्ञापनं-तरङ्गश्च तद्वतीत्यर्थः बहुरसा रसः शृङ्गारादिः रस इच्छा रसो जलं तद्वतीत्यर्थःबहु-विवर्त्ता विवर्त्तः अनेककुटिलत्वमनेकप्रकारः अम्भसां भ्रमश्च तद्वतीत्यर्थः एवञ्च सरलया त्वया पूर्वोक्तमेतत्सर्वं किमपि न ज्ञायते सपत्न्या पतिवशीकरणमनेक-व्यापारेणैव कृतं त्वयापि पतिवश्यतार्थमेवमेव करणीयमिति ध्वन्यते भङ्गो वीचिषु विख्यातो भङ्गो जयविपर्य्ययः भङ्गो भेदे रुजायाञ्चेतिनानार्थः ॥ ५६४ ॥

**सखि मध्याह्नद्विगुणद्युमणिकरश्रेणिपीडिता छाया ॥**
**मज्जितुमिवालवाले परितस्तरुमूलमाश्रयति ॥ ५६५ ॥**

शयनगृहागतं प्रेयांसं दृष्ट्वा नायिका सखीमाह सखीति एवञ्च व्यक्तमेवो च्यते त्वया प्रियगृहमेव गन्तव्यं नान्यत्र मध्याह्ने द्विगुणया सूर्य्यकिरणश्रेण्या-पीडिताऽचेतना छायाप्यालवाले जलशीतले मज्जनं कर्तुमिव सर्व्वतः तरुमूलमेवा-श्रयते नान्यत्र गच्छतीति पश्य स्वल्पमपि वियोगं न सहत इति व्यज्यते तरुमूलमेव संकेतमिदानीं गच्छेति दूती सखी नायिकां वदतीति वा संकेतस्थले मध्याह्ने छाया नास्तीति मध्याह्ने न गन्तव्यमिति दूतीं नायिका वदतीत्यपरे ॥ ५६५ ॥

**सखि शृणु मम प्रियोयं गेहं येनैव वर्त्मनायातः ॥**
**तन्नगरग्रामनदीः पृच्छति सममागतानन्यान् ॥५६६॥**

मानं कुरु नायके इति वादिनीं सखीं नायिकाह सखीति सखि एवञ्च यथार्थ-कथनं व्यज्यते शृणु एतावदेव जानीहि नान्यथेत्याशयः ममायं प्रियः इदमा सर्व्वदा हृदये बहिश्च सन्निहित एव तिष्ठति कदापि वियोगवेदनां न ददातीत्यर्थस्तेन सर्व्वथानुपेक्षणीयत्वं व्यज्यते गेहं मम गृहं येन मार्गेणायातः एवञ्च दूरादागत्य तिष्ठति गतोप्यनुपेक्षणीय एव गुर्व्वादिभीत्या परावृत्य गमने बहुधा परिशीलिता-न्यपि तन्नगराणि हट्टामयानि ग्रामांश्च नदीश्च सहागतानन्यावनेयकान् पुनः पुनः पृच्छति किं नगरं को ग्रामः का नदीत्यादि एवञ्च सदा मम चिन्तनपर एव मदन्यन्न किमपि जानाति कथमस्य दुःखोत्पादकमानविधानं कर्त्तव्यमित्याशयः ॥ ५६६ ॥

सायं रविरनलमसौ मदनशरं स च वियोगिनीचेतः ॥
इदमपि तमस्समूहं सोपि नभो निर्भरं विशति ॥५६७॥

सद्वृत्ताया वियोगिन्या यथा दुःखं तथा न कस्यापीति वियोगिनीदुःखदुःखितः कश्चित्कञ्चिदाप्तमाह सायमिति सायङ्काले सूर्य्यः अग्निं विशति अद्भ्यःसमुत्थायाग्निं विशतीतिश्रुतिः अग्निः मदनशरं विशति मदनशरः वियोगिनीचित्तं विशतीत्यर्थः एवञ्च सूर्य्याग्निदाहबाधासमेतं मदनशरप्रहारं विरहकृशाङ्गी सोढुं न शक्नोतीति व्यज्यते वियोगिनीचित्तमपि तमस्समूहमन्धकारवाचकेन तमःपदेन मोहावस्था व्यज्यते तेन च रात्रौ दुःखा वधिक्येन मोहापन्ना भवति यद्वा तमः शोकेपि कथ्यते इत्यभिधानात् शोकं विशतीत्यर्थः एतेन प्रथमव्याख्याने तमःपदेनाज्ञानकथने ऽवस्थाभेदो नेति निरस्तं सोपि तमस्समूहोपि शोकसमूहोपि वेत्यर्थः नभः शून्यं विशति एवञ्च सर्व्वविषयकज्ञानशून्यामृतेव रात्रौ तिष्ठतीति सद्वृत्तेन वियोगिना न भाव्यमित्युपदेशः यद्वा सन्ध्याकालमारभ्य विरहिण्या दुःखाधिक्यमिति कथनेन विदेशगमनोद्यतं निवारयन्ती नायिकाह नायकमानयेति वक्तुं सखीं प्रति नायिकोक्तिरित्यप्याहुः ॥ ५६७ ॥

स्मरवीरसमरपूरितकम्बुनिभद्विगुणपीनगलनालः ॥
शीर्णप्रासादोपरि जिगीषुरिव कलरवःक्वणति ॥५६८॥

नायकं प्रति समीचीनं प्रथमसमागमाय संकेतं नायिकादूती वदति स्मरेति शीर्णः जीर्णः अनेन मनुष्याभावो व्यज्यते तेन च तत्र चिरकालावस्थानयोग्यत्वं तेनापि प्रथमदिनसम्भोगे विघ्नाभावो यथेष्टविहारयावज्जीवप्रेमबन्धादि कथ्यते प्रासादोपरि राजगृहोपरि प्रासादपदेनातिभाग्यशालिनोर्य्युवयोर्य्योग्योयमेव मयाविचारित इति व्यज्यते उपरिपदेन सम्मार्ज्जनाभावेपि समीचीनत्वं समीरणाद्युद्दीपकसान्निध्यं झटितिगमनायोग्यत्वेनानवलोकनीयत्वेन सर्व्वोपद्रवराहित्यञ्च व्यज्यते कलरवः कपोतः क्वणति त्वदीयप्रेयसी एवमेव रते करिष्यतीत्यावेद्यते द्विगुणः पुष्टो गलरवो यस्य योद्धापि मदेन तथा भवति मदनयुद्धसमये पूरितः शब्देन पूर्णः कम्बुः शंखःतन्निभः तत्सदृश इत्यर्थः विजिगीषुरिवेत्यर्थः यथा संग्रामे

जिगीषुणा शंखवाद्यं क्रियते तथेत्यर्थः यद्यपि विजगीषुशंखयोरभेदकथनं नोचितं तथापि निभपदेन सादृश्यकथनान्नाभेदः सौसादृश्यकथने तत्प्रत्ययेपि न क्षतिः यथा कपोतः स्वयं बहुरूपो भवत्प्रत्यक्षः कामरणजेना दृश्यते तथैव भवानपि शीघ्रमेव मया क्रियतेऽनुरूपशकुनदर्शनेन तथैव निश्चय इत्यभेदकथनेपि न क्षतिरिति-भाति ॥ ५९८ ॥

**स्फुरदधरमविरताश्रु ध्वनिरोधोत्कम्पकुचयुगं रुदितम् ॥**
**जानूपनिहितहस्तन्यस्तमुखं दक्षिणप्रकृतेः ॥५९९॥**

प्रत्यक्षज्ञातापराधा नायकोऽतिलज्जितः प्रणिपातपुरस्सरं नायिकामाह स्फुरदिति दक्षिणा सर्व्वदा ममानुकूला प्रकृतिः स्वभावो यस्याः एवञ्च ममाविप्रियकारित्वं तेन साधुत्वादिगुणशालित्वं व्यज्यते स्वल्पापराधस्यापि स्वकृतस्यानौचित्यं च इदं प्रत्यक्षं महादुःखजनकं तव रुदितं काका नेत्यर्थः यस्याः अदक्षिणायाः पतिरनर्थानस्तस्या एवेदमुचितं त्वन्तु ताडनेपि समर्थेत्याशयः स्फुरन्नधरो यत्र अविरतं नेत्रजलं यत्र ध्वनेः शब्दस्य रोदनस्येत्यर्थः रोधः परश्रवणलज्जयेत्याशयः तेन कम्पमानौ कुचौ यत्र जानूपरिहस्ते न्यस्तं मुखं यत्र तदिदं रुदितं तव नैवोचितमिति पादप्रणतं मामुत्थापयेति ॥५९९॥

**स्वयमुपनीतैरशनैः पुष्णन्त्यपि नीडनिर्वृतं दयितम् ॥**
**सहजप्रेमरसज्ञा सुभगा गर्व्वं बकी वहति ॥६००॥**

निरुद्योगितया सर्व्वदा गृहस्थायितया च पतिविरक्तां कन्यकां मातोपदिशति स्वयमिति बकी बकपत्नी सुभगागर्वं सुभगासु गर्व्वं सर्वसुभगापेक्षयाऽहं सर्वाधिकेतिगर्व्वमित्यर्थः वहति नत्वारोपयतीत्यर्थः किंभूता सहजं स्वाभाविकं द्रव्याद्युपाधिरहितं यत्प्रेम तदेव रसः रसराजः शृङ्गार इतियावत्तं जानाति नीडे कुलाये निर्वृतमतिसुखिनमुद्योगशून्यं सदागृहस्थमेवेत्याशयः दयितमतिप्रेमपात्रमित्यर्थः स्वयमुपनीतैः स्वयं महता श्रमेणानीतैः भोजनैः पुष्णन्त्यपि पोषकस्यापि पोषणं कृत्वापीत्यर्थः अपिना मदीयद्रव्येण पोषणेन तव का क्षतिरिति व्यज्यते अण्डानि बकी यद्दिने नीडे सूते तदेव बकस्यान्धता भवति तद्दिनमारभ्य यावत्कालं बाला

नीडादुड्डीय गच्छन्ति तावत्कालमण्डरक्षण बालपरिचर्य्या च बकीवद्बन्धो नीडस्थितो बक एव करोति सर्व्वेषामशनं बकी ददातीति बकजातिस्वभावः एवञ्च पक्षिणी एवं करोति त्वन्तु मत्कुलोत्पन्ना मदीयेनापि द्रव्येण न पतिं पुष्णासि प्रत्युत औदास्य करोषि सर्व्वथैव तन्न कर्त्तव्यमिति सामान्या सामान्यामाह तथा च यस्या द्रव्येण कृतां नायकस्सैव यदृच्छारतकारिणीत्येके सुरतार्थं स्त्रीणामकर्त्तव्यं किमपि नेति कश्चिदाहेत्यपरे ॥६००॥

स्वरसेन बध्नतां करमादाने कण्टकोत्करैस्तुदताम् ॥
पिशुनानां पनसानां कोषाभोगोऽप्यविश्वास्यः ॥६०१॥

राज्ञां दुष्टचेतसां भाण्डागाराद्यधिकारप्राप्तावपि विश्वासो न कर्त्तव्य इतिवृद्धो-बालानुपदिशति स्वरसेनेति करं राजग्राह्यभागं स्वरसेन स्वेच्छया ननु सचिवादि सम्मत्या बध्नतामियन्तं गृह्णामीति व्यवस्थापयतामित्यर्थः करव्यवस्थासमये सचिवादीन् तिरस्कृत्य सहस्रप्राप्ये सहस्रद्वयं गृह्णामीत्युक्त्वैव समर्प्पयतां करा-दानसमये कण्टकोत्करैः कण्टकसमूहैः तुदतां व्यथाविधानं कुर्व्वतां व्यवस्थादिनेऽ धिकग्रहणार्थं नानाविधविरुद्धं पीडाकरताडनभर्त्सनादिकमाचरतामित्यर्थः पिशुना-नां खलानां प्रभूणामित्यर्थः अथच स्वस्य रसेन निर्य्यासादिघटितेन द्रवेण करं हस्तं बध्नतां कार्य्यान्तराक्षमं कुर्व्वतामादाने ग्रहणे कण्टकसमूहैर्व्यथयतामित्यर्थः कोषस्य बहुधनस्याभोगः बहुसम्बन्धाधिकारादितिभावः अथच कोषस्य फलस्या-भोगः परिपूर्णता परिणामः मुक्ताधिकदानेन परिणत्यभाव इत्यर्थः पक्षेऽपरिणामः परिपाकाभावः अजीर्णतादोषप्रदत्वादेवञ्च पनसफलं भुक्तमुदरे चतुर्गुणं भोक्तुर्यथा भवति तथा दुष्टराजद्रव्यं स्वल्पमपि भुक्तं बहुदातुं पतति क्लेशाधिक्यं च भवती-ति दुष्टो राजा सर्व्वथा न सेव्य इति वाक्यार्थः ॥६०१॥

सौभाग्यं दाक्षिण्या न्नेत्युपदिष्टं हरेण तरुणीनाम् ॥
वामार्द्धमेव देव्याः स्ववपुशिल्पे निवेशयता ॥६०२॥

नायिकाकौटिल्येनोदासीनं नायकं नायिकासखी वक्ति सौभाग्यमिति तरुणीनां यौवनमत्तानां दूरेण सर्व्वनायकश्रेष्ठेन दाक्षिण्यात् सरलत्वाद्दक्षिणभागदानाच्च

सौभाग्यं सुभगत्वं न भवतीत्युपदिष्टं शिक्षितं तथाच पुरुषेनैव सर्व्वाः स्त्रियः शिक्षिता वाम्यं विना न सुखमिति पुंसामेव दोषोयं न स्त्रीणामिति स्ववामशरीरस्य-शिल्पे अर्द्धनारीश्वरत्वनिर्म्माणे वामार्द्धमेव देव्या वामभागमेव निवेशयता बहिः-स्थापयतेत्यर्थः तथाच शिवेन देवीदक्षिणभागहरणाद्वामार्द्धमात्रावशेषात् स्त्रीदा-क्षिण्यं कथं करोत्वित्याशयः यद्वा देवीसम्बन्धिस्ववपुःशिल्पसमये वामार्द्धमेव पूर्वार्द्धमेव निवेशयतेत्यर्थः तथाच देवीदक्षिणभागस्य शिवभागमिलनेन वामत्वमेव जातं स्वकीयवामभागस्य वामत्वं स्थितमेव तेन स्त्रीणां दक्षिणभागनाशः अत एव वामा कथं दाक्षिण्यं करोत्वित्यर्थः एवञ्च स्वभावतो वामाया यौवनोद्धताया मत्-सख्या वाम्याचरणेपि तव वाम्याचरणन्नोचितमित्यौदासीन्यं त्यजानुग्रहणे मामिति यद्वा नायके सर्व्वदा सरलत्वेन लघुतैव भवतीति कदाचिन्मानकरणमवश्यमुचितमिति नायिकां सखी वदति दक्षिणधर्म्मपरस्य दाक्षिण्यपदार्थस्य दानेपि पर्य्यवसितत्वं तथाच दक्षिणभागदानेन हेतुना देवी वामा बभूव शिवो वामदानेन दक्षिण इति दृष्टान्तेन दक्षिणस्य शिवस्य न सुखं किन्तु वामाया देव्या एवेति सुखार्थं वामता-वश्यकीत्याशयः एवकारयोजनाभेदेनार्थभेदा विस्तरया भिया नोक्ताः ॥६०२॥

**सुभग स्वभवनभित्तौ भवता संमर्द्य पीडिता सुतनुः ॥**
**सा पीडयैव जीवति दधती वैद्येषु विद्वेषम् ॥६०३॥**

नायिकासखी नायकं वक्ति सुभगेति सुभग अतिपीडाकर तव स्पर्शेनापि नायिका वशीभूता भवति किं वाच्यं समीचीनभोगेनेत्याशयः स्वभवनभित्तौ नायिका भवनभित्तौ एवञ्च त्वया गत्वा पीडिता न तु सा तव भवनं गतेत्यर्थः सर्व्वथा तवै-वोद्योग इत्याशयः भवनभित्तिपदाभ्यामन्धकारानवकाशव्यञ्जकाभ्यां बहुजनसमा-जेपि पीडनयोग्यता सूच्यते सम्मर्द्द उत्सवकृताऽनेकजनसमूहे भवता भवतैव पीडिता भित्तिसय्युंक्तापि सम्यग् सेयमिति ज्ञात्वा वक्षसा मर्द्दितेत्यर्थः सुतनुः मृद्वीत्यर्थः अनेनाधिकपीडासहनायोग्यता व्यज्यते सा तयैव पीडया जीवति यस्याः सम्मर्द्दपीडापि सुखदात्री तस्याः सविलाससम्भोगे किं सौख्यमिति लुब्धेत्याशयः अत एव वैद्येषु पीडाशमकेषु विद्वेषं दधती एवञ्च तामेतादृशीं कृत्वौदासीन्यं नोचितमिति चलनीयमित्याशयः स्वभवनभित्तौ नायकभवनभित्तौ रहसि सम्मर्द्द-यित्वा पीडितेत्यर्थकरणे तु व्यङ्ग्यमन्यथा कथनीयमित्यपि ॥६०३॥

सा गुणमयी स्वभावस्वच्छा सुतनुः करग्रहायत्ता ॥
अमिता बहुमन्त्रविदा भवता कास्मीरमालेव ॥६०४॥

नायिकासखीसंगोपेन कृतप्रेमबन्धं नायकं नायिकासखी वदति सेति सा याद्यप्रभृति मम सखी कदापि किञ्चिदपि न गोपयति तव समाजेन तदपि जातमिति व्यज्यते गुणमयी सकलसौन्दर्य्यशीलादिसम्पन्ना मालापक्षे सूत्रमयी स्वभावेन प्रकृत्या स्वच्छा अकुटिला पक्षे सहजेनोज्वला सुतनुः सुन्दरी पक्षे सुष्ठुग्रथितेत्यर्थः करग्रहायत्ता करग्रहमात्रसाध्येत्यर्थः अत एव मामनुक्त्वैव तवाधीनेतिव्यज्यते पक्षे जपसमये जापकहस्ताधीनेत्यर्थः भ्रमिता भविता प्रतारिता व्यञ्जना पूर्व्ववत् पक्षे वारंवारं परावृत्तिं नीतेत्यर्थः बहुमन्त्रविदा सकलकामकलाकुशलेनेत्यर्थः पक्षे बहुतरमन्त्रजापकेन एवञ्च तव सर्व्ववशीकारसामर्थ्यमकिञ्चित्करमिति व्यज्यते कास्मीरमालाधीना तां यथेच्छसि तथा करोषि तथेयं सर्व्वगुणसम्पन्नापि सदा रतप्रीताधीनमानीतेति तव कौटिल्यं मया ज्ञातमिदानीं दृश्यते तव सामर्थ्यमिति नायिकासखीकोपो वाक्यार्थः केचित्तु करग्रहायत्तामर्पात्यपिः पूरणीयः तथाच करदानमात्रसाध्यापि मन्त्रादिप्रभावेन भ्रान्तां कृत्वा धनदानं विनैव स्वेच्छया भुज्यते त्वयेति प्रतारणशीलं नायकं प्रति सामान्यवनितासख्युक्तिरित्याहुः ॥६०४॥

सव्रीडस्मितमधुरे स्पृष्टाऽस्पृष्टेव किञ्चिदपयान्ती ॥
अपसरसि सुन्दरि यथा तथा तथा स्पृशसि मम हृदयम् ॥६०५॥

कश्चिदतिकामकलाकुशलो नायकः काञ्चित्प्रथमौपपत्यप्रवृत्तां किञ्चिद्भयशालिनीं दूतीं विनैव क्वचिद्गच्छन्तीं रथ्यायामेकाकिनीमालोक्याह सव्रीडस्मितेति व्रीडया सहितं सव्रीडं सव्रीडस्मितेन मन्दहासेन माधुर्य्यं सौन्दर्य्यं यस्याः तत्सम्बोधनं सव्रीडस्मितमधुरे क्वचित्तनुभगे इतिपाठः तदर्थक एव सः सव्रीडपदेन प्राथमिकपतिभिन्नस्पर्शसुखाङ्गीकारेण पूर्व्वंजातेन सलज्जेतिव्यज्यते स्मितपदेन कोपाभावो व्यज्यते मधुरपदेनानुपेक्षणीयत्वं कथ्यते यद्वा सव्रीडस्मितमधुरसमुदायेन रतान्तावस्था व्यज्यते तेनापि प्रथमस्पर्शे कोपाभावेनेदानीं रतान्तावस्थादर्शनेनात्यन्तं कृतार्थोस्मीति सर्व्वं त्वया संपादितमित्यावेद्यते अत एव स्पृष्टापि

पूर्व्वंस्पृष्टापि अस्पृष्टेव ननु वास्तुत्रास्पृष्टेत्यर्थः अत एव किञ्चित् हस्तग्राह्येत्यर्थः अपयान्ती अपसरन्ती स्वल्पापसरणेनापि ज्ञायते स्पर्शावरणमेव कुरुषे लोकभीत्या रथ्यायामपसरणं करोषि नाप्रीत्येत्यावेद्यते हेसुन्दरि सुन्दरिपदेन सम्बोधनं कामाविर्भावबोधपरमतो नपौनरुक्त्यं दोषायेत्याशयः यथा मन्दमपसरसि तथा तथा मम हृदयं स्पृशसि प्रविशशीत्यर्थः एवं च रथ्यायां मयापि हठात्कार आलिङ्गनादौ न कर्त्तव्यः त्वां हृदये निधाय गच्छामि तव यथा मनसि आयाति तथा विधातव्यमिति यद्यपि वीप्सायत्पदे ननु तत्पदेइति प्राचीनाः अत एव यद्यत्यापमितिप्रभाकराः तथापि प्रकृते स्वल्पापसरणेन द्विगुणहृदयप्रवेशकथनाय तत्पदे एव वीप्सा कथिता ननु यत्पदे इति स्पृष्टास्पृष्टेवेत्येवपाठः अस्मत्संप्रदायपुस्तकेष्वतो न पाठान्तरं व्याख्यातमिति व्रतस्थाया मम स्पर्शो न कर्त्तव्य इत्युक्तो नायको विलक्षणालङ्करणवस्त्रशालिनीं नाहं त्वामद्य त्यक्ष्यामीत्युक्त्वा परिग्रहीष्यतो नायकोऽपसरन्तीं नायिकामाह मया स्पृष्ट्वाऽस्पृष्टेव भवसि अन्यत् सुगमर्मामत्यपि केचित् ॥६०५॥

**सखि सुखयत्यवकाशप्राप्तः प्रेयान्यथा तथा न गृही ॥**
**वातादवारितादपि भवति गवाक्षानिलः शीतः ॥६०६॥**

प्रतिवेशिनायकप्रेषिता दूती विद्वेषिणीं नायिकामाह सखीति गृही गृहपतिः तथा न सुखयति सर्व्वदा सुलभत्वात् यथा प्रेरणस्वल्पेप्यकृते जार इत्यर्थः एवञ्च पतिःपित्रादिकारितः जारस्तु भयप्रेमकृत इत्यर्थः हेतुमाह अवकाशेन समयेन कालविशेषेणेति यावत् प्राप्तः मिलित इत्यर्थः अर्थान्तरन्यासेनाह वातात्पवनादवारितात् अनिवारणदेशप्राप्तात् गवाक्षानिलः खड्किकागतः शीतः सुखदो भवतीत्यर्थः एवञ्च भोगमात्रस्य विशेषेण मदनतन्त्रस्यायमेव स्वभावो यत्सर्व्वदा भुज्यते तदपेक्षया दुर्ल्लभस्य न्यूनस्याप्यधिकसुखजनकत्वं किंवक्तव्यं समस्याधिकस्य वेति अत एवास्मिन्नगरे पश्य सर्व्वाः स्त्रियः सर्व्वे पुरुषाश्च एवमेव कुर्व्वन्तीति मया पत्यपेक्षया सर्व्वप्रकारकसौख्यदाता नायक आनीयते तं गृहाणेति उपपतिमानयेति नायिका सखीं वदतीत्यन्ये ॥६०६॥

**सततमरुणितमुखे सखि निगिरन्ती गरलविम गिरां गुम्फम् ॥**
**अवगणितौषधिमन्त्रा भुजङ्गि रक्तं विरञ्जयसि ॥६०७॥**

सर्व्वदा वृथाविरोधमवाचा पत्यादीन् भर्त्सयन्तीं सख्याह सततमिति हेभुजङ्गि सर्पिणीतुल्ये इवार्थस्य गम्यमानत्वात् हेसखि अनेन कथनायोग्यत्वेपि कथ्यते इति व्यज्यते सततमनवरतं कोपेन रक्तमुखि पक्षे स्वभावेन रक्तवदने इत्यर्थः गिरां वाचां गुम्फं ग्रथनं समूहमिति यावत् निगिरन्ती उद्गिरन्तीत्यर्थः निशब्दस्य निरर्थकत्वाद्विरोधिलक्षणया प्रकृत एव वा तथार्थकत्वादित्याशयः गरलमिव विषमिव पक्षे विषमेव इवार्थस्यापि एवकारार्थत्वान्न गणितो मन्त्ररूपो विचाररूप औषधिर्य्यया सेत्यर्थः पक्षे न गणितौ औषधिमन्त्रौ यया सेत्यर्थः रक्तं प्रीतं विरञ्जयसि विरक्तं कुरुषे इत्यर्थः पक्षे रक्तं शोणितं वरञ्जयसि रक्तरूपहीनं करोषि सर्पदष्टस्य शोणितं जलसदृशं भवतीति एवञ्च भुजङ्गीरूपायास्तव समीपेपि न स्थास्यति कोपि प्रीतेः का वार्त्तेति सौम्यतयैव स्थेयमित्याशयः ॥६०७॥

## स्थलकमलमुग्धवपुषा सातङ्काङ्कस्थितैकचरणेन ॥
## आश्वासयति विसिन्याः कूले विसकण्टिका शफरम् ॥६०८॥

धनजीवनादिसर्व्वग्राहिकेयमस्यां कथमपि विश्वासो न कर्त्तव्य इति धनिकपुत्रं स्त्रीचरित्रानभिज्ञं प्रथमारब्धप्रेमाणं चतुरा दूती वदति स्थलकमलेति भूमिपद्मसदृशी एवञ्च विलक्षणस्वरूपा भङ्गुरः चरणो यस्याः भूमौ चरणेन स्थिता सरस्तीरे स्थिता बलाका निश्चला शफरं प्रोष्ठीनामानं मत्स्यं विश्वासयति एकनालकमलभ्रान्त्या समीपागतं तं भोक्ष्ये इत्याशयः एवञ्च तव प्राणानियं ग्रहिष्यतीति कथमपि त्वया नागन्तव्यमिति ॥६०८॥

## सनखपदमधिकगौरं नाभीमूलं निरंशुकं कृत्वा ॥
## अनया सेवित पवन त्वं किं कृतमलयभृगुपातः ॥६०९॥

काञ्चिदवलोक्यास्याः प्राप्तिः कथं भविष्यतीति चिन्तापरमुद्दिश्याह सनखेति अनया नायिकया सेवित पवन पवित्र खलु निश्चयेन मलयनामकपर्व्वतपतनरूपं तपः त्वयैव कृतं नानयेत्यर्थः मलयपदेन पुण्याधिक्यं चन्दनसमायातशैत्यकारकत्वञ्च व्यज्यते अत एवानया सेवा तव क्रियते ननु त्वयास्याः सनखक्षतमधिकगौरं नाभीमूलं विवस्त्रं कृत्वाऽनयासेवितेत्यन्वयः एवञ्च मलयभृगुपातपुण्ये ममाप्येवं

स्यान्नान्यथेत्याशयः वस्तुतस्तु अत्यन्तरतश्रान्ता वाय्वभिमुखं विवस्त्रा भूत्वा तिष्ठेति कथितां नायकाज्ञया नायकसमक्षे तथाचरन्तीं नायिकां नायकः परिहसति कृतपुण्यः पवन एव तव प्रेयानितितत्त्वम् ॥६०९॥

**सर्वाङ्गमर्प्पयन्ती लीला सुप्तं श्रमेण शय्यायाम् ॥**
**अलसमपि भाग्यवन्तं भजते पुरुषायितेव श्रीः ॥६१०॥**

भाग्यवतां यत्नशून्यानामपि लक्ष्मीरप्रयासेनागत्य स्थिरा भवति तद्रहितानां न भवतीति कश्चित्कञ्चिदाह सर्व्वाङ्गमिति श्रमेण हेतुभूतेन श्रमभयादिति यावत् शय्यायां सुप्तम् अलसमप्युद्योगरहितमपि भाग्यवन्तमदृष्टशालिनं जनं श्रीः सम्पत् भजते सेवते सर्व्वाणि भोगाङ्गानि गजादीनि अर्प्पयन्ती ददती लीलानाम्नी च पुरुषायितेव सर्व्वाणि शरीराणि नायके ददती व्यापारलीला रतश्रमेण शय्या-सुप्तं व्यापारमात्रहीनं भाग्यवन्तं नायकं यथा नायिका विपरीते भजते तथेत्यर्थः तथाचैतादृशभाग्यशालिनं भगवन्तमिव श्रीः सम्पत्तिर्भजते न भाग्यहीनमपीति किमुद्योगश्रमजालेनेति ॥६१०॥

**सुदिनं तदेव यत्र स्मारं स्मारं वियोगदुःखानि ॥**
**आलिङ्गति सा गाढं पुनःपुनर्य्यामिनिप्रथमे ॥६११॥**

विदेशस्थ आह मनसा सुदिनमिति तदेव सुदिनं न पुनर्लक्षलाभकारकमपीद-मित्याशयः तेन लक्षोपेक्षाभवत्वाऽधुनैव गन्तव्यमित्यावेद्यते यत्र यामिनीप्रथमे यामि-नीतः प्रथमे दिवसचतुर्थप्रहरे इत्यर्थः यामिनीप्रथमप्रहरे वा सामद्वियोगेनातिकृशा मलिना चेत्यर्थः वारंवारमालिङ्गति भविष्यताप्यालिङ्गनस्यानवरतबुद्धिधारापरिक-लितत्वेन वर्त्तमानत्वं गाढं निपीडनं यथा स्यात्तथेत्यर्थः एवञ्च सकललोकलज्जां कालापेक्षितत्वञ्च विहाय दर्शनमात्रेणैव सर्व्वं करिष्यतीति मानोरथिकमेतद्वियोग-दुःखानि स्मृत्वा स्मृत्वा एवञ्च वियोगदिनसंख्याया द्विगुणं त्वयाऽलिङ्गनमिति-व्यज्यते ॥ ६११ ॥

**सान्तर्भयं भुजिष्या यथा यथा चरति समधिकां सेवाम् ॥**
**साशङ्कसेर्ष्यसभया तथा तथा गेहिनी तस्याः ॥ ६१२ ॥**

कश्चित्काञ्चिदाह सेति भुजिष्या दासी एवञ्च सर्व्वदा सन्निहिता स्वाधीना चेति व्यज्यते सा रूपयौवनवती तस्याः स्वामिन्याः अन्तः भयं यथा भवति तथा यथायथा सेवां गेहिनीपादसंवाहनरूपां समधिकामभिकाधिकां करोति साशङ्का सर्व्वदिनापेक्षयाधिकमेव येमां झटिति स्वापयति मत्पतिभोगार्थमित्याशङ्कायुक्ता अत एव सेर्ष्या समत्सरा सभया अहो मम पत्युः सकललोकाधिकस्य सर्व्वथा दुर्य्यशो भावीतिधियेत्याशयः तथातथा गेहिनी भवतीत्यर्थः तस्यामिति पाठे भुजिष्यायां तथाभवतीत्यन्वयः एवञ्च परयुवतीसान्निध्यं सर्व्वस्य लाघवकरमेवेत्याशयः॥ ६१२॥

सुन्दरि दर्शयति यथा भवद्विपक्षस्य तत्सखी कान्तिम्॥
पतति तथा मम दृष्टिस्त्वदेकदासस्य सासूया॥ ६१३॥

नायको गृहिणीं वक्ति सुन्दरीति तस्यास्त्वत्सपत्न्याःसखी एवञ्च तस्या मम विश्वासो नेतिगम्यते भवद्विपक्षस्य कनिष्ठायाः सपत्न्या इत्यर्थः कान्तिं यौवनारम्भकान्तिं दर्शयति मत्समक्षं भवतीं दर्शयति एवञ्च सपत्नीयौवनारम्भे तव किं भविष्यतीति धियेत्याशयः हेसुन्दरि एवञ्चेदानीं यादृशं रूपं तव यौवनारम्भेपि तव सपत्न्या न तादृशमित्यावेद्यते त्वदेकदासस्य मम तथा तत्कथनेपि न सानुरागा अत एव सद्वेषा दृष्टिस्तत्सख्यां सपत्न्याञ्च पतति नतु गच्छतीत्यर्थः एवञ्च सपत्न्यपेक्षया सदा सुन्दरी त्वं सर्व्वदाहं दासोस्मीति न कदापि मानभङ्गशङ्का सखीकथनेन कर्त्तव्या॥ ६१३॥

स्वाधीनैरधरव्रणनखांकपत्रावलोपदिनशयनैः॥
सुभगा सुभगेत्यनया सखि निखिला मुखरिता पल्ली॥६१४॥

सपत्नीसौभाग्यभीत्या नायके उदासीनां नायिकां सखी वदति स्वाधीनैरिति स्वाधीनैः स्वयमन्यैर्व्वा कर्त्तुं कारयितुं वा शक्यैः अधरक्षतनखचिह्नचित्रलोपदिनाशनदिवाशयनैरित्यर्थः हेसखि अनया दुष्टसखीशिक्षितया इयं सुभगेतिप्रकारेण सर्व्वा पल्ली मुखरिता शब्दायमाना कृतेत्यर्थः पल्लीपदेन यथार्थवृत्तान्तानभिज्ञत्वं व्यज्यते एवञ्च मया तत्वतो ज्ञानं धीरामात्रप्रीतेन तव प्रियेणाति-

चपलस्वभावायास्तव सपत्न्याः स्पर्शोऽपि न क्रियते तवौदासीन्यमानादिद्वारेण पतिविरोधसम्पादनार्थं दुष्टसखीकथनेनैतत्सर्व्वं स्वयमेव कृतमतः त्वया मानादिकं त्यक्त्वा सावधानया सर्व्वदा पत्यनुरञ्जनमेव कर्त्तव्यं नान्यदित्याशयः ॥ ६१४ ॥

सरित इव यस्य गेहे शुष्यंति विशालगोत्रजा नार्य्यः ॥
क्षारास्वेव स तृप्यति जलनिधिलहरीषु जलद इव ॥ ६१५ ॥

काचित्काञ्चिद्वक्ति सरित इति यस्य गेहे भवने पक्षे पर्व्वते नार्यः विशालगोत्रजाः समीचीनवंशजाः पक्षे महापर्व्वतजाः नार्य्यःविवाहितास्सुन्दर्यो नार्य्यः सरित इव शुष्यन्ति पतिसङ्गमाभावेन दुःखमनुभवन्ति पक्षे जलशून्या भवन्ति स नायकाधमः क्षारासु नीरसासु पक्षे लवणमयीषु जलद इव तृप्यति शृङ्गारसुखमनुभवति पक्षे जलजिघृक्षाशून्यो भवति ॥ ६१५ ॥

सकलकटकैकमण्डनि कठिनीभूताशये शिखरदन्ति ॥
गिरिभुव इव तव मन्ये मनःशिला समभवच्चण्डि ॥६१६॥

महताग्रहेणापि मानमत्यजन्तीं नायकसखी वदति सकलेति सकलानां कटकानां बाहुलङ्करणानां मण्डनशीले इत्यर्थः पक्षे सकलाद्रिनितम्बमण्डनकारिणीत्यर्थः कठिनीभूतः प्रणामेनाप्यद्रवीभूत आशयः अन्तःकरणं यस्यास्तत्संबोधनं पक्षे कठिनीभूत आशयः शरीरं यस्याः शिखरदण्डिपद्मरागतुल्या दन्ता यस्याः पक्षे शिखरं शृङ्गं दन्ता इतिभाषया प्रसिद्धं तद्द्वययुक्ते इत्यर्थः गिरिपृथिव्याः यथा मनः शिला धातुविशेषस्समभवत्तथा हे चण्डि कोपने तव मनः मानसं शिला निर्द्दयं समभवद्भूत् एवञ्च दृशप्रातिशालिनी नायके एतादृशकोपकरणं सर्व्वथानुचितमिति ॥ ६१६ ॥

सखि दुरवगाहगहनो विदधानो विप्रियं प्रियजनेपि ॥
खल इव दुर्ल्लक्ष्यस्तव विनयमुखोपस्थितः कोपः ॥ ६१७ ॥

सरलस्वभावे सर्व्वदानुगते नायके कौटिल्येन कोपकरणमत्यन्तमनुचितमिति नायिकां सखी वदति सखीति तव कोपः क्रोधः नायके विनयो मुखमारम्भो

यस्यैवंप्रकारेणोपस्थितः उपस्थापित इत्यर्थः एवञ्च पूर्व्वापेक्षया द्विगुणविनयाह्लादेन कथञ्चिद्व्यञ्जितः नतु साक्षाद्वक्तुं शक्य इत्यर्थः यद्वा विनयमुखस्य मानापनोदनार्थं प्रणतिप्रवणस्योपस्थितः उपरि स्थापित इत्यर्थः पक्षे विनयो मुखे यस्यैवमुपस्थितः प्राप्तः अत्यन्तकोपकरणेपि विनयपुरस्सरमेव यातीत्यर्थः दुर्लक्षः दुःखेन लक्षितो भवति अलक्ष्यकारणकः पक्षे खलत्वेनाज्ञातः हे सखि दुरवगाह गहनः दुरवगाहत्वेन तत्वतः कारणापरिज्ञानेन गहनः कठिनः पक्षे दुःखज्ञेयतया कठिनस्सर्व्वैरपि ज्ञातुमशक्य इत्यर्थः प्रियेपि सदाप्रियकारिण्यपि जने विप्रियमत्यन्तकौटिल्ययुक्तमानादिकमित्यर्थः विदधानः कुर्व्वाण इत्यर्थः पक्षे प्रियेपि पुत्रकलत्रादावपि जने विप्रियं निष्कारणानिष्टरूपं कुर्व्वाण इत्यर्थः तथाच तव कोपः खल इव प्रियस्याप्यप्रियकारीतिसर्व्वथा नोचितमिति ॥ ६१७ ॥

**स्वेदसचेलस्नाता सप्तपदीसप्तमण्डलीर्य्यान्ती ॥**
**समदनदहनविकारा मनोहरा व्रीडिता नमति ॥६१८॥**

कौमारहरं कञ्चन कश्चिदाह स्वेदेति स्वेदेन घर्म्मवारिणा सवस्त्रा स्नाता सचेलपदेनात्यन्तस्वेदप्रवाहसूचकेन बहुकारणकत्वं स्वेदे व्यज्यते तेनापि सम्बोध्य प्रयोज्यत्वं सूच्यते अत एवाग्रे व्रीडया नमनं त्वत्प्रयोज्यमेवेति त्वत्सङ्गतैव पुनर्भवितेति व्यज्यते सप्तपदी सप्तमण्डलीः यान्ती मदनानलविकारसहिता मनोहारिणी चेत्यर्थः वृथाय विवाहः अत्यन्तरैरिति लज्जया नम्रेत्याशयः अत्यन्तसौन्दर्य्यशालिनीं समुचितेन पत्या सङ्गतां विवाहसमये पश्यन् तत्स्वरूपं सखायं प्रति कश्चित्सखा वदति आवयोरेवमेव स्यादितिमनोरथ इतितत्वम् ॥६१८॥

**स्वरसप्रवर्त्तमानः संघातोयं समानवृत्तानाम् ॥**
**एत्यैव भिन्नवृत्तैर्भङ्गुरितः काव्यसर्ग इव ॥ ६१९ ॥**

अनेकसद्वृत्तकृतापि समुदायोऽनेकदुर्ज्जनैर्म्मिलितैर्भग्नो भवत्येवेति विचार्य्य बलवतापि दुर्ज्जनभीतिरवश्यं निवार्य्येति कश्चित्कञ्चिदाह स्वरसेति स्वस्य रसेनेच्छया प्रवर्त्तमानः कृतप्रारम्भः पक्षे स्वीयो रसः शृङ्गारादिस्तेनारब्धइत्यर्थः एकोपक्रमकरसेन काव्यसर्गबन्ध इति संप्रदायः अयं समुदायः

समानमेकजातीयं वृत्तं चरितं येषां तेषां संघात इत्यर्थः पक्षे एकछन्दसाम् एत्यैव भिन्नवृत्तैरनेकाचरणैः स्वमध्येपि भिन्नवृत्तैरित्यर्थः पक्षे भिन्नछन्दोभिरित्यर्थः भंगुरितः परस्परकौटिल्येन भेदितः पक्षे समापितः काव्यस्य सर्ग इव यथा शतश्लोकमयः काव्यसर्ग एकेन छन्दोन्तरनिबद्धश्लोकेन भुज्यते एवमेव सद्वृत्त-समुदायेन कृतोपि समुदाय एकेनापि दुर्ज्जनेनाहर्त्तुं शक्य इति ततस्संरक्षण-मावश्यकमिति व्यज्यते ॥ ६१६ ॥

**सर्व्वासामेव सखे पय इव सुरतं नवं मनोहारि ॥**
**तस्या एव पुनः पुनरावृत्तौ दुग्धमिव मधुरम् ॥६२०॥**

कश्चित्सखायं वक्ति सर्व्वासामिति सर्व्वासां स्त्रीणां सखे एवञ्च सत्यकथनं व्यज्यते सुरतं पय इव जलमिवेत्यर्थः कीदृशं नवमेव प्रथमप्रवृत्तमेव मनोहारि तापहरणद्वारेत्यर्थः एवञ्च स्त्रीमात्ररतं मदनपीडामात्रहारकमिति तदुक्तं सत्यमेवेति व्यज्यते तस्याः बहुधा भुक्ताया अपि वारंवारावृत्तौ दुग्धमिव मधुरं मिष्टमित्यर्थः आवृत्तिपदेन यथा दुग्धस्यावृत्तिभेदेन क्रमेणोत्तरोत्तरं रसाधिक्यं तथास्याः सुरतेन मदनपीडाहारित्वरूपसमानधर्म्मवत्वेप्युत्तरोत्तरमाधुर्य्येण मम मनः तस्यामासक्तं नान्यत्रेति यत्तु पयः पदं दुग्धपदञ्च द्वयमपि दुग्धवाचकमेवेति व्याख्यानं तन्नवपदालोचनेन नीरसमिवाभाति ॥ ६२० ॥

**स्वप्नेपि यान्न मुञ्चसि यातेनुऽग्राहिणी हृदिस्थापि ॥**
**दुष्टान्न बुद्धिमिव तां गूढव्यभिचारिणीं वेत्सि ॥६२१॥**

त्वमसतीति व्यञ्जयन्तं कञ्चन सद्वृत्ताह स्वप्नेपीति स्वप्नेपि निद्रायामपि यां प्रियात्वेनाभिमतां न मुञ्चसि न त्यजसि स्वप्नेपि तामेव पश्यसि अपिना जागरण-समुच्चयः पक्षे स्वप्नकालेपि बुद्धिसम्बन्धसत्वान्न त्यागः या ते अनुग्रहकर्त्री प्रभु-रूपेत्यर्थः एवञ्च तस्या दास एव न पतिरित्यर्थः अनु पश्चात् ग्राहिणी प्रहरणकर्त्री परपुरुषग्रहणोत्तरमेव तव ग्रहणं करोतीत्यर्थस्तु व्यभिचारिणीपदपौनरुक्त्या त्यक्तः हृदिस्थापि दिवानिशं हृदयस्थापितापि पातिव्रत्यरक्षार्थमित्याशयः पक्षे बुद्धेः हृद-यमेव स्थानमित्यर्थः दुष्टामस्मद्दोषकथनपरां स्त्रीमात्रदोषकथनशीलां वा हेमूढ

सर्व्ववेद्यार्थानभिज्ञ एवञ्च कथनानर्हत्वं व्यज्यते व्यभिचारिणीं तव समक्षमपि बहुपरपुरुषगामिनीं पक्षे भ्रमजनकत्वेन विसंवादिनीं न वेत्सि नैव जानासि कथमन्यथा कुलटोपहासायोग्योऽपि सतीमप्युपहससीत्यर्थः तथाच मूढातिमूढेन त्वया सम्भाषणमप्यनुचितमित्याशयः अत्यन्तचपलां सतीत्वेन जानन्तमाहेति वा अतिदुष्टसपत्नीमात्ररतं नायकं सद्वृत्ता द्वितीया पत्नी तत्सखी वाहेत्यन्ये ॥६२१॥

**सपरावृत्ति चलन्ती वात्येव तृणं ममोऽनवद्याङ्गि ॥**
**हरसि क्षिपसि तरलयसि भ्रमयसि तोलयसि पातयसि ॥६२२॥**

पश्चादागच्छन्तं नायकं ग्रीवाभङ्गेन सस्पृहं वारं वारं पश्यन्तीं नायिकां नायक आह सपरेति सपरावृत्ति परावृत्या ग्रीवाभङ्गेन सहितं यथा भवति तथा पुरो गच्छन्तीत्यर्थः एवञ्च स्नेहवत्त्वं दुर्ज्जनभयञ्च व्यज्यते हेदोषशून्यशरीरे एवञ्च पूर्वापरिचयेपि त्यक्तुमशक्यत्वं द्योत्यते एवमेव यदन्तःकरणमपि तव तदा कृतार्थोस्मीतिभावः मदीयं मनः समभिव्याहारादस्मदनुपादानेपि प्रतीयमानत्वात् यद्वाऽधुना तवैव न ममेतिद्योतनायानुपादानं हरसि अपहरसि चोरयसीतियावत् तरलयसि चञ्चलं करोषीत्यर्थः रहस्यधीनं कृत्वा गच्छतीत्यर्थः भ्रमयसि भ्रमवत् करोषि गमने मम फलं नास्तीतिधियेत्यर्थः तोलयसि उन्नतं करोषि सह नयति फलं भविष्यतीत्याशयेनेत्यर्थः ग्रामसमीपगमनेन फलं यदि स्यात्तदात्रैवेति पातयसि निराशं करोषीत्यर्थः तृणं वात्या यथा करोति मण्डलीकरणेन चलन्ती संचरन्ती हरति स्वाधीनं करोति लघुत्वेन चपलं करोति वहति नयति भ्रमणशीलं करोति तोलयत्याकाशं नयति भूमौ निपातयति च एवञ्च मम चित्तं तवाधीनं भूत्वाऽधुना निराशमिव भूत्वा पतितं तव मनसि यथा कृपा भवति तथाविधातव्यमित्याशयः ॥६२२॥

**सा बहुलक्षणभावा स्त्रीमात्रं वेति कितव तव तुल्यम् ॥**
**कोटिर्व्वराटिका वा द्यूतविधेस्सर्व्व एव पणः ॥६२३॥**

नायकं नायिकासखी वदति सेति सा सर्व्वनायिकाधिका मम सखी बहुलक्षणगुणा बहुसंख्यकशास्त्रलोकगणितस्त्रीगुणशालिनी सर्व्वगुणोपेतेत्यर्थः वा

कोटौ स्त्रीमात्रं वा मात्रपदं सकलस्त्रीगुणशून्यत्वं कथयति एवञ्च मम सखी सर्व्वोत्तमा यस्यामासक्तस्त्वं सा सर्व्वाधमा तथापि तव लज्जाविवेकादिलेश एव नास्ति किंवक्तव्यमित्याशयः धूर्त्तस्य तव सर्व्वं तुल्यमित्यर्थः कितवपदं स्वभावादनुचितकर्तृत्वं व्यनक्ति कोटिर्व्वा कोटिसंख्यकानि रत्नानि वा कपर्द्दिका वा द्यूतनिधेरवश्यकर्त्तव्यद्यूतविधानस्य सर्व्वे यथा पणाः द्यूतसम्पादकास्तथेत्यर्थः मम सखीजन्मैव त्वया पत्या वृथा जातमित्याशयः ॥६२३॥

**सा विरहदहनदूना मृत्वा मृत्वापि जीवति वराकी ॥**
**शारीव कितव भवतानुकूलिता पातिताक्षेण ॥६२४॥**

नायिकादूती नायकमाह सेति सा सरला मम सखी वराकी प्रकारान्तररहितेत्यर्थः तव वियोगदाहोपतप्ता मरणावस्थापन्नापि पुरः पुनस्त्वद्दर्शनायैव जीवति नान्यथेत्यर्थः भवताऽनुकूलिता प्रेमविषयतामानीतेत्यर्थः पातितमक्षं कटाक्षरूपं येन तावतैवानुकूलेत्यर्थः भवतेत्येकवचनेन प्राथम्यसूचकेन दुःखातिशयो व्यज्यते तेन तव वधभागित्वमित्यादि व्यज्यते अत एव कितव वञ्चक पातितपाशकेन शारीव चतुष्पटीवटिका यथैकाकिनी मृत्वा मृत्वा कोष्ठवहिर्न्निष्काशिता भूत्वा भूत्वा जीवति कोष्ठमाप्नोतीत्यर्थः एवञ्च शीघ्रं गत्वा तामनुगृहाणेत्यावेद्यते ॥ ६२४ ॥

**स्पर्शादेव स्वेदं जनयति न च मे ददाति निद्रातुम् ॥**
**प्रिय इव जघनांशुकमपि न निदाघः क्षणमपि क्षमते ॥६२५॥**

घोरग्रीष्मसमये कथं प्रियमभिसरसीति वादिनीं सखीं नायिकाह स्पर्शादिति निदाघः ग्रीष्मकालः प्रियः प्रियतम इव निद्रातुं क्षणमपि न ददातीत्यन्वयः जघनांशुकमपि जघनमात्रस्थितवस्त्रमपि अपिनाऽलङ्करणान्यङ्गवसनादीनां का वार्त्तेति व्यज्यते न क्षमते न सहते इत्यर्थः च पुनरित्यर्थः स्पर्शादेव स्पर्शोपक्रम एव स्वेदं घर्म्मजलं जनयति स्वभावेन विकारेण वेत्यर्थः तथाच ग्रीष्मदुःखमत्र तत्र वा यद्यपि सममेव तथापि तत्र रतकृतेन महानन्देन किञ्चिदपि दुःखं न ज्ञायते इत्यवश्यमेव गन्तव्यमित्याशयः यद्वा प्रियतुल्यो भूत्वा ग्रीष्मः सन्निधिस्थो

व्यभिचारमिव कर्त्तुमुद्यत इत्यवश्यं प्रियसन्निधावेव स्वरक्षणार्थं स्थातव्यमिति ॥ ६२५ ॥

**सा भवतो भावनया समयविरुद्धं मनोभवं बाला ॥**
**नूतनलतेव सुन्दर दोहदशक्त्या फलं वहति ॥ ६२६ ॥**

स्वरूपदर्शनसस्पृहमपि बाल्यदोषेण न योग्येयमित्युदासीनं नायकं दूती वदति सेति सा बहुधाङ्क्षस्यापिताऽपि बाल्यदोषोपेक्षितेत्यर्थः फलं फलमिव स्तनद्वयमित्यर्थः पक्षे यथा श्रुतमेव बालाल्पवयस्का अनेन फलायोग्यत्वं कथ्यते समयविरुद्धं बाल्यसमयेऽनुचितं वहति धारयतीत्यर्थः मनोभवं हृदयदेशोत्पन्नं हेसुन्दर तथाच तव दर्शनेन बालिकाया अपि विकारः किमु प्रौढ़ाया इति व्यज्यते कथं स्तनद्वयं जातमकाले तत्राह भवतोऽतिसुन्दरस्य भावनया सदाचिन्तनेनेत्यर्थः एवञ्च नवीनलताया दोहदेन फलपुष्पजनकौषधेन यथा फलमकालेपि भवति तथा तवानवरतभावनयेदमपि जातमित्यर्थः तथाचौदासीन्यं त्यक्त्वाऽधुनैव चलनीयं प्रथमोपभोगसौख्यानुभवः कर्त्तव्य इत्याशयः यद्वा बालिकाया उपायेन भोगसामर्थ्यकारिणी दूती नायकमाह भवतो बालिकाविषयकभावनयास्यामवस्थायां रतिं कथं करिष्ये इति चिन्तनया मयैवोपायेन बालिका भोगयोग्या कृता चलनीयमवश्यमिति ॥ ६२६ ॥

**स्पृशति नखैर्न्न च विलिखति सिचयं गृह्णाति न च विमोचयति॥**
**न च मुञ्चति न च मदयति नयति निशां सा न निद्राति ॥६२७॥**

सखीं सखी वक्ति स्पृशतीति स्पृशति नखैः स्तनमण्डलमलंकामाविर्भावात न च विलिखति क्षतं न ददातीत्यर्थः लज्जयेत्याशयः सिचयं वस्त्रं गृह्णाति मदनविकारेण न च विमोचयति लज्जया न च मुञ्चति न त्यजति मदनेन च मदयति संभोगेन मत्तां न करोतीत्यर्थः लज्जया निशां रात्रिं जागरणेन नयति न निद्रां करोतीत्यर्थः कामाविर्भावात् यद्वा नायकस्सखायमाह निशां नयति न निद्राति कामलज्जयोः समानत्वादितिभावः स्पृशति मदङ्गं न विलिखति न क्षतं करोतीत्यर्थः मया गृहीतं मुक्तं वस्त्रं लज्जया गृह्णाति मम हस्तं न विमोचयति

मां न मुञ्चति न त्यजति बहिर्न्न गच्छतीत्यर्थः न च मदयति रत्यङ्गीकारं न करोतीत्यर्थः एवञ्चात्यन्तगुरुसान्निध्येन मया किमपि कर्त्तुं न शक्यते इति ॥ ६२७ ॥

**स्तनजघनमुच्चमस्यालङ्घितमध्यः सखे मम कटाक्षः ॥**
**नोज्झति रोधस्वत्यास्तटद्वयं तीर्थकाक इव ॥ ६२८ ॥**

अतिपुष्टशरीरशालिनीयमस्याःचिररतकरणेनातिश्रान्ततया तव वारंवारं श्रमजनितं दुःखमेव जायते इति तां त्यजेति वादिनं सखायं सखा वदति स्तनेति सखे !अनेन यथार्थं वच्मीत्यावेद्यते मम कटाक्षः अस्याः स्तनजघनद्वयमेवोच्चमुच्चतरं नोज्झति न त्यजति तत्रैव दर्शनसौख्येन निमग्नस्तिष्ठतीत्यर्थः स्तनजघनगुप्तत्वेन लङ्घितः मध्यः मध्यप्रदेशः कटिर्येन सः पक्षे मध्यमः प्रवाहः मध्यदेशावलोकनमपि नास्ति कचरतिश्रमशङ्कापीत्यावेद्यते तीर्थकाको रोधस्वत्या अत्युच्चकूलद्वयशालिन्या नद्यास्तटद्वयं यथा न मुञ्चति अन्यत एव भोज्यमानीय प्रवाहलङ्घनकर्त्ता प्रवाहसम्बन्धं विनैव तत्र तिष्ठति तथेत्यर्थः एवञ्च काकस्य प्रवाहनिकटे स्थानाभावेन सर्व्वदा रोधस्येव स्थितिः प्रवाहसम्बन्धो नास्ति एवमेव ममापि रतसम्बन्धमात्रं नत्वधिकं रतमिति तत्त्यागो शक्य इति त्यक्तुमाग्रहो न कर्त्तव्य इति वाक्यार्थः सम्पद्यत इति ॥ ६२८ ॥

**सव्रीडस्मितमन्दश्वसितं मा मा स्पृशेति शंसत्या ॥**
**आकोपमेत्य वातायनम्पिधाय स्थितम्प्रियया ॥ ६२९ ॥**

नायकः सखायं वक्ति सव्रीडेति आईषत्कामाविर्भावादल्पता पूर्व्वमानवत्वात्सखी सान्निध्याच्च कोपः एत्य लब्ध्वा सखीमध्य एव किमागतोसीत्यर्थः वातायनं गवाक्षं पिधायाच्छाद्य परानवलोकनायेत्याशयः प्रियया नतु मानिन्या स्थितं रत्यङ्गीकारात् मा मा स्पृशेतिकथनमात्रपरया न तु तथा तात्पर्य्यं सव्रीडंसलज्जं सखीसान्निध्यात् यत् स्मितं तत्सहितं मन्दश्वसितं यथा भवति एवञ्च कामाविर्भावस्सूच्यते एतादृशी नान्या सुखदात्रीति मम भाग्यमतीवेति व्यज्यते ॥६२९॥

**सकचग्रहं सरुदितं साक्षेपं सनखमुष्टि सजिगीषम् ॥**
**तस्याः सुरतं सुरतं प्राजापत्यः क्रतुरतोऽन्यः ॥ ६३० ॥**

बहुपत्नीकस्त्वं कथमस्यामेकस्यां सक्तस्तिष्ठसीति वादिनं सखायं सखा वदति सकचेति तस्या एव सुरतं सुरतं सर्वासां सुरतापेक्षया सद्यः सौख्यजनकमिति पुनरुक्तेन द्वितीयसुरतपदेन कथ्यते हि यतः अन्यः अन्यपत्नीसंभोगः प्राजापत्यः प्रजापतिकृतनियोगाधीनः ऋतौ स्त्रियमुपयायादिति नियोगाधीनः इतियावत् एवञ्च नित्यकर्म्मवत् फलाभावेपि पापपरिहारार्थं कर्त्तव्यमेवेति व्यज्यते भवतु वा विधूतपापास्ते यान्तीतिन्यायेन नित्यमपि फलदं तथापि क्रतुः क्रतुतुल्यः कालान्तरभाविपुत्रफलक इत्यर्थः न सद्यस्सौख्यजनक इत्यर्थः एवञ्च यावता पापपरिहारः पुत्रफलञ्च भवति तावत्सर्व्वाहेवैव क्रियते सद्यस्सकलसंभोगसुखार्थं बहुधा इयमेव सेव्यते इति नात्र निषेधो युक्त इत्याशयः सर्व्वरतवैलक्षण्यमेवाह प्रियस्य मम कचग्रहसहितं निषेधार्थम् अनिवृत्ते मयि रोदनसहितमनेनातिमृदुत्वेनाल्पसुरतस्वीकारमात्रं व्यज्यते अथ सम्यक्प्रवृत्ते मयि साक्षेपं मनुष्यरीतिः कर्त्तव्या राक्षसरीतिः केयमित्यापेक्षसहितमित्यर्थः उभयोस्तुल्यकामाविर्भावे सनखमुष्टि मद्दत्तनखक्षतमुष्टिप्रहारसहितं यथा यथेत्यर्थः यद्वा नायिकाया उन्मादारम्भे नायिकाकृतनखमुष्टिप्रहारसहितं यथा तथेत्यर्थः अथच सामरस्ये संवृत्ते सविजिगीषं जयेच्छासहितं यावत्सामर्थ्यानुज्ञातमित्यर्थः ॥ ६३० ॥

**सखि न खलु निर्म्मलानां विदधत्यभिधानमपि मुखे मलिनाः ॥**
**केनाश्रावि पिकानां कुहूं विहायेतरश्शब्दः ॥६३१॥**

दुष्टनिन्दाखिन्नां सखीं सख्याह सखीति हेसखि मलिनाः पापिनः पक्षे श्यामाः सुनिर्म्मलानां निर्द्दोषाणां पक्षे श्वेतानां मुखे कथारम्भे पक्षे अभिधानं कथनं नामपक्षे शब्दं न विदधति न कुर्व्वन्ति पक्षे न स्थापयन्तीत्यर्थः अमुमर्थं दृष्टान्तेनाह कुहूंकुहूशब्दं विहाय त्यक्त्वा इतरः मलिनभिन्नवाचकः शब्दः केनाश्रावि पिकानां न केनापीत्यर्थः तथाच दुष्टमुखे सत्कथा नैव श्रूयते तदुक्तासत्कथाश्रवणेन दुःखं न कर्त्तव्यमिति सत्कर्ममात्राचरणेपि दुष्टेन निन्दा कर्त्तव्यैव अतः परपुरुषसङ्गतिसौख्यं किं त्यजसीति सखीं सख्याहेति वदन्ति इतिकश्चित् ॥ ६३१ ॥

**स्वल्पा इव रामबलैर्य्येन्यस्ता नाशये पयोराशेः ॥**
**ते शैलाः स्थितिमन्तो हन्त लघिम्नैव बहुमानः ॥६३२॥**

सौन्दर्य्याभिमानेन काश्चिदल्परूपां सतीमुपहसन्तीं काचिदन्योक्त्याह स्वल्पेति पयोराशेः समुद्रस्याशये जले ऽमबलैर्व्वानरैः स्वल्पाः अल्पपरिमाणाः कियत्पूरणे समर्था इति हेतोः ये शैलाः पर्व्वता न न्यस्ता न क्षिप्ता इत्यर्थः एवञ्च स्वल्पत्वदोषेण जडे निमग्नास्ते एव शैलाः स्थितिमन्तः अधुना महाप्रमाणाः प्रतिष्ठाशालिन इत्यर्थः हन्त इति खेदे लघिम्नैव लघुपरिमाणतयैव बहुमान इदानीं बहुप्रमाणत्वमित्यर्थः एवञ्च दैवचेष्टितं को जानाति यथाल्पत्वरूपो महानपि दोषः शैलानां गुणाय महत्वरूपो महानपि गुणः शैलानां जडमज्जनदोषाय तथाऽस्या अल्परूपशालित्वं धर्म्मरक्षार्थं तव रूपाधिक्यं सर्व्वदोषाय संवृत्तमिति नोपहास्येयमिति व्यज्यते क्वचिल्लघुत्वेनापि गुरुत्वमीश्वरेच्छया सम्पद्यत इति तात्पर्य्यकमिदमित्यपि केचित् ॥ ६३२ ॥

**सा श्यामा तन्वङ्गी दहता शीतोपचारतीव्रेण ॥**
**विरहेण पाण्डिमानं नीता तुहिनेन दूर्व्वेव ॥६३३॥**

अनया सद्वृत्तयाऽतीवविरहवेदनादुःखं भुज्यते इति कश्चित् कश्चिदाह सेति सा सद्वृत्ता श्यामा शीते उष्णोष्णे शीतेत्यर्थः षोडशहायनीत्यर्थो वा पक्षे श्यामवर्णा तन्वङ्गी अतिकृशाङ्गी पक्षे स्वल्पपत्रा विशेषणेनाधिकवेदनायोग्यत्वं तदसहसामर्थ्यञ्च व्यज्यते विरहेणास्मत्सखिवियोगेन पाण्डिमानं पाण्डुतां नीता प्रापितेत्यर्थः पक्षे श्वैत्यं विरहेण दहता दिवानिशं दाहं कुर्व्वतेत्यर्थः पक्षे दहता दग्धवत्कुर्व्वता तुहिनेन यथैव माघे वृक्षादिकं क्रियते शितोपचारेण कर्प्पूरादिलेपेन तीव्रेणाधिकेनेत्यर्थः पक्षे शीतोपचारः शीतकालप्रचारस्तेनोत्कटेनेत्यर्थः तुहिनेन हिमेन दूर्व्वेव दूर्व्वा श्यामा श्वेता भवति यथा तथेत्यर्थः दूर्व्वापदेन व्यज्यते पवित्रत्वं तेन देवपित्रादियोग्यत्वं व्यज्यते एतेन विदेशस्थः सखा शीघ्रमस्माभिरवश्यमानेय इति व्यज्यते ॥ ६३३ ॥

**सुनिरीक्षितनिश्चलकरवल्लभधाराजलोक्षिता न तथा ॥**
**सोत्कम्पेन मया सखि सिक्ता सा माद्यतिस्म यथा ॥६३४॥**

परपुरुषपराङ्मुखी सा केनोपायेन सङ्गमनीयेति वादितां दूतीं नायक आह

सुनिरीक्षितेति हेसखि बहुमानार्थं दूतीसम्बोधनम् एवञ्च धनदानस्य का कथा मम सखी भवसि सर्व्वं त्वत्कर्त्तव्यमेवेतिभावः कस्मिंश्चिद्दिने होलीसमये वा चर्म्मपुटकादिना मया सिक्ता सा भयेन कम्पशालिना अनेन सेके असमीचीनत्व-मनभिलषितदेशस्थत्वञ्च व्यज्यते यथा माद्यतिस्म यथा सम्मदशालिनी बभूव सुनि-रीक्षितो नायिकया सम्यगृदृष्टः एवञ्च सेकेऽभिप्रेतत्वं कथ्यते निशनकर: अनेन सेके सौष्ठवं कथ्यते बल्लभो न तु पतिः तद्धस्थपतितधाराजलेनोक्षिता सिक्ता धारापदेन सेके बहुकालव्यापित्वं व्यज्यते न तथा माद्यति सेत्यन्वयः एवञ्च तस्मिन्नेदिने तथा ज्ञातं मय्यनुरक्तेयमवश्यं तव श्रमो विफलो न भावीत्याशयः ॥६३४॥

**सखि मोघीकृतमदने पतिव्रते कस्तवादरं कुरुते ॥**
**नाश्रौषीर्भगवानपि स सकामविद्धो हरः पूज्यः ॥६३५॥**

काचिदौपपत्ये सतीं प्रवर्त्तयितुमाह सखीति हेसखि स्वकथनस्य सर्व्वाविरुद्ध-त्वसूचकमिदं मोघीकृतमदने सर्व्वैरमोघीकृतोपि कन्दर्पस्त्वयैव मोघीकृत इति व्यत्ययेन सर्वविरुद्धकरणेनात्यन्तानुचितत्वं व्यज्यते पतिमात्रेण कियत्कामसुखमि-त्यर्थः पतिव्रते पतिमात्रविषयकानुरागवति तवादरं कः कुरुते न कोपीत्यर्थः भगवा-नपि हरोपि कामविरुद्ध एव पूज्यः कामः त्रयोदशी तेन युक्त एव हरश्चतुर्दशी-पूज्य इत्यर्थः एवञ्च हरोपि न केवलः पूज्यः किन्तु कामयुक्त एवेत्यन्येषां का वार्त्तेति ॥६३५॥

**सा मयि न दासबुद्धिर्न्न रतिर्न्नापि त्रपा न विश्वासः ॥**
**हन्त निरीक्ष्य नवोढ़ां मन्ये वयमप्रिया जाताः ॥६३६॥**

नायको गृहिणीं वक्ति सेति हन्त इति खेदे मयि या दासबुद्धिर्म्मदाज्ञामात्रका-रकोयं भवतीति स्थिता तव सा नेत्यर्थः न प्रीतिः नापि त्रपा प्रियोयं भवतीति कृत्वा या लज्जा सापि नेत्यर्थः मदीय एव नान्यस्येति विश्वासोपि नेत्यर्थः नवोढ़ा-म् एवञ्चाधुना रत्यनर्हत्वं कथ्यते निरीक्ष्यैव वयमप्रिया जाता इत्यहं मन्ये एवञ्च त्वया न किमपि कर्त्तव्यं मया पूर्व्वव्यवहारत्यागस्तु नवोढ़ायौवनेपि न कर्त्तव्य इदानीं का शङ्केत्यलमेतैरित्याशयः ॥६३६॥

**सुचिरायाते गृहिणी निशि भुक्ता दिनमुखे विदग्धेयम् ॥**
**धवलनखाङ्कं निजवपुरकुङ्कुमाद्रं न दर्शयति ॥६३७॥**

एतादृशचतुरयैवोपपतिभोगः कर्त्तव्यो नान्ययेति काचित्काञ्चिद्वक्ति सुचि-रेति इयं विदग्धा गृहिणी बहिः साध्वी स्वतन्त्रेदानीमपि जारासक्ता सुचिरा-याते पत्यौ निशि निशायामेव पतिं भुक्त्वा दिनमुखे वपुर्न दर्शयतीत्यर्थः दिनमुखे इत्यनेन दर्शनारम्भकालःकथितस्तेन दिवा न दर्शयतीत्यर्थः धवलनखाङ्कं तद्दिन-दत्तजारनखाङ्कितं यत इत्यर्थः अकुङ्कुमाद्रं कुङ्कुमाद्रंभिन्नं कुङ्कुमाद्द्रमेव दर्श-यतीत्यर्थः एवञ्चानया जारभोग इदानीमपि स्वेच्छया क्रियते पथिश्रान्तस्य बलहा-निकारकदिवाभोगोनुचित इत्युक्त्वा रात्रौ भोगं करोति दिवा कुङ्कुमादिना सर्व्वगो-पनं करोति तथाच त्वमप्येवं यदि करोषि तदौपपत्यं कुरु नान्यथेति ॥६३७॥

**स्तनजघनोरुप्रणयी गाढं लग्नो निवेशितस्नेहः ॥**
**प्रिय कालपरिणतिरियं विरज्यसे यन्नखाङ्क इव ॥६३८॥**

नायकमुदासीनं मत्वा नायिकाह स्तनेति हे प्रिय सदा मम प्रीतिविषय एवञ्च मम न्यूनाधिकभावः कदापि नेति व्यज्यते स्तनयोः जघने ऊर्वोश्च प्रीतिमान् पक्षे एषु स्थानेषु नखक्षतविधानात्तत्सम्बन्धीत्यर्थः गाढं दृढं लग्नः आलिङ्गनायेत्यर्थः पक्षे गाढमत्यर्थं लग्नः निखात इत्यर्थः निवेशितः स्नेहः प्रीतिर्येन स इत्यर्थः पक्षे दत्ततैलः पीडोपशमार्थमितिभावः एतादृशोपि यद्विरज्यसे विरक्तो भवसि मयि पक्षे रुधिरशून्यो भवसि इयं कालपरिणतिः समयपरिपाकदोषोयं न तवेत्यर्थः काल-परिपाकेन नखाङ्कोपि लुप्तो भवतीत्यर्थः तथाचाधमपुरुषाणामयं स्वभावः यत् कालेन दोषं विना विरागो नोत्तमानामिति ॥६३८॥

**सा विच्छाया निशि निशि सुतनुर्बहुतुहिनशीतले तल्पे ॥**
**ज्वलति त्वदीयविरहादोषधिरिव हिमवतः पृष्ठे ॥६३९॥**

नायिकादूती नायकं वदति सति सा त्वदेकशरणा तव वियोगात् विच्छाया विगलितपूर्व्वसौन्दर्य्या सुतनुस्तथापि सुन्दरशरीरा पक्षे विगता छाया यस्याः तेजोमयशरीरस्य छाया न भवतीत्यर्थः सुतनुः शोभनकान्तवती

निशि निशि त्वद्वियोगावधिप्रतिनिशं पक्षे समानं बहुतुहिनेन शीतले तल्पे शय्यायां ज्वलति तापवती भवति पक्षे ज्वालाशालिनी भवति दिव्यौषधिः रात्रौ वह्निवज्ज्वलतीतिलोकसिद्धं हिमवतः तुषारमयस्य अनेन हिमालयस्य पर्य्यङ्कता हिमस्य मृदुशय्यारूपतोच्यते तथाच तवानुग्रहं विना तस्या जीवनमेव दुर्लभमित्यवश्यमिदानीमेव गन्तव्यमिति ॥६३९॥

**सा नीरसे तव हृदि प्रविशति निर्य्याति न लभते स्थैर्य्यम् ॥**
**सुन्दर सरसा दिनकरविम्बे तुहिनांशुलेखेव ॥६४०॥**

तव सखी मयि प्रेम कृत्वापि स्थैर्यं न करोतीतिवादिनं नायकं त्वं विरसोसि तस्मिन् स्थिरं प्रेम मम सखी कथं करोतिवति नायिकासखी वदति सेति हे सुन्दर एवञ्च तव सौन्दर्य्यदर्शनेन सानुरागा सा स्वभावेन रसमयी रत्यपेक्षयापि कटाक्षविक्षेपचुम्बनालिङ्गननानाकामकलाकौशलादिप्रीता पक्षे मृतमयी तव रतिमात्रापेक्षिणी हृदि प्रविशति नीरसे पूर्व्वोक्तशून्ये पक्षे ज्वालामये अत एव निर्य्याति बहिरायातीत्यर्थः अग्रे तत्र तस्याः प्रयोजनमेव नास्तीत्यर्थः अनेनैव दोषेण स्थिरतां न प्राप्नोतीत्यर्थः अस्थिरत्वे तव नीरसत्वमेव कारणं न तु तस्याः दोषइत्याशयः दिनकरस्य सूर्य्यस्य मण्डले तुहिनांशोश्चन्द्रस्य लेखेव कर इवेत्यर्थः यथा चन्द्रलेखा मासं विलम्ब्य सूर्य्यमण्डलेऽमावास्यायां प्रविशति पुनस्तेजोमयत्वेनात्यन्तजलशून्यत्वमाकलय्य बहिरायाति तद्वत् ॥६४०॥

**सुकुमारत्वं कान्तिर्न्नितान्तसरसत्वमान्तराश्च गुणाः ॥**
**किं नाम नेन्दुलेखे शिवग्रहेणैव तव कथितम् ॥६४१॥**

सौकुमार्य्यादिनानागुणाभिव्यञ्जनं कुर्व्वतीं सकलगुणशीलामुपपतिपरिगृहीतामलपां काञ्चित्काचिदन्योक्त्या वदति सुकुमारत्वमिति इन्दुलेखे चन्द्रलेखे षोडशांशरूपे परञ्च राहिण्यादेः षोडशांशरूपत्वेनाल्पासीत्याशयः इन्दुशिवपदाभ्यामेकस्य भूत्वा व्यक्ततया परस्य भूतासि अग्रे किं करिष्यसीति तु न जानामीति व्यज्यते शिवस्य ग्रहेण परिग्रहेण शिरसा धारणेनेति यावत् नाम निश्चयेन किन्न कथितमपितु सर्व्वं सुकुमारत्वादिकं कथितमित्यर्थः सौकुमार्य्यं शिवेन शिरसि

धारणात् कान्तिः भूषणत्वेन धृतत्वात् नितान्तं दृढं रसवत्त्वममृतवत्त्वमान्तराश्च गुणाः अधिकपक्षपातादयः एतत्सर्व्वं शिवपरिग्रहेण सर्व्वैर्ज्ञातं न तु वास्तविकमित्यर्थः एवञ्च सकलगुणशून्या त्वं शिवपरिग्रहेण यत्करोषि तत्कुर्व्विति क्वचित्तु शशग्रहेणैवेतिपाठः तत्र पद्मिन्या नायिकया शशजातीयनायकग्रहणमेव क्रियत इति कामशास्त्रं मूलं समुचितनायकमात्रसम्बन्धेनैव पूर्व्वोक्तास्सर्व्वे गुणास्त्वय्येव योग्या नान्यत्रेत्याशयः स च कलायाःशशसम्बन्धाभावादुपेक्ष्य एव अस्मत्संप्रदाये शिवग्रहेणैवेतिपाठः तत्र शिवपरिग्रहेण सर्व्वदा कल्याणभागित्वेन भाग्यवत्त्वेनेत्याशयः एवञ्च भागशालिन्याः सर्व्वमेव भवतीत्याशयः यद्वा सुकुमारत्वं न कान्तिर्न नितान्तरसवत्त्वं नान्तरा गुणाश्च पुनर्न्नेति नाम निश्चये शिवपरिग्रहेणैव कथितं नान्यैः किमपि तु सर्वैरपि ज्ञायते इत्यर्थः नृकपालसमीपे धारणेन काठिन्यं वह्निशिखोपरिधारणेन कान्तिरसवत्त्वयोरभावं गङ्गारूपसपत्न्या अधःस्थापनेनान्तरगुणसामान्याभावं ज्ञात्वैव शिवेन तत्र स्थापितासि तथाच सगर्व्यत्वमनुचितमित्याशयः यद्वा सुकुमारत्वादयः कथिताः अकथिताश्चान्ये उत्तमस्त्रीगुणाः ते तवैव नान्यासामिति नाम निश्चये शिवपरिग्रहेण किं न कथितमपितु कथितमेवञ्चोपपतिर्य्यदि कर्त्तव्यस्तदेदृश एवेत्याशयः यद्वा यथेन्दुकलया शिवमुपपतिमासाद्य भोगा भुक्तास्तथा त्वमपि भुंक्ष्व तादृश एव नायकराजो मयानीयते इति सखी दूती सखीं वदति वस्तुतस्तु शिवग्रहेण न ते गुणाः किन्तु स्वाभाविका इत्यर्थः तर्हि सख्यादिभिः शिवग्रहेणेति किं कथ्यते इतिप्रश्ने उत्तरं नामेति सम्भवे इन्दुकले इन्दुकलातुल्ये इत्यर्थः शिवस्य शिवतुल्यस्येत्यर्थः तथाचैतादृशस्वाभाविकगुणाधिक्यं विना सकलगुणाधिकनायकस्यावाहनमेव न भवेदिति नायकपरिग्रहेणैव तव गुणा इत्यविदग्धाभिः कथ्यते नत्वस्माभिरिति त्वमेव सकलनायिकावरा त्वत्पतिरेव सकलनायकरत्नमिति सौहृद्येन काञ्चिन्नायिकां समुचितसकलनायकोत्तमस्वाधीनपतिकामौपपत्यदोषरहितां वदतीति मादृशां पन्थाः परकीयापरत्वेपि नक्षतिरित्येके बहुव्याख्यानं विस्तरभयादुपेक्षितम् ॥६४१॥

**सौरभ्यमात्रमनसामास्तां मलयद्रुमेषु न विशेषः ॥**
**धर्म्मार्थिनां तथापि स मृग्यः पूजार्थमश्वत्थः ॥६४२॥**

बहुगुणवतामपि धर्म्मदाता श्रेयानिति कश्चित्कश्चिद्वक्ति सौरभ्येति सौरभ्यं सौगन्ध्यं तत्रैव मनश्चित्तं येषां तेषां सौरभ्यमात्रार्थिनां मलयद्रुमेषु शाखोटाश्वत्थादिषु विशेषो भेदः नास्तां न भवतु सर्व्वेषां सौरभमयत्वादितिभावः धर्म्मार्थिनां धर्ममात्रार्थिनां पूजार्थं तथापि गन्धवत्वेन सदृशत्वेपि मलयस्थः अश्वत्थ एव मृग्यः गवेषणीय इत्यर्थः तथाचास्माकं धर्म्मदातैवमेवेत्याशयः ॥६४२॥

संवाहयति शयानं यथोपवीजयति गृहपतिं गृहिणी ॥
गृहवृतिविवरनिवेशितदृशस्तथाश्वासनं यूनः ॥६४३॥

युवानमासाद्य पत्यौ स्त्रिया किंकिं न क्रियते तस्मात्तस्यां विश्वासो न कर्त्तव्यः केनापीति कश्चित्कश्चिदाह संवाहयतीति पादयोःपीडयति उपवीजयति मन्दव्यजनादिना गृहपतिं स्वामिमात्रं नतु भोक्तारं शयानं निद्राणमपि दृढनिद्रार्थमित्यर्थः गृहिणी स्वाधीनसकलपरिवारा अनेन भृत्यादेः परिज्ञानेपि कथनानर्हत्वं व्यज्यते ,एतत् यथा करोति तथा यूनः जारस्याश्वासनं मत्निकटगमनोद्योगमेव करोतीत्याशयेन गृहवृतिर्गृहवेष्टनं तस्य विवरे छिद्रे निवेशिता दृग् नयनं येन तस्येत्यर्थः ॥ ६४३ ॥

सत्यं स्वल्पगुणेषु स्तब्धा सदृशे पुनर्भुजङ्गे सा ॥
अर्पितकोटिः प्रणमति सुन्दर हरचापयष्टिरिव ॥ ६४४ ॥

इयं सामान्यवनितेवे भाति मदङ्गीकारं कथं न करोतीतिवादिनं नायकं काचिदाह सत्यमिति सामान्यवनिता सा इतिसत्यं हे सुन्दर अनेनोपेक्षणीयत्वाभावः कथ्यते स्वल्पगुणेषु सर्व्वथातृप्तिकारकसुरतकर्तृत्वातिरिक्तगुणेषु अल्पधनादिवसमेवेत्यर्थः पक्षे अल्पमौञ्ज्यामित्यर्थः स्तब्धा साभिमानेत्यर्थः पक्षे अनम्रा सदृशे स्वाभिप्रेतरतिसामर्थ्यादिना समाने पक्षे स्वनमनकारके भुजङ्गे खिड्गे पक्षे सर्प्पे अर्प्पितकोटिः अर्प्पिता दत्ता कोटिर्य्यया यद्वा अर्प्पिता जनैर्द्दत्ता कोटिः कोटिसंख्याकं रत्नं यस्यां सेत्यर्थः पक्षे समर्प्पिताप्रभागा हरस्य शिवस्य चापस्य धनुषः यष्टिः दण्डो यथेत्यर्थः प्रणमति

प्रकर्षेण विनीता रतिमङ्गीकरोति पक्षे प्रकर्षेण नमतीत्यर्थः एवञ्च स्वयमेव धनदाने समर्था स्वधनक्रीतेन यथेप्सितसुरतसमर्थे नैव रतिं करोति न सुन्दरेणापि त्वादृशेनाल्पधनदात्रेति नेयं तव योग्येत्यावेद्यते ॥ ६४४ ॥

**सर्वंसहां महीमिव विधाय तां बाष्पवारिपरिपूर्णाम् ॥**
**भवनान्तरमयमधुना संक्रान्तस्ते गुरुः प्रेमा ॥ ६४५ ॥**

नायिकासखी नायकं वदति सर्व्वमिति ते तव एवञ्च सम्बन्धिपदानुपादानेपि युष्मत्पदेन तदर्थलाभान्न क्षतिः अयं मया तवाग्रहेण कारित इत्यर्थः प्रेमा स्नेहः पुंस्त्वनिर्द्देशेन सखिरूपत्वं तेन सर्व्वथात्युपेक्षणीयत्वञ्च कथ्यते अधुना वर्षान्तरमेव तथाच सज्जनानां प्रेम यावज्जीवन्तिष्ठति मध्यमस्य दशविंशतिवर्षाणि तिष्ठति वर्षानन्तरमेव प्रेमभङ्गकर्त्तात्वमधमोसीति व्यज्यते भवनानन्तरं जन्मान्तरं सङ्क्रान्तो गत इत्यर्थः जन्मान्तरे पुनर्भविष्यति नवेत्याशयः लक्षणया नायिकान्तरमित्यर्थो वा पक्षे भवनान्तरं राश्यन्तरं यथा बृहस्पतिः वर्षानन्तरं राश्यन्तरं गच्छति तथेत्यर्थः तां त्वदेकशरणापन्नां बाष्पवारि अश्रुजलं तेन पूर्णां पक्षे वारिपूर्णा सर्व्वंसहां सर्व्वजनकृतोपहाससहनशालिनीं पक्षे तन्नाम्नीं महीमिव पृथ्वीमिव विधायेत्यर्थः एकार्णवां महीं कृत्वा पश्चात्संचरते गुरिति ज्योतिश्शास्त्रम् ॥६४५॥

**संभवति न खलु रक्षा सरसानां प्रकृतिचपलचरितानाम् ॥**
**अनुभवति हरशिरस्यपि भुजङ्गपरिशीलनं गङ्गा ॥६४६॥**

महता यत्नेन महद्भिः संरक्षिताया मां कटाक्षयन्त्या अपि नायिकायाः सङ्गमः कथं स्यादिति चिन्तापरं नायकं दूती वदति संभवतीति प्रकृत्या स्वभावेन चाञ्चल्यशीलानां पक्षे प्रवाहरूपेण गमनरतामित्यर्थः सरसानां शृङ्गारिणीनां पक्षे रसेन जलेन सहितानामित्यर्थः खलुनिश्चयेन रक्षा चारित्र्यरक्षणं पक्षे प्रवाहरोधः सम्भवति न नैव भवतीत्यर्थः अत्र सामान्येन निर्द्देश्यविशेषेण समर्थयितुमाह हरस्य शिरस्यपि हरपदेन सर्व्वसंहारकारकत्वबाधकेन भययोग्यता शिरःपदेन

सर्व्वदा वृत्तत्वं व्यज्यते अपिनान्येषां का वार्त्तेति व्यज्यते गङ्गापदेन अनुचिता॰ कारित्वं व्यज्यते भुजङ्गपरिशीलनं खिड्गसम्भोगं पक्षे सर्प्पसम्बन्धमनुभवति करोतीत्यर्थः तथाच शिवेन शिरसि स्थापिताया गङ्गाया यद्येवं तदा चालम्बभावा सरसेयंमया क्षणलाध्या त्वया सङ्गना करिष्यते किं करिष्यन्ति रक्षका इत्याशयः यद्वा मम एकाकिनी गृहिणीरक्षा केन कर्त्तव्येति चिन्तापरं वैदेशिकं सखी वदति एवञ्च स्त्रीत्वधर्मरक्षणं स्वयमेव करोति न शिवादिभिरपि कर्त्तुं शक्यमित्याशयः स्वभावचपलचरितानां साध्वीनामपि सरसतापादनं दोषायैव भवति तत्परित्यागे॰ नैव गृहस्थेन स्थेर्यमित्याशयः इत्यपि कश्चित् ॥६४६॥

सुलभेषु कमलकेशरकेतकमाकन्दकुन्दकुसुमेषु ॥
वाञ्छति मनोरथान्धा मधुपी स्मरधनुषि गुणभावम् ॥६४७॥

समीचीनैकनायिकाप्रेयांसमनेकगुणं नायकमभिलषन्तीं काञ्चित् सामान्य॰ वनितामुपहसति काचित् सुलभेष्विति सुखप्राप्येषु कमलनागकेशरकेतकाम्र॰ कुन्दकुसुमेषु सत्सु तथाचानेकनायकेषु रतिकारकेषु सत्सु मनोरथेनाभिलाषेनान्धा असिद्धिमगणयन्ती मधुपी मद्यपानेन कृत्याकृत्यविचारशून्या मदनधनुषि गुणभावं मौर्वीत्वमिच्छतीत्यर्थः पक्षे गुणीभूतत्वमत्यन्ताप्राधान्यमित्यर्थः एवञ्च मदन॰ धनुर्मौर्वीभवनेच्छयाऽभिमतनायकवशकरणसामर्थ्येन तमधीनं करिष्यामीति॰ वाञ्छासिद्धिः क्व प्रत्युत तदीयनायिकादासीतुल्यत्वसंपादनेनातिलाघवास्पदं भवितेतिव्यज्यते ॥ ६४७ ॥

सा लज्जिता सपत्नी कुपिता भीतः प्रियः सखी सुखिता ॥
बालायाः पीडायां निदानिते जागरे वद्यैः ॥६४८॥

अप्रौढसपत्नीकां कांचिद्गेहिनीं हितेच्छया काचिदाह सेति बालायाः मुग्धायाः अनेन दिवानिशं नायकानुपेक्षणीयत्वं पीडान्तरशून्यत्वं च व्यज्यते पीडायां स्वल्पशिरःसम्बन्धिदुःखे अल्पदुःखेपि बहुवैद्याह्वानेनातिप्रीतिविषयत्वमात्रेद्यते वैद्यैर्बहुभिः चिकित्सकैः बहुवचनेनावधारणं सूच्यते जागरे अर्थान्निशाजागरे

निद्रानिते एकत्राक्यनया निश्चित्य कथिते सा बाला लज्जिता अनवरतनिशातुरतानां सर्व्वेषां गुर्व्वादीनां ज्ञानादितिभावः सपत्नी गृहिणी कुपिता अत्यन्तासक्तिशाली बालायां पतिरनर्थो जात इतिधियेतिभावः प्रियः बालायाः गेहिन्याः पतिरित्यर्थः भीतः असेयमवस्था मम दोषेण जाता ज्ञाता च गेहिन्येतिभावः बालासखो सुखिता सिद्धसकलमनोरथा जातेत्यर्थः तथा च त्वदीया सपत्नी यावत्प्रौढा न जाता तावदेव प्रियं सर्व्वप्रकारेणाधीनं कृत्वा स्थेयमन्यथा तत्रापि एतदेव भविष्यतीत्याशयः स्वरूपकथमेतदितितत्वम् ॥६४८॥

सुचिरागतस्य संवाहनच्छलेनाङ्गमङ्गमालिंग्य ॥
पुष्यति च मानचर्चा गृहिणो सफलयति चोत्कलिकाम् ॥६४९॥

कश्चित्सखायं वदति सुचिरेति गृहिणी अवस्थादिनातिचिरकालमागमनेविलम्बितेपि सम्यक्सकलरक्षणकर्त्रीत्यर्थः अत एव मानस्य चर्य्यां संरक्षणं पुष्यति पुष्टां करोति सुचिरागतस्यातिचिरेणागतस्य एवञ्चावश्यं मानो मुक्त एवेत्याशयः संवाहनच्छलेनोद्वर्त्तनमर्द्दनरूपसकलपरिश्रमहारकव्यापारच्छलेनेत्यर्थः अङ्गमङ्गं सर्व्वाङ्गमाश्लिष्येत्यर्थः अवकाशाभावादिदानीं रत्यदानेन मानचर्य्या पुष्टिरथोत्कलिकामत्यन्तोत्कण्ठां सफलयति च सर्व्वाङ्गालिङ्गनादिफलसहितां करोतीत्यर्थः एवञ्च साध्वी विदग्धा सकलगृहकार्यसमर्था च नान्या कापीति व्यङ्ग्यम् ॥ ६४९ ॥

सा सर्व्वथैव रक्ता रागं गुञ्जेव न तु मुखे वहति ॥
वचनपटौस्तव रागः केवलमास्ये शुकस्येव ॥६५०॥

नायिकोक्तकटुवचनोदासीनमिव मत्वा नायिकाप्रेषिता दूती नायकं समाधानयाह सेति सा सर्व्वनायिकागुणयुक्ता मम स्वामिनीत्यर्थः सर्व्वथा सर्व्वप्रकारेण रक्तैव केनापि प्रकारेण कदापि त्वय्यननुरक्ता नेत्यर्थः रागं प्रीतिं पक्षे लौहित्यं गुञ्जेव रक्तिकेव वहति मनसा कर्म्मणाचारवतीत्यर्थः नतु मुखे नतु वचनेनेत्यर्थः त्वद्विषयकामगोपनार्थमित्याशयः पक्षे गुञ्जापि मुखे श्यामा न

रक्तेत्यर्थः तथाच मम सख्याः किञ्चिद्दक्षणवक्तृत्वं प्रतिगोपनार्थं दोषत्वेन त्वमागण्यते तत्र भूतवौचिताभेव तव वचनपटोः वचनचतुरस्य रागः प्रेम पक्षे लोहित्यमास्ये मुखे केवलं नतु हृदयेपीत्यर्थः शुकस्य यथा तथेत्यर्थः शुकपदेन शिक्षकमात्राधीनत्वं वाक्ये अर्थानभिज्ञत्वमुच्चारयितुः कस्याग्रे किञ्च्दा वक्तव्यमिति विवेकराहित्यं च वक्रीत्यादि व्यज्यते तत्र दोषेणाभिव्यक्तप्रेम्नः गोपनार्थमुदासीनाध्यक्षेपि कदाचिद्रुक्षवादिनी मम सखी चातुर्य्यशालिनी सर्व्वथावचनरचनापरस्त्वमतोवाचतुरो दोषभागीति व्यज्यते तेन स्वदोषपरिहारायाधुनैव मत्सखीसमीपं चलनीयमित्यावेद्यते ॥६५०॥

**सायं कान्तभुजान्तरविनिपतिता निखिलनीतरजनीका ॥**
**उषसि ददती प्रदीपं सखीभिरुपहस्यते बाला ॥६५१॥**

सर्व्वं विचार्य्य कर्त्तव्यं न सहसेति काचित्काञ्चिदाह सायमिति सायं सन्ध्याकाले कान्तस्य स्त्रीमात्रानुच्छिष्टमुखस्य भुजान्तरपतिता कदाचित् गुरुवर्गेषु क्वचिद्गतेषु अप्राप्तपथेष्टसम्भोगेन नायकेन केलिगृहं बलादानीता अत एव गन्तुमशक्तेति सायं पतितेतिपदाभ्यां कथ्यते सुरतावृत्या नीता निखिला रजनी रात्रिः यया सेत्यर्थः एवञ्चाननुभूतानवरतरत्यानन्दप्रवाहेनात्यन्तश्रमजनकनिखिलरात्रिजागरेण च कालादिसकलपदार्थविस्मरणयोग्यता व्यज्यते तत्कृत्यमेवाह उषसि प्रत्यूषे एवञ्चान्धकारसमये पत्यातितृप्तेन सा प्रेषिता स्वगृहमितिव्यज्यते प्रदीपं सकलनिशावस्थानयोग्यं दीपं ददानेत्यर्थः बाला मुग्धा सखीभिः सर्व्वाभिरुपहस्यते उपहासविषयः क्रियते उदितप्रायेपि सूर्य्ये सायंसन्ध्याभ्रमोस्या एवेत्युपहासः तथाच कार्य्यं विचार्य्यैव कर्त्तव्यमित्याशयः ॥६५१॥

**सा तीक्ष्णमानदहना महतस्स्नेहस्य दुरनुगः पाकः ॥**
**त्वां दर्व्वीमिव दूति प्रयासयन्नास्मि विश्वस्तः ॥६५२॥**

व्यक्तापराधो नायको नायिकासमक्षं स्वयं भयेन गन्तुमशक्तो दूतीमाह सेति सा कदाप्यकृतमाना तीक्ष्णः यो मानः कोपः दोषजनितः स एव दहनो वह्निर्य्यस्याः सेत्यर्थः एवञ्च दूरेपि स्थातुमशक्यं वार्त्तालापस्य का कथेत्याशयः एवं किमित्य-

त आह महतः स्नेहस्य कदाप्यभग्नस्य प्रेम्नः परिपाकः परिणामः सर्व्वदासम्यक्-संरक्षणरूप इतियावत् दुरनुगः अनुगन्तुमप्यशक्यः स्वल्पापराधेनापि भग्नो भवतीति भावः पक्षेप्रचुरतैलादेः परिपाकः पचनं दुःखसाध्य एव भवति व्यापार-मन्तरा न भवति यथा तथा व्यापारेण कदाचित्प्रेमरक्षणं स्यादिति त्वां दर्व्वीमिव हे दूति प्रयासयन् व्यापारयन् एवञ्च प्रचुरतैलादिपचनं मैथिलभाषया कडछु इति प्रसिद्धेन हस्तव्यापाररूपेण भवति न साक्षादेव त्वामेव व्यापारीकृत्य कदाचित् प्रेमरक्षणं स्यादिति परन्तु न निश्चयः अत एवाह न विश्वस्तः निश्चयशून्य इत्यर्थः मानाग्निसमीपे स्नेहस्य संरक्षणमतिकठिनं त्वयैव कर्त्तुं शक्यं न मयान्यथा वेत्याशयः ॥ ६५२ ॥

## स्नेहक्षतिर्ज्जिगीषा समरः प्राणव्ययावधिः करिणाम् ॥
## न वितनुते कमनर्थं दन्तिनि तव यौवनोद्भेदः ॥६५३॥

अत्यन्तचपलस्वभावां काञ्चिद्दृष्ट्वान्योक्त्या कश्चिदाह स्नेहेति स्नेहस्य प्रणयस्य क्षतिः नाशः परजयेच्छा गजानां प्राणान्तावधिस्सङ्ग्रामः हेदन्ति तव यौवनारम्भः कमनर्थं पूर्व्वोक्तेषु न विस्तारयति अपि तु सर्व्वानित्यर्थः यद्यपि नाभिरूपासि तथाप्यत्यन्तचपलस्वभावत्वात् सर्व्वविरोधकारक एव तव यौव-नोद्भेद इत्याशयः ॥६५३॥

## सदनादपैति दयितो हसति सखी विशति धरणिमिव बाला ॥
## ज्वलति सपत्नी कीरे जल्पति मुग्धे प्रसीदेति ॥६५४॥

मम सख्युरेवं समुपजातमिति कश्चित्परिहसति सदनादिति कीरे शुके निशायां केलिगृहस्थापिते 'प्रसीदमुग्धे' इतिरात्रिश्रुतं मुग्धापादनतस्य नायकस्य वाक्यं दिने गुरुजनसपत्नीसखीदयितसमाजे वारंवारं कथयति सतीत्यर्थः सदनात् गृहाद्दयितः प्रियो गच्छति गृहिणीभीत्या लज्जया चेत्यर्थः सखी हसति सखी-मानज्ञानसुखेनेत्याशयः बाला धरणिं विशतीव सर्व्वेषां मानकरणपरिज्ञानादित्या-शयः सपत्नी ज्वलति ईर्ष्ययेतिभावः ॥६५४॥

**सङ्कुचिताङ्गीं द्विगुणांशुकां मनोमात्रविस्फुरन्मदनाम् ॥**
**दयितां भजामि मुग्धामिव तुहिन तव प्रसादेन ॥६५५॥**

कश्चित्तुषारं सम्बोध्याह सङ्कुचिताङ्गीमिति हे तुहिन तव प्रसादेनान्यथाऽतिप्रौढेयं कथमिदं सौख्यं स्यादित्याशयः सङ्कुचितमङ्गं यस्याः शीतेन नवोढायास्तथास्वभावादित्याशयः अत एव द्विगुणमंशुकं यस्यास्तामित्यर्थः नवोढापि तथा मनस्येव नतु बहिरपीत्यर्थः विस्फुरन् मदनो यस्या नवोढापि बहिर्निर्विकारशून्या बालामिव आरब्धयौवनामिव दयितां गृहिणीं भजामि दयितापदेनान्यस्त्रीसमागमशून्यास्पदं सुखं तव प्रसादं विना नेत्यावेद्यते ॥६५५॥

**सखि लग्नैव वसन्ती सदाशये महति रसमये तस्य ॥**
**वाडवशिखेव सिन्धोर्न्न मनागप्यार्द्रताम्भजसि ॥६५६॥**

नायकप्रेषिता नायिकासखी नायिकामाह सखीति हे सखि सर्व्वदा स्वेच्छया न कर्त्तव्यमपितु हितवचनमवश्यं कर्त्तव्यमिति व्यज्यते सखीपदेन तस्य नायकस्याशये हृदये पक्षे अभ्यन्तरे महति सकलोत्तमनायकगुणाश्रये इत्यर्थः पक्षे विस्तीर्णे रसमये त्वदेकविषयकशृङ्गाररसव्याप्ते पक्षे जलमये लग्ना सम्बद्धा एवकारेण सम्बन्धायोगव्यवच्छेदः कथ्यते पक्षे निगूढेत्यर्थः सदा वसन्तीत्यनेन कदाचिदपि नान्यत्रावस्थानमितिकथ्यते आर्द्रतां मानभङ्गेन सस्नेहतां पक्षे जलसम्बन्धं क्षणमपि न भजसि न करोषीत्यर्थः यथासिन्धोः समुद्रस्य वाडवाग्निशिखा वाडवशिखापदेन सदा कोपवत्वं सूच्यते तव योग्योन्यो नैव नायकः यथा वाडवशिखायाः समुद्रं भाग्यप्राप्तमपहाय न स्थानं तथा तवापि पूर्व्वतपःप्राप्तं तन्नायकमपहाय योग्यं स्थलं नेत्यवश्यमाहूयानुनेतव्यस्स इतिहितमेव मयोच्यत इति ॥ ६५६ ॥

**सखि मिहिरोद्गमनादिप्रमोदमपिधाय सोयमवसाने ॥**
**वन्ध्योवधिवासर इव तुषारदिवसः कदर्थयति ॥६५७॥**

नायकागमनावधिदिनशेषे नायाते नायके किं कर्त्तव्यमिति विचारकरणाय

रहस्यसहचरीं नायिका वदति सखीति हे सखि सखिपदेन त्वद्विचारितमेव मया कर्त्तव्यं नान्यदिति व्यज्यते स तत्रानुभूतः अयं अवधिदिनेनाभिन्नतया प्रत्यक्षः अवसाने शेषे तुषारदिवसः शीतकालवासरः मां शीताधिक्येन कदर्थयति अतिशयेन दुःखिताङ्करोतीत्यर्थः मिहिरोद्गमनेन सूर्य्योदयेनादौ यः प्रमोदः हर्षस्तमपिच्छायाच्छाद्य दूरीकृत्येति यावत् वन्ध्यः प्रियतमागमनशून्यः प्रियागमनावधिदिवस इवेत्यर्थः अवधिदिनत्वेन प्रातरानन्दः अनागमनेनावसाने नानन्दलेशोपि प्रत्युतदुःखाधिक्यमेव यथा तथेत्यर्थः एवञ्चाद्यावधिदिनशेषत्वेन तुषारदिनत्वेन च द्विधा दुःखप्राप्तौ मम प्राणा विस्तृतायां रात्रौ न स्थास्यन्तीति निश्चये स्वनायकानयनमन्यनायकानयनं वाऽविचार्य्य त्वयाऽवश्यं कर्त्तव्यमित्यावेद्यते ॥६५७॥

**सुरभवने तरुणाभ्यां परस्पराकृष्टदृष्टिहृदयाभ्याम् ॥**
**देवार्च्चनार्थमुद्यतमन्योन्यस्यार्प्पितं कुसुमम् ॥६५८॥**

श्रुतिस्मृतिसानुरोधस्य काममुखं नेत्युद्दिश्य स्वाभिप्रेतनायकेन सङ्गमयितुं काञ्चिन्नायिकां दूती वक्ति सुरभवने इति यद्वा मदनस्याकर्त्तव्यं किमपि नेति सर्व्वथा मदनं धिगिति कश्चिद्विवेकी कश्चिदाह देवगृहे एवञ्च जनबाहुल्यं विरुद्धाचरणे पापाधिक्यञ्च कथ्यते युवभ्यां स्वभावतस्सर्व्वदा कामातुरत्वमनेन कथ्यते परस्परमन्योन्यमाकृष्टं प्रथमापूर्व्वदर्शनेन वशीकृतं नयनहृदयं ययोस्ताभ्यामित्यर्थः एवञ्च परिचयाभावेनातिसाहसाधिक्यमित्यावेद्यते कुसुमं प्रत्येकमेकैकं कमलं देवपूजार्थं करे कृतं देवं विहायान्योन्यस्य नायिकया नायकस्य नायकेन नायिकायाः शिरसि स्थापितमित्यर्थः एवञ्च सङ्कल्पितमपि वस्तु दत्तं द्वितीयपुष्पाभावेन पूजनरोधोप्यङ्गीकृतः एवञ्च यदि कामसुखापेक्षा तदा त्वयाप्येवमेव कर्त्तव्यं देवागारं गत्वा समानीतनायकसङ्गः कर्त्तव्यः द्वितीयपक्षे सुगमम् ॥६५८॥

**सायं कुशेशयान्तर्म्मधुपानां स्फुरति निर्य्यतान्नादः ॥**
**मित्रव्यसनविषण्णैः कमलैराक्रन्द इव मुक्तः ॥ ६५९ ॥**

संकेतकाल आगतः शीघ्रं व्रजेति दूती नायिकां वक्ति सायमिति सन्ध्याकाले कमलान्तः कमलपुष्पाभ्यंन्तरात् निर्य्यतां गच्छतां मधुपानां सङ्कोचबन्धनभयादित्याशयः नादः शब्दः स्फुरति प्रत्यक्ष इत्यर्थः मित्रस्य सूर्य्यस्य विकाशकस्य व्यसनेनास्तमितत्वरूपदुःखेन विषण्णैः शोकयुतैः कमलैराक्रन्द उच्चै रोदनमिव मुक्तः बहिः कृत इत्यर्थः एवञ्च सूर्य्यास्तमनसमय एव सङ्केतः समागतः त्वरा कर्त्त- व्येत्याशयः ॥ ६५९ ॥

**सुमहति मन्युनिमित्ते मयैव विहितेपि वेपमानोरुः ॥**
**न सखीनामपि रुदती ममैव वक्षःस्थले पतिता ॥ ६६० ॥**

नायको नायिकासखीं वक्ति सुमहतीति अतिमहति समक्षमन्यनायिकोपभोगादिरूपे क्रोधकारणे मयैव विहितेपि कृतेपि कम्पमानोरुः ममैव वक्षःस्थले पतिता रुदती न सखीनां वक्षःस्थले पतितेत्यर्थः एवञ्च तव सखी तरुणी जाता परन्तु सरलस्वभावतया यथोचितमानादिविधानमपि न जानाति त्वया सम्यक् शिक्षणीयेतिभावः ॥ ६६० ॥

**सुभग व्यजनविचालनशिथिल भुजाभूदियं वयस्यापि ॥**
**उद्वर्त्तनं न सख्याः समाप्यते किञ्चिदपगच्छ ॥ ६६१ ॥**

मय्यासक्ता सा जातेति कथं मम निश्चय इति वादिनं नायकं सखी दूती वक्ति सुभगेति व्यजनानां विशेषेण प्रचुरवातजनकव्यापारेण यच्चालनं बहुधान्दोलनं तेन शिथिलावसमर्थौ भुजौ बाहू यस्याः सा वयस्यापि सख्यपि अपिना परिचारिकाणां का कथेत्याद्येयने इयं व्यजनचालने समर्थापीत्यर्थः सख्या उद्वर्त्तनं समाप्यते त्वद्दर्शनजातसात्त्विकभावरूपस्वेदप्रवाहस्य निवृत्तिः केनाप्युपायेन न जाताऽतः स्वल्पं सखिदृष्टिबहिरपगच्छेत्यर्थः किञ्चित्पदेन सखीकोपो वार्य्यते एवञ्च त्वय्यत्यन्तासक्तेयमिति प्रत्यक्षसिद्धं सर्व्वस्य तत्र परं मदुक्ते विश्वासो नास्तीत्याशयः ॥ ६६१ ॥

**सव्रीडा नखरदनार्प्पणेषु कुपिता प्रगाढ़मचिरोढ़ा ॥**
**बहुयाञ्चा चरणग्रहसाध्या रोषेण जातेयम् ॥ ६६२ ॥**

नायिकासखी नायकं वक्ति सव्रीडेति इयं मयानीता तव कुटुम्बिनी गृहिणी नतु द्रव्यादिक्रीता एवञ्चोपभोगमात्रार्थानां तासामेवमपि कदाचिन्नखादिघातः क्रियते नतु कुटुम्बिन्यामिति व्यज्यते दयिता प्रेमपात्रं तस्यां समाधाय सर्व्वं कर्त्तव्यमित्याशयः सव्रीडा सलज्जा अत एव कुपिता नवोढ़ा मुग्धा एवञ्च नखादिघातसहनाशीलत्वं व्यज्यते लज्जावशादप्रियेपि निषधाक्षमत्वंच व्यज्यते नखार्प्पणेषु दन्तार्प्पणेषु चेत्यर्थः एवञ्चोभयोरपि प्रत्येकं बहुत्वेन प्रौढाया अपि न सहनयोग्यता किम्बालाया इति व्यज्यते कुपिता तवापराधेन योग्यकोपवतीत्यर्थः बहुविधा नानाप्रकोरोचितानुचितेत्यर्थः यच्ञा प्रार्थना अन्यत् किं वक्तव्यमकर्त्तव्योपि ज्येष्ठाया मम चरणग्रहः चरणपातः ताभ्यां साध्या तव समीपादागता एवञ्च पुनर्नैवं कर्त्तव्यमित्याशयः काचिदुपपनिदत्तनखदन्तघातभीता पतिगृहं कथं गच्छामीति वादिनी सखि मया सह पतिगृहं गन्तव्यमिति तव पतिप्रतारणमपि मया कर्त्तुं शक्यमिति चतुरया दूत्या पतिसमीपं नीता तथैव च कृतमिति वाक्यार्थः सव्रीडा महोन्मादशालिनी तदानीं कृत्याकृत्यविचाररहितेन त्वया कृतेषु बहुक्षतेषु लज्जाधिक्येन मौनशालिनीत्यर्थः तस्या अंकथनेन च तत्त्वया न ज्ञातमन्यत्समानमिति वदति सखायं सखाहेति वा तस्याअनिषेधेन पुनःपुनः कृतमित्याशयः ॥६६२॥

सुगृहीतमलिनपक्षा लघवः परभेदिनस्तीक्ष्णाः ॥
पुरुषा अपि विशिखा अपि गुणच्युताः कस्य न भयाय ॥६६३॥

कश्चित्कञ्चिद्वक्ति सुगृहीतेति पुरुषा अपि विशिखाः शरा अपि अपिद्वयं साम्यकथनमात्रं वस्तुतोऽभेद एवेति व्यनक्ति गुणच्युताः साधुत्वादिगुणरहिताः यद्वा विद्यावत्त्वाद्यनेकगुणशालिनो भूत्वा पश्चात्त्यागात्खलत्वमापन्ना इत्यर्थः च्युतपदस्वरसात् कस्य न भयायंअपि तु स्वकीयपरकीयसाधारण्येन भयजनका एवेति न कस्यापि सुखजनका इत्यर्थः सुगृहीताः सम्यग्गृहीताः मलिनाः केवलनीचकर्म्माणः पक्षाःसहाया यैस्ते इत्यर्थः पक्षे गुरुत्वरहिता इत्यर्थः परभेदिनः स्निग्धानामपिभेदकारका इत्यर्थः पक्षे विदारणहेतवस्तीक्ष्णाः मनसा वाचा कर्मणाच घोराइत्यर्थः पक्षे खरा इत्यर्थः । चकारद्वयं पूर्ववत् एवञ्च न्यूनसङ्गतिरुत्तमेन सर्वथा त्याज्येतिध्वन्यते ॥६६३॥

स्वकपोलेन प्रकटीकृतम्प्रमत्तत्वकारणं किमपि ॥
द्विरदस्य दुर्ज्जनस्य च मदं चकारैव दानमपि ॥ ६६४ ॥

खलस्यचरितमात्रं सम्यग् न भवतीति कश्चित्कञ्चिदाह स्वेति स्वस्य कपोलेन कपोलावयवेन पक्षे कपोलचालनेन वचनेनेति यावत् प्रकटीकृतं निस्सारितं पक्षे कथितं प्रमत्तत्वस्य प्रकृष्टमदस्य पक्षे असावधानत्वस्य कारणं किमपि शिरोधूननदन्तादिकं पक्षे स्वकीयमद्यपानादिकं द्विरदस्य गजस्य च पुनः खलस्य दानं मदजलं पक्षे दत्तम् अपिना कारणादर्शनसमुपासनयोः क्रमेण ग्रहणं मदं मत्तत्वं पक्षे वृथागर्व्वञ्चकारैव करोतिस्मैवेत्यर्थः अयोग-व्यवच्छेदार्थएवकारः प्रथमं दोषमुत्पाद्य पश्चात्तद्दानादिप्रवृत्तिरित्याश्चर्य्यसूचनाय लिट्‌निर्द्देशः एवञ्च प्रथमंकार्य्यं पश्चात् कारणमित्याश्चर्य्यकारि सम्भावित-मदस्य गजस्येव खलस्य विश्वासो न वा तदीयसङ्गतिरपि कर्त्तव्येति कथ्यते यद्वा गजस्यदानमेव मदमकरोत् नान्यत्तमपि स्वस्यैव नान्यस्य खलस्यस्व-कथितमपि सर्व्वं पुनः श्रोतुरपि प्रमत्तत्वकारणंभवतीत्येवं योज्यम् एवञ्च मत्तगजा-पेक्षयापि खलः स्वदूरतः परिहर्त्तव्यइतिभावः ॥६६४॥

सत्यं पतिरविदग्धस्सातुस्वधियैव निधुवने निपुणा ॥
मार्त्तिकमाधाय गुरुं धनुरधिगतमेकलव्येन ॥६६५॥

कस्यचिदविदग्धस्य पत्न्यामासक्तः कश्चित्पशुतुल्यायां वृथासक्तोऽसीति वादिनं सखायमाह सत्यमिति पतिः विवाहमात्रकर्त्ता चातुर्य्यशून्यइति सत्यम् एवञ्च तस्यस्त्रीप्रयोजनरहितत्वेन ज्ञातासमवायेन च यदृच्छया रतिसौलभ्यं तेनापरि-त्याज्यत्वञ्च गम्यते मयैव एवकारेणपत्यादिशिक्षाव्यवच्छेदः निधुवने सुरते निपुणा सकलसुरतचातुर्य्यवतीत्यर्थः एतदेवनिदर्शनेनोह मार्त्तिकं मृत्तिकाक-ल्पितं गुरुं द्रोणाचार्य्यमाधाय अग्रे धृत्वा धनुः धनुशास्त्रमेकलव्येनैकलव्यनाम्ना शवरेणाधिगतं प्राप्तमित्यर्थः एवञ्च त्वयानिषेधो न कर्त्तव्यइति अविदग्धेयं नास्म-द्योगेति विमुखं कंचन प्रलोभयन्ती दूती वदतीत्यपि कश्चित् ॥६६५॥

सौभाग्यमानवान् स त्वयावधीर्य्यापमानमानीतः ॥
स्वं विरहपाण्डिमानं भस्मस्नानोपमं तनुते ॥६६६॥

नायिकां सखी वदति सौभाग्येति स निरपराधो नायकः त्वयापमानं प्रापितः सौभाग्यशाली मानीचावधीर्य्यास्मदुक्तं परित्यज्येत्यर्थः नायकस्य यस्त्वद्विरहस्तेनजातं पाण्डिमानं पाण्डुतां स्वं स्वकीयं भस्मस्नानोपमं तनुते करोति नायक इत्यर्थः अन्योपि वृथावमानितः संन्यासं कृत्वा भस्मनास्नातीति लौकिकम् एवञ्च प्रसन्ना भव तमानेतुमाज्ञां देहीत्याशयः ॥६६६॥

सखि मम करञ्जतैलं बहुसन्देशं प्रहेष्यसीत्युदिता ॥
श्वशुरगृहगमनमिलितं वाष्पजं संवृणोत्यसती ॥६६७॥

काचित्काञ्चिदाह सखीति सखिपदेनाधुनैव त्वामुत्साहशालिनीङ्करोमीति व्यज्यते करञ्जस्य वृक्षविशेषफलस्य तैलं बहुसन्देशं बहुभिः याचितमित्याशयः प्रहेष्यसि तैलस्य प्रेषणं करिष्यसीति सख्या कथितेत्यर्थः श्वशुरगृहगमनसमये मिलितं प्राप्तं श्वशुरगृहे सङ्केतस्य लाभाभावेनेत्याशयः सखीकथित करञ्जकुञ्जरूपसङ्केतस्य लाभेन वाष्पजलमश्रुजलं संवृणोति रोदनं त्यजतीत्यर्थः असती पुंश्चलीत्यर्थः ॥६६७॥

सन्दर्शयन्ति सुन्दरि कुलटानां तमसि विततमषिकल्पे ॥
मौलिमणिदीपकलिका वर्त्तिनिभा भोगिनोध्वानम् ॥६६८॥

दुष्टसहायो दुष्टएव भवतीति काञ्चित्काचिदाह सन्दर्शयन्तीति हे सुन्दरि विस्तीर्णमषीतुल्येऽन्धकारे कुलटानां बहुधाभिसरन्तीनां भोगिनस्सर्पाअध्वानं पन्थानं दर्शयन्तीत्यर्थः वर्त्तिनिभा वर्त्तिकासदृशाः मौलिमणयः मस्तकस्यमणयएव दीपकलिका दीपशिखा येषां ते इत्यर्थः एवञ्च कुलटागमनसाहित्यं भोगिनएव कुर्व्वन्तिनान्ये इति यद्दुत्वमन्धकारे गन्तुमशक्यामिति वादिनी नायिकां सख्याह एवञ्च अनयारीत्यापि कुलटा गच्छन्ति त्वया सुखेनैव गन्तव्यमित्याशयः इति ॥ ६६८ ॥

सम्बर्द्धनं तृणाल्याः पिहिताः शीतांशुरवितारा ॥
प्रध्वस्ताः पन्थानो मलिनेनोद्यम्य मेघेन ॥६६६॥

खलस्य सर्वं चरितं दुष्टमिति कश्चित् कश्चिदन्योक्तया वदति सम्बर्द्धनमिति तृणानां सम्यग् बर्द्धनं कृतं चन्द्रसूर्य्यतारा: आच्छादिताः मार्गाः प्रध्वस्ताः म्लानेन मेघेनोद्यम्योद्योगं कृत्वेत्यर्थः यथा मेघस्य श्यामस्य चरितं दुष्टं तथा म्लानस्य सर्व्वमित्याशयः दुर्ज्जनविश्वासे कृते मरणमवश्यं भवतीति ॥६६६॥

सम्यगनिष्पन्नस्सन्योर्थस्त्वरया स्वयं स्फुटीक्रियते ॥
सव्यङ्ग एव भवति प्रथमो विनतातनूज इव ॥ ६७० ॥

सुविचारितस्यार्थस्यसिद्धिर्विना प्रकाशे कृतेऽवश्यं हानिरिति कुत्रापि तत्प्रकाशो नैव कर्त्तव्यइति वृद्धो बालं शिक्षयति सम्यगिति सम्यक् सर्व्व प्रकारेणा-निष्पन्न: असंपूर्णः सम्यक्पदेन कस्मिंश्चिदंशे न्यूनत्वे उत्तरत्रापि न प्रकाशः कर्त्तव्यः किमुतपूर्वं मध्ये वेत्यावेद्यते योर्थः स्वयंस्फुटी क्रियते स्वयमित्यनेन परेण प्रकाशस्यापि मिथ्यात्वारोपः कर्त्तव्यइत्याशयः अर्थः सहः व्यङ्गएवं हीनाङ्गएव भवतीत्यर्थः एवकारेण नैव भवति यदि कदाचिद्भवति तदा सम्यक् सम्पन्नो न भवतीति गम्यते विनतायाः गरुड़मातुः प्रथमः तनूजः अनूरुरिवेत्यर्थः विनतया त्वरयाण्डस्फोटेनानूरुर्बहिष्कृतः जङ्घाशून्यएव सजातइति पुराणकथा॥ ६७० ॥

सज्जन एव हि विद्या शोभायै भवति दुर्ज्जने मोघा ॥
न विदूरदर्शनतया कैश्चिदुपादीयते गृध्रः॥ ६७१ ॥

विद्या प्राप्तापि सौजन्यं विना प्रतिपत्तिकारिणी नेति कश्चित् कश्चिदुपदि-शति सज्जनइति सज्जने खलत्वादिदोषं शून्ये विद्या विविधसमीचीनपरिज्ञानरूपा शोभायै शोभार्थं भवति साधारण्येन सर्व्वोपकारकरणादितिभावः दुर्ज्जने मोघा मोघैव स्वल्पं फलं ददातीत्यर्थः स्वकार्य्यकारित्वेपि परोपकारेण प्रतिष्ठाकारिणी न भवतीत्यर्थः अत्रैव दृष्टान्तयति गृध्रः दूरदर्शित्वेन विद्यास्वरूपेण सदास्व कार्य्य-मुदरपूरणादिकं कुर्व्वन्नपि दूरदर्शित्वेन कैश्चित् शिष्टैर्न्न गण्यतइत्यर्थः तस्य

दूरदर्शित्वं प्राणिवधार्थमेव न परोपकारायेत्याशयः गृध्रपदेन अभिकाङ्क्षावाचकेन लोभाधिक्यं व्यज्यते तेनापि विद्यावतामनुचितलोभपरित्यागावश्यकत्वमिति व्यज्यते एवञ्च सविद्यानां सौजन्यमेव सारमिति ॥ ६७१ ॥

**सुभगं वदति जनस्तं निजपतिरिति नैष रोचते मह्यम् ॥**
**पीयूषेपि हि भेषजभावोपनते भवत्यरुचिः ॥ ६७२ ॥**

उपपतिसादृश्यं पत्युर्नास्तीति काचित्काञ्चिद्ब्रूते सुभगमिति तं पतिं सुभगमितिकथयति उदासीनोपि जनः कथयति अयमर्थो बहुसंमतइति व्यज्यते निजपतिरेष इतिहेतोर्मह्यं स पतिः न रोचते जारवत्प्रीतिविषयो न भवतीत्यर्थः यद्यपि जारापेक्षयाधिकगुण एव पतिः तथापि निजपतित्वमेवारुचि कारणं यथा सर्व्वाधिक गुणेपि अमृते हि निश्चयेन भेषजभावोपहितेऔषधत्वेनश्रुते अरुचिरल्पारुचिर्भवतीत्यर्थः एवञ्चभेषजत्वज्ञानममृतेप्यरुचिं यथा करोति तथेत्यर्थः एवञ्च सर्व्वप्रकारेण सर्व्वदा रुचिविषयो जार एवेति त्वया स्वेच्छयेदं सुखं त्यज्यते इत्याशयः यद्वा नायकदूती नायिकां स्ववृत्तान्तकथनेन प्रलोभ्यस्वाभिमतेन-नायकेन सङ्गमयितुमाह इदमेव शृङ्गाररसतत्वं त्वयापि तथैव कर्त्तव्यमित्याशयः वस्तुतः तं मम पतिं जनः प्रतिवेशिनी जनः किञ्चिद्गोपनार्थं पुंस्त्वनिर्द्देशः सुभगं सुभगपदेनसम्बोध्य वदति कथयति उपलक्षणमिदं ममपतिरपि तां सुभगादि पदेन वदति इतिहेतोर्मम पतिरेवान्यनायिकासंगत्या सुभगत्वं प्रतिवेशिनी चान्यपुरुष-संगत्या सुभगात्वं लभते इत्याकलय्यनिजपतिर्मह्यं न रोचते काक्वा रोचते एवेत्यर्थः यद्यपि बहुधानुभूतेअरुचिः अप्राप्ये सदा रुचिरित्येव सर्वसिद्धं तथापि पतिरेव ममरुचिविषयो नत्वन्यइति नन्वन्यनायिकासक्तेपि तव कथंरुचिरित्यतआह हिहेतौ भेषज भावोपहितेपि औषधभावयुतेपि सदा अजरा मरणकारकममृतमिदं पिवेत्युक्त्वा केनापि दत्तेपि इत्यर्थः अरुचिरप्रीतिः कस्यापि न भवतीत्यर्थः एवञ्च कालत्रयेऽमृतोपमं स्वपतिं विहाय नान्य लम्पटत्वत्सदृश्याहमिति किमपि न त्वया वाच्यमिति नायिकोक्तिरेव दूतीं प्रतीति मादृशां पन्था ॥ ६७२ ॥

**सौधगवाक्षगतापि च दृष्टिस्तं स्थितिकृतप्रयत्नमपि ॥**
**हिमगिरिशिखरस्खलिता गङ्गेवैरावतं हरति ॥ ६७३ ॥**

नायकदूती नायिकामाह सौधेति ते तव दृष्टिः सौधस्य राजसदनस्य गवाक्षेण छिद्रेण गतापि ममाभिप्रेतनायके प्राप्तेत्यर्थः सौधपदेन नायके भययोग्यता व्यज्यते गवाक्षपदेन यत्नेन कृतत्वं गङ्गासादृश्यप्रयोजकानवरतप्रवाहरूपत्वं व्यज्यते अपिना दूरदर्शने एवं सम्यग् दर्शने किं वक्तव्यमिति व्यज्यते हि निश्चयेन स्थित्यै प्रकृतिस्थापनाय कृतो यत्नो येन तं पक्षे गङ्गाप्रवाहगमननिवृत्त्यर्थमपि निर्विरोधे हरति त्वदप्राप्त्या अधीरतां नयतीत्यर्थः हिमालयशिखरविवरपतिता गङ्गा ऐरावतमिन्द्रवाहनं गजमिवेत्यर्थः ऐरावतपदेन नायके महत्वं महदाश्रितत्वं भयशून्यत्वेन तव गृहागमनादि च सूच्यते एवञ्च त्वत्कटाक्षपातदिनावधि स व्याकुलस्त्वामेव चिन्तयति स्वयं गमनासम्भवेऽपि तमाहूय प्रकृतिस्थं कुर्व्विति ऐरावतस्य कर्णे स्खलिता गङ्गातोकनखलाख्यं गङ्गातीर्थमभवदिति कथा पुराणे ॥६७३॥

**सहधर्म्मचारिणी मम परिच्छदः सुतनु नेह सन्देहः ॥**
**न तु सुखयति तुहिनदिनच्छत्रछायेव सज्जन्ती ॥ ६७४ ॥**

सस्त्रीकं मत्वा प्रेमसम्बन्धमस्वीकुर्वतीं प्रतिवेशिनीं नायिकां नायक आह सहधर्म्मेति सहधर्म्मचारिणी गृहिणी मम परिच्छदः कुटुम्बवर्गपरिगृहीता कुटुम्बरूपा इत्यर्थः एवञ्च धर्म्मबुध्या नान्यापेक्षा ममेति न सन्देहः हे सुतनु एवञ्च त्वदुपेक्षां कथमपि न करोमीति सुतनुपदेन व्यज्यते न सन्देहइत्यनेन सशपथं कथ्यत इति व्यज्यते तु शब्दएवकारार्थे नैव सुखयति सम्भोगसुखं न ददातीत्यर्थः सकलगृहभारव्यापृता दिवानिशं तल्लग्ना गृहिणी तिष्ठतु त्वं तु सर्वदैव मम सुखदात्रीत्यर्थः तुहिनदिने शीतदिने छत्रजच्छाया यथा तथेत्यर्थः सज्जन्ती संगता भवन्ती यथा छत्रच्छाया न सुखदा शीते प्रत्युत सूर्य्यकिरणजसुखमपि विघटयति एवमियमपि स्वयं सुखयितुं न शक्नोति परकृतमपि विघटयति अथ तस्या गृहाधिकारमपहाय नान्यत्राज्ञेति त्वत्सम्बन्धेनाभिमतमवश्यं कर्त्तव्यमित्याशयः॥६७४॥

**सकलगुणैकनिकेतन दानववासेन धरणिरुहराज ॥**
**जातोसि भूतले त्वं सतामनादेयफलकुसुमः ॥ ६७५ ॥**

दुष्टसंगत्या तव सर्वे गुणा विफला जातास्तस्मात्सा त्याज्येति कश्चित्

कश्चिदन्योक्त्याह सकलेति धरणिरुहा वृक्षास्तेषां राजन् श्रेष्ठेत्यर्थः एवञ्च सर्वश्रेष्ठस्य तव दुष्टसम्बन्धः सर्वदानुचित इत्यावेद्यते सकलानां गुणानां वृहत्व माधुर्य्यशालिफलत्वादीनामेकं मुख्यं निकेतनं गृहं तत्सम्बोधनं दानवो यक्षविशेषस्तस्य वासेन स्वस्मिन्निवासेनेत्यर्थः सज्जनानामादातु न योग्ये फलपुष्पे यस्य तादृश एव जातोसि संवृत्तोसि एवञ्च दानवरूपदुष्टसङ्गतिमपहाय सद्भिरेव सङ्गतिः कर्त्तव्येति ॥ ६७५ ॥

## सुन्दरि ताटङ्कमयं चक्रमिवोद्वहति तावके कर्णे ॥
## निपतति निकामतीक्ष्णः कटाक्षबाणोऽर्ज्जुनप्रणयी ॥६७६॥

मानवतीं नायको वदति सुन्दरीति एवञ्च क्षणमपि मानासहिष्णुत्वं स्वस्मिन् व्यज्यते ताटङ्कमयं ताटङ्कालङ्कारस्वरूपं पक्षे ताटङ्कसदृशं मण्डलाकारत्वात् चक्रमिव रथचक्रमिवेत्यर्थः पक्षे चक्रमेवेत्यर्थः उद्वहति धारयति पक्षे पृथ्वीगिलितमुपरि नयति सतीत्यर्थः त्वत्सम्बन्धिनि कर्णे एकत्वमविवक्षितं पक्षे कुन्तीज्येष्ठपुत्रे एकत्वं विवक्षितं निपतति स्वभावेन दूरगामीत्यर्थः पक्षे यथाश्रुतमर्थः तीक्ष्णः ममहृदयविदारकः पक्षे कर्णभेदकः कटाक्ष एव शरः पक्षे कटाक्षतुल्यश्शर इत्यर्थः अर्ज्जुने स्फीते कपोलदेशे प्रेमशाली तत्रैवस्थितत्वात् पक्षे अर्ज्जुनेन पाण्डवेन प्रणयनं प्रेषणं तद्वानित्यर्थः एवञ्च सर्व्वथा मानं त्यजेति वाक्यार्थः कर्णार्ज्जुनयुद्धे पृथ्वीगिलिते कर्णरथचक्रे उद्धारसमय एवार्ज्जुनेन शरप्रहारः कृत इति भारतम् ॥६७६॥

## स्वाधीनैव फलर्द्धिर्ज्जनोपजीव्यत्वमुच्छ्रयच्छाया ॥
## सत्पुंसो मरुभूरुह इव जीवनमात्रमाशास्यम् ॥६७७॥

समीचीनाखिलगुणशालिनं पुरुषं कश्चित्स्तौति स्वाधीनेति सत्पुंसः समीचीनगुणस्य पुरुषस्येत्यर्थः जीवनमात्रमायुर्म्मात्रमाशास्यं प्रार्थ्यमन्यत्सर्व्वं स्वगुणेनैव सदा तस्य सुलभमितिभावः फलर्द्धिः द्रव्यप्रतिष्ठादिफलसम्पत् स्वाधीना स्वेच्छामात्राधीनेत्यर्थः पक्षे फलानामाधिक्यं स्वाधीनमित्यर्थः एवकारेण परापेक्षित्वं व्यवच्छिद्यते जनोपजीव्यत्वं उपकाराय बहुजनाश्रितत्वं पक्षे तापशा-

न्तये बहुपथिकजनसेव्यत्वं स्वाधीनमेवेतिलिङ्गविपरिणामेणान्वयः उच्छ्रयः नानाविधप्रतिष्ठाकारककर्म्मोदयः पक्षे उच्चत्वं छाया कान्तिः पक्षे प्रतिमा अनातपदेश इतियावत् मरुभूरुह इवेति मरुस्थले रोहत्युत्पद्यते इति मरुदेशजस्य वृक्षस्येवेत्यर्थः जीवनमात्रं जलमात्रं काम्यमित्यर्थः मरुदेशोत्पन्नस्य गुणग्रहणायोग्यजनमयदेशोत्पन्नस्येति पुंसोपि विशेषणम् एवञ्च गुणिनां सर्व्वं स्वाधीनमेवेति यद्वा सत्पुरुषाः सर्व्वत्र पूज्याः सुखिनश्च भवन्तीति कश्चित्कश्चिदाह अत्र अमरभूरुह इत्येवपाठः अमरस्येन्द्रस्य यो भूरुहो वृक्षः समुद्रमथनादानीतः कल्पवृक्षः तस्येवेत्यर्थः अस्यैव स्वाधीना सार्व्वकालिकी फलर्द्धिर्न मरुदेशीयस्य तरोः जीवनमात्रमुत्पत्तिस्थानत्वेन समुद्रजलमात्रं काम्यं नान्यदित्याशयः सत्पुंसो देवतरोश्च सर्व्वथा साम्यं पुरुषस्य जीवनापेक्षा कल्पवृक्षस्य तु चिरजीवित्वेन सापि नेत्याशयेन व्यतिरेकालङ्कारो वेति सम्यगाभाति ॥६७७॥

सन्तापमोहकम्पान्सम्पादयितुं निहन्तुमपि जन्तून् ॥
सखि दुर्ज्जनस्य भूतिः प्रसरति दूरं ज्वरस्येव ॥६७८॥

तव प्रियस्येदानीं महदैश्वर्य्यं जातमिति वादिनीं सखीं सखी वदति सन्तापेति सखिपदेन हृद्गतकथनं द्योत्यते दुर्ज्जनस्य कदर्य्यस्य भूतिरैश्वर्य्यं पक्षे भवनम् उत्पत्तिः दूरं प्रसरति स्वल्पापि वह्वी श्रूयत इत्यर्थः पक्षे लोकानामुपरि दूरात् पतति ज्वररोगस्येव सन्तापः भोगानर्हत्वात् पक्षे संज्वरः मोहो मुग्धत्वं धनमदेन धनिन एव यद्वा किमपि दास्यतीति भ्रान्त्यान्येषामपीत्यर्थः पक्षे स्वभावात् कम्पः कदर्य्यमत्तधनाधिक्येन प्रतिवेश्यादिकम्प इत्यर्थः पक्षे स्वभावात् अन्यत्किं वक्तव्यं जन्तून् प्राणिनः निहन्तुं निरर्थकं हन्तुमपि एवञ्च ज्वरस्य उत्पत्तिर्यथा कस्यापि सुखाय न किन्तु सर्व्वस्य केवलं दुःखाय भवति तथास्य सम्पत् जातापि न सुखायेति व्यज्यते यद्वा सधनेन नायकेन संगति कुर्व्विति वादिनीं दूतीं नायिका वदति तथा चातिदुर्ज्जनेनानेन मास्तु सङ्गतिरिति भावः ॥६७८॥

सुखयति तरां न रक्षति परिचयलेशं गणाङ्गनेव श्रीः ॥
कुलकामिनीव नोज्झति वाग्देवी जन्मजन्मापि ॥६७९॥

लक्ष्मीर्लोभेन विद्याभ्यासविमुखं सुतं शिक्षयति कश्चित् सुखयतीति श्रीः सम्पत्तिः सुखयति तरामत्यर्थेन सुखयति विविधभोगैरूपयोजतीत्यर्थः वर्त्तमानार्थकप्रत्ययेन सम्पत्तिसमय एव सुखं नान्यदेति व्यज्यते परिचयलेशं शिष्टाचारकरणमपि न रक्षति यदा सम्पत्तिस्तदनन्तरं क्षणमध्ये विपदपि भवतीत्यर्थः यथा वाराङ्गना सम्भोगे कुलाङ्गनापेक्षयाधिकं सुखं क्षणं ददानापि प्रचुरदायिनं पुरुषानन्तरं दृष्ट्वा पूर्व्वनायकमपहाय गच्छतीत्यर्थः अत्रापि लट्वर्तमानत्वबोधनेन क्षणमपि न स्थिरेति व्यज्यते लेशपदेन महासमृद्धस्यापि भोक्तुमपि दुर्ल्लभं भवतीति व्यज्यते एवञ्च सता वाराङ्गनावश्यं सर्व्वथा त्याज्येत्यावेद्यते वाग्देवी सरस्वती जन्मजन्मापि सप्तजन्मपर्य्यन्तमवश्यमधिकाभ्यासेनाग्रेपीत्यर्थः नोज्झति सुपरिचितं न त्यजतीत्यर्थः अत्र वर्त्तमानार्थलटाधुना तव श्रमेणाधुना यथा वर्त्तमाना तिष्ठति तथा सप्तसु जन्मसु पुनरग्रे श्रमं विनापि स्थास्यतीति व्यज्यते पतिव्रता यथा तथेत्यर्थः तथाच दुष्टमपि भर्त्तारं सप्तजन्मपर्य्यन्तमनुगमनेन यथा मोदयति तथा सरस्वती सम्यक् सकृदभ्यस्तापि न गच्छतीत्यर्थः ॥६७९॥

**स्वनिलयनिकटे नलिनीमभिनवजातच्छदां निरीक्ष्येव ॥**
**हा गृहिणीति प्रलपंश्चिरागतः सखि पतिः पतितः ॥ ६८० ॥**

नायिका सखीं वक्ति स्वनिलयेति स्वगृहस्य समीपे एवञ्च नयनयोग्यत्वं व्यज्यते कमलिनीमभिनवः नवीनः जात उत्पन्नः छदः पत्रं यस्यास्तामित्यर्थः एवञ्च पुरातनपत्राणां विरहन्त्यर्थमुपयोगादिदानीं न जीवति मम विरहसहमाना सेति भ्रान्त्येत्यर्थः निरीक्ष्येवेत्येवकारेण कथनं विनैवेति व्यज्यते यद्वा अभिनवजातच्छदामेवेत्यन्वयः हागृहिणीतिप्रलापन् भ्रमेणानर्थकं वचनमुच्चारयन्नित्यर्थः चिरागतः पतिः प्रेयान् पतितः मूर्च्छयेतिभावः एवञ्च तस्य प्रेम्णेयं दशा ममाभाग्न्या जीवनं वर्त्तत एवेति लज्जया किं कर्त्तव्यमित्याशयः ॥ ६८० ॥

**सखि चतुरानन भावाद्वैमुख्यं क्वापि नैव दर्शयति ॥**
**अयमेकहृदय एव द्रुहिण इव प्रियतमस्तदपि ॥ ६८१ ॥**

सर्वसपत्न्यां समान एव तव सख्याः पतिरिति वादिनीं नायिकासखी वक्ति सखीति चतुराननभावात् चातुर्य्यात् सर्वासामग्रे तदभिप्रेतालापादिाने यावत् पक्षे चतुर्मुखत्वादित्यर्थः वैमुख्यप्रीत्यभावसूचनं पक्षे असांमुख्यमित्यर्थः क्वापि पत्नीसमूहेपि पक्षे सकलवेदेष्वित्यर्थः अयं ममसर्वाप्रियतमस्तदपि साम्यदर्शने-प्येकमेकाकारं सर्वदा पक्षपातमयमित्यर्थः हृदयमन्तष्करणं यस्य स इत्यर्थः यद्वैकस्यां मम सख्यामेव नान्यत्र हृदयं यस्य सः द्रुहिण इव ध्यानेवेत्यर्थः ॥६८१॥

**सत्यं मधुरो नियतं वक्रो नूनं कलाधरो दयितः ॥**
**सतु वेद न द्वितीयामकलङ्कः प्रतिपदिन्दुरिव ॥ ६८२ ॥**

नायिकासु सर्वासु त्वमेव सर्वगुणशालिनी नान्येति सखीं सखी स्तौति सत्यमिति सर्वान्वयि तव प्रेयान् मधुरः सुन्दरः दर्शनमात्रेण सर्वासां स्पृहा-विषय इति मधुरपदव्यङ्ग्यं तथाच स्वेच्छामात्रेणानेकसमीचीननायिकासौलभ्यमस्य व्यज्यते इति सत्यं मयानुभूतमित्यर्थः नियतं नियमेन व्यवस्थया यत्र वक्रोक्ति-प्रयोजनं तत्रैवेतियावत् वक्रः वक्रोक्तिनिपुण इत्यर्थः तथाच पराङ्गनानुरञ्जनसामर्थ्य-मत्यधिकमितिव्यज्यते कलाधरः चतुःषष्ठिकलाकुशलः कलामय इत्यस्मत्सम्प्रदाय-पाठः सर्वकला स्वरूप एवेति मयटा बोध्यते तेन चतुःषष्ठिकलाभिर्यत्कार्य्यं कर्त्तुं शक्यं तदनेकरूपेण कर्त्तुं शक्यत इति सकललोकवशीकरणसमर्थत्वं सूचितंयुवती-वशीकरणं कियदिति व्यज्यते नूनमित्यनेन पूर्वोक्तमध्ये किमपि काल्पनिकं नेति-कथ्यते दयितस्तवैव प्राणप्रियः नान्यस्या इत्याशयः अकलङ्कः अपवादोपि नास्य तव चातुर्य्यादेवेतीत्याशयः सत्यदोषस्य काकथेत्याशयः अयं तव गुणाधिक्येन वशीभूतः द्वितीयापरिज्ञानरहित एकनारीव्रत एवेतिव्यज्यते प्रतिपच्चन्द्रोपि मनोज्ञो वक्रः कलारूपत्वात् कलाधरषोडशभागयुक्तः द्वितीयानाम्नींतिथिं न जानाति एवञ्च नायकस्तवशीकरणेनोभयधर्म्मं संरक्षणेनसर्वकलाकौशलेन च धन्यासीति वाक्यार्थः औपपत्यंकुर्विति वादिनीं दूतीं नायिका वदति एवञ्च सकलगुणनिधानमुपहाय न करोमीति वाक्यार्थ इति प्राञ्चः मम सखी धन्या यया एवं सुखेन स्थीयते इति काचित्काञ्चिदाहेत्यपरे ॥ ६८२ ॥

**स्वस्थानादपि विचलति मज्जति सलिलेषु नीचमपि भजते ॥**
**निजपक्षरक्षणमनाः सुजनो मैनाक शैल इव ॥ ६८३ ॥**

सपक्षमात्मानं सुजनो रक्षतीति काञ्चित्कश्चिदन्योक्त्या वदति स्वस्थाना-दिति सुजनः स्वस्थानादपि देशान्तरं गच्छति पक्षे भूमिं त्यक्त्वा समुद्रं प्रवि-शतीत्यर्थः आत्मानं मज्जयति सर्वहरणं कारयतीत्यर्थः पक्षे जलमज्जनं भजते नीचं क्षुद्रं पक्षे जलमित्यर्थः निजपक्षाणामाश्रितानां रक्षणे मनो यस्य स इत्यर्थः मैनाकशैल इव मैनाकनामा पर्वत इवेत्यर्थः पूर्वं सपक्षाः शैलाः प्रजानामुपरि पतन्तः प्रजाक्षय-मकुर्वन् तद्दोषेण वज्रेण पक्षच्छेदमकरोदिन्द्रः तदानीं स्वपक्षरक्षार्थं मैनाकः समुद्रस्य जलमयं निजं देशमभजदिति पुराणवार्त्ता ॥ ६८३ ॥

**संवृणु वाष्पजलं सखि भृशमुपरज्याञ्जनेन वलयैनाम् ॥**
**दयितः पश्यतु परमं पल्वलपङ्कोपरक्तशफरयुगम् ॥ ६८४ ॥**

स्वल्पमानशालिनीं नायिकां सखी वदति संवृणिवति हे सखि वाष्पजलं नयनाश्रु संवृणु समाप्तं कुरु इत्यर्थः एनां कोपरोदनरक्तां दृशं नयनमेकत्वमवि-वक्षितं द्वयमित्यर्थः अञ्जनेन कज्जलेनोपरज्य श्यामपार्श्वमयं कृत्वेत्यर्थः वलय रक्ततापरित्यागेन केवलं श्वेतभङ्गमयं कुर्व्वित्यर्थः फलमाह दयितः प्राणवल्लभः एवञ्च सर्वथानुपेक्षणीयत्वं सखीकथनेनावश्यं मानस्य त्याज्यत्वञ्च सूच्यते पश्यतु शफरं मत्स्यविशेषं श्वेतनयनाकारं प्रोष्ठीनामकमित्यर्थः परमं परमसुन्दरमित्यर्थः पल्वलस्य यः पङ्कः कर्द्दमः तदुपरक्तं सद्यस्तस्मादागतमित्यर्थः पल्वलपदेन कर्द्द-मस्य श्यामचिक्कणता सूचनेन कज्जलसादृश्यं व्यज्यते एवञ्च दर्शनानन्दितं नायकं सुखेन स्वाधीनं कुर्व्विति वाक्यार्थः ॥ ६८४ ॥

**सा पाण्डु दुर्ब्बलाङ्गी नयसि त्वं यत्र याति तत्रैव ॥**
**कठिनीव कैतवविदो हस्तग्रहमात्रसाध्या ते ॥ ६८५ ॥**

त्वद्विरहेण खिन्ना स्वभावविह्वला सा सर्व्वथा तवाधीनेति विज्ञाय तामनु-गृहाणेति नायिकासखी नायकं किञ्चिदुदासीनं वदति सेति सा मम सखी त्वद्विरहेण पाण्डु पाण्डुता युक्तं दुर्ब्बलं बलहीनमङ्गं यस्याः सेत्यर्थः स्वयमा-गन्तुमशक्तातो मां सखीं प्रेषितवती ननु दूतीमिति व्यज्यते इदं तव मनसि यदि नायाति तदा सैवातिदुःखेनाप्यत्रैवायास्यतीत्याह यत्र त्वं तां नयसि सैनु-

मिच्छसि तत्रैव सा गच्छतीत्यर्थः सर्व्वप्रकारेण तवैवाधीनेति ते कैतवविदः सकलकपटज्ञस्येत्यर्थः पक्षे छद्मना लेखकस्येत्यर्थः ते तत्र हस्तग्रहमात्रेण न तु महता प्रयासेनेत्यर्थः साध्या भवतीत्यर्थः कठिनी खटिकेव बालस्य ज्योतिश्शास्त्राद्यङ्कलिखनार्थं श्वेतपाषाणमयी सा पाण्डुवर्णा खड़ीति मैथिलभाषया प्रसिद्धा लेखककरायत्ता यथा तथेत्यर्थः॥ ६८५॥

**सखि विश्वगञ्जनीया लक्ष्मीरिव कमलमुखि कदर्य्यस्य॥**
**त्वं प्रवयसोऽस्य रक्षावीक्षणमात्रोपयोग्यासि॥ ६८६॥**

सुरतासमर्थमस्त्रं वृद्धं विहाय पुरुषोत्तमं नायकं मदुक्तं सङ्गम्य झटिति जन्मसाफल्यं कुरु यौवनान्ते किमपि न भविष्यतीति कस्यचिद्दूती नायिकामाह सखीति सखिपदेन हितकथितस्यावश्यकर्त्तव्यत्वं सूच्यते हे कमलमुखि विश्वेषां सर्वेषां गञ्जनीया गर्हणीया कृपणस्य लक्ष्मीरिव प्रवयसो वृद्धस्यास्य गृहे स्थिततया निकटवर्तिनः पत्युः त्वं नितान्तसुन्दरी रक्षावीक्षणाभ्यामेव उपयोग्यासि लक्ष्मीः सम्पत्तिर्य्यथा रक्षणं रक्षा वीक्षणं दर्शनं ताभ्यामेवोपयोग्योपभोग्या नत्विष्टापूर्तदानभोजनादिनाप्युपभोग्या तथा अमुष्यातिसामर्थ्यहीनस्य रक्षणवीक्षणमात्रसमर्थस्य तावन्मात्रोपयोग्यासि न तु कदापि इत्यर्थमपि तवापेक्षेति सर्व्वथा मदुक्तमेव कर्त्तव्यमित्याशयः॥ ६८६॥

इति मैथिलसचलप्रसिद्धभवानीनाथकृतौ चेतोहारिण्यां गोवर्द्धनसप्तशतीटीकायां सकारव्रज्या समाप्ता॥

**हृदयज्ञया गवाक्षे विसदृक्षं किमपि कूजितं सख्या॥**
**यत्कलहभिन्नतल्पा भयकपटोदेति मां सुतनुः॥ ६८७॥**

नायिका मानवर्तीपरितुष्टाजाता नवेति पृच्छकं सखायं रात्रिवृत्तान्तकथनेन नायकः कथयति हृदयज्ञयेति नायिकासख्या विसदृशमिवातिभयानकमिव किमप्यनिर्वचनीयमित्यर्थः कूजितं शब्दितं हृदयज्ञया सखीमनोगताभिप्रायाभिज्ञया एवञ्च नायिकयैव पूर्वं सा सखी शिक्षिता त्वया रात्रौ भयजनकं किमपि कर्त्तव्यं तदा मया भयछलेन कारणं विनैव प्रियस्यालिङ्गनं कर्त्तव्यमित्यावेद्यते हृदयज्ञयेत्यनेन गवाक्षे

छिद्रे मम कलहेन कृतं भिन्नं तल्पं शय्या यया सेत्यर्थः भयच्छलेन एति रात्रौ आगता अतीतस्यागमनस्येदानीमप्यतिशयितानन्ददातृत्वेन वर्त्तमानत्वनिर्द्देशः सुतनुः सुन्दरीत्यर्थः एवञ्च प्रयत्नाभावेनोदासीनमिव मां मत्वा मद्वियोगमसहन्ती सखी शिक्षयित्वा समागतेति धन्योहं नान्योमत्सम इति ध्वनितम् ॥ ६८७ ॥

**हरति हृदयं शलाकानिहितोऽञ्जनतन्तुरेष सखि मुग्धे ॥**
**लोचनबाणमुचान्तभ्रू धनुषा किण इवोल्लिखितः ॥६८८॥**

सम्यक् प्रसाध्य नायकसमीपमानीतेति सखीं सखी परिहसति हरतीति एषः मया शलाकया निहितं यदञ्जनं तत्सूत्ररूपः कज्जलसूत्ररूप इति यावत् हृदयं तव प्रेयसः हरति साभिलाषं करोतीत्यर्थः मम शिल्पकरणं सकलमभूदिति हरतिना व्यज्यते सखि मुग्धेमनोज्ञे नायिकासम्बोधनं त्वत्प्रेयसीत्यर्थो वा लोचनवाणमुचा नेत्ररूपं शरं प्रेषयता ते तव भ्रूरूपस्य कज्जलमयगुणवता धनुषोल्लिखितः सम्पादितः किण इव शरघर्षणजन्यचिन्ह इवेत्यर्थः किणपदेन शरप्रहारबाहुल्यं तेन प्रेमातिशयस्तेनापि विकारबाहुल्यं तेनापि ततः सुगमनादि व्यज्यते ॥ ६८८ ॥

**हससि चरणप्रहारे तल्पादपसारि भुवि स्वपिषि ॥**
**नासदृशेपि कृते प्रिय मम हृदयात्वं विनिःसरसि ॥ ६८९ ॥**

स्वल्पापराधेपि कोपाधिक्येनाधिकभर्त्सनेन नायकमप्रसन्नं दृष्ट्वा लज्जिता प्रसन्ना च नायिकाह हससीति चरणप्रहारे परमानुचितकोपजनके कृतेपि हास्यं करोषि शय्यातो निष्काशितोऽतिदूरगमनयोग्यतायां शय्यासमीपभूमौ शयनं करोषि अत्यन्तानुचितस्य मत्कृतस्य सर्वेषां ज्ञापनार्थमित्याशयः अत एव प्रियधूर्तराज तव निकटे कोपि प्रकारो नास्तीत्याशयः अनुचिते कृतेपि अपिनाचितकरणं समुच्चीयते हृदयात् गृहाच्च महासहिष्णुत्वगुरोः वहिर्न्नयासीत्यर्थः तथाच त्वं जितवानहं सर्वप्रकारेण पराजिता त्वदधीनास्मीत्यागच्छ शय्यामित्यावेद्यते ॥ ६८९ ॥

**हसति सपत्नी श्वश्रूरोदिति वदनञ्च पिदधते सख्यः ॥**
**स्वप्नायितेन तस्यां सुभग त्वन्नाम जल्पन्त्याम् ॥ ६९० ॥**

मया त्वदेकाधीना सम्पादिता सा नायिका यथेच्छसि तथा कुर्व्विति दूती नायकमाह हसतीति सपत्नी हसति पत्युरपि ज्ञानेन प्रेमभङ्गेन स्वस्याधिक्यात् श्वश्रू रोदिति लोकहास्यभयात् सख्यः सर्व्वा वदनं मुखं पिदधते सम्यक्करेणाच्छादयन्ति अश्रुस्याऽस्पष्टताकरणायेत्याशयः बहुवचनेनातिव्याकुलता व्यञ्जकेन प्रेताविष्टेयं किं कथयतीति कपटो व्यज्यते ॥ ६९० ॥

**हृदयं मम प्रतिक्षणविहितावृत्तिः सखे प्रियाशोकः ॥**
**प्रबलो विदारयिष्यति जलकलशन्तीरवेलेव ॥ ६९१ ॥**

प्रथमतो गमनोद्यतस्तदानीमेव प्रियाशोकरसे मग्नोऽतिविकलमनास्सखार्थं पृच्छसि हृदयमिति सखे इत्यनेन बहुधा परदेशगमनागमनशीलत्वेनोपदेशकर्तृत्वं व्यज्यते प्रियाशोकः प्रियावियोगजनितः शोकः मम हृदयं विदारयिष्यति खण्डखण्डं करिष्यतीत्यर्थः किमितिशेषः प्रतिक्षणं विहितावृत्तिरुत्पत्तिपरम्परा येनेत्यर्थः पक्षे आवृत्तिः गमनागमनं येन बलवान् कथमपि निवारणाशक्यः जलकलशं जलस्थितं तुच्छं कलशं नीरवेग इव जलतरङ्ग इवेत्यर्थः यथा जलतरङ्गः आगमागमपरम्परारूपः जलस्थितं घटं निमज्जितोन्मज्जितं कृत्वा तीरपाषादिना पाटयति तथा प्रियावियोगशोकः मम हृदयं क्रोशमात्रगमनेऽपि स्फोटयिष्यतीत्यर्थः प्रतिकारं त्वं वदेति वाक्यार्थः मयापि कथमपि गन्तुं न शक्यत इत्याशयः ॥ ६९१ ॥

**हन्त विरहः समन्ताज्ज्वलयति दुर्व्वारतीव्रसंवेगः ॥**
**अरुणस्तपनशिलामिव पुनर्न्न मां भस्मसान्नयति ॥ ६९२ ॥**

विरहदुःखापेक्षया मरणमेव श्रेय इति काचिद्विरहिणी व्याकुलातिदूरस्थपतिका सखीमाह हन्तेति हन्तपदेन वाक्यमुखस्थेन स मरणान्तिकशतगुणितः क्लेशो विरहज इतिव्यज्यते विरहः समन्तात्सर्व्वाङ्गं ज्वलयति दाहमयं करोतीत्यर्थः दुर्व्वारः दुःखेनापि वारयितुमशक्यः तीव्रः महोत्कटः संवेगः अधिकसम्बन्धः यस्य स तथा अरुणः सूर्य्यः तपनशिलां सूर्य्यकान्तं यथा ज्वलयति तथा मां विरहो ज्वलयति भस्मभावं न नयतीत्यर्थः क्वचिद्भस्म भावयतीत्येव पाठः सुगमः ॥६९२॥

हृत्वा तटिनि तरङ्गैर्भ्रमितश्चक्रेषु नाशये निहितः ॥
फलदलवल्कलरहितस्त्वयान्तरिक्ते तरुस्त्यक्तः ॥ ६६३ ॥

कश्चित्काश्चिदन्योक्तया वदति हृत्वेति तटिनि तरङ्गैर्वीचिभिः कृत्वा स्वस्थानादानीयेत्यर्थः चक्रेष्वम्भसाम्भ्रमेषु भ्रमितः भ्रमणं प्रापितः फलदलवल्ल-शून्यः त्वयान्तरिक्षे आकाशे वृक्षस्त्यक्तः आशये प्रवाहे न धृत इत्यर्थः प्रथमं कटाक्षादिना सम्यक् प्रतार्य्यैनश्चालयित्वा सर्वथानिस्वं कृत्वा पश्चादकस्मात्परित्यक्तः कश्चिदतः परं तव विश्वासेन न पुनरायास्यतीति भावः ॥ ६६३ ॥

हृतकाञ्चिवल्लिबन्धोत्तरजघनादपरभोगिभुक्तायाः ॥
मोहयति रोमराजी स्तनशम्भोर्गरललेखेव ॥ ६६४ ॥

प्राथमिकगर्भादल्पपुष्टां नायिकां नायकः परिहसन्नाह हृतेति जघनात् हृतः किञ्चिपुष्टत्वदोषेण गतः काञ्चिवल्लिबन्धः क्षुद्रघण्टिकालताबन्धनं यत्र तादृशमुत्तरमुच्छूनं यत् जघनं तस्मादित्यर्थः परो मद्भिन्नः न परः अपरः तेन मत्स्वरूपेण भोगिना परमभोगशालिना भुक्ताया इत्यर्थः एवञ्च यथेष्टं भुक्तायास्तव गर्भधारणं महोत्सवजनकमित्याशयः अर्थान्तरसंक्रमितेनापरेत्यादिना परिहासोपि गम्यते तेन च मृदुशरीरास्मिन् समये रतार्थं मया न योज्यसे इति व्यज्यते त्रिवलीलोपेनोर्द्धमागता रोमाली गरललेखेव विषलेखेव मोहयति मूर्च्छयतीत्यर्थः पूर्व्वापेक्षया शतगुणाधिकविकारसम्पादिका भवतीतिभावः कश्चित्तु नायिकां सखी परिहसति न वर्त्तते परः अधिको यस्मात्सोऽपरः महाप्रवीणरूपुषभोगः सोस्ति यस्य स भोगी तेन सम्यक्भुक्ताया इत्यर्थः एवञ्च सुरताधिक्येन स्फुरितजघनाया हृतकाञ्चिवल्लिबन्धनात् जघनादुपरि आगता रोमावली विषलेखेव शङ्करगलविषलेखेव नायकान्तरं मोहयतीतिवाक्यार्थः ॥ ६६४ ॥

इतिश्रीमन्मैथिलसचलमिश्रविरचितायां चेतोहरिण्यामार्य्यासप्तशतीटीकायां हकारव्रज्या समाप्ता

क्षीणस्य दयितदुर्न्नयतापितमासाद्य शीतरहितत्वम् ॥
अङ्गान्यानयति शनैः प्रेम्णः शेषो ज्वरस्येव ॥ ६६५ ॥

कयापि चेष्टयानीते तस्मिन्नायके स प्रेमैवेयं त्वदुक्तं प्रेमभङ्गं न निश्चिनो-मीतिवादिनीं सखीं सत्यमेव मयोक्तमिति सखी वदति क्षीणस्येति प्रेम्णः शेषः शीतरहितत्वमङ्गानि शनैरानयतीति सम्बन्धः नयतेर्द्विकर्म्मकत्वात् शीतपदेन शीतलगुणवाचकेन प्रेमकृतशैत्यमुच्यते तद्राहित्यं सर्वप्रकारेण तदभावं हृदये शरीरे च प्रीत्यभावमित्यर्थः यद्वा शीतरहितत्वमुष्णत्वं प्रीत्यभावदुष्टत्वमित्याशयः अङ्गानि सर्वाङ्गानीत्यर्थः आनयति प्रापयतीत्यर्थः शनैश्चिरस्थितस्य प्रेम्णः चिरकालेन निवृत्तिर्न झटितीत्याशयः ज्वरस्य शीतज्वरस्य क्षीणस्य जीर्णस्य शेषः शेषभागः दयितः प्रियो दुर्नयः कुपथ्याचारः तेन नाशितं ज्वरितं रोगिणमासाद्य प्राप्येत्यर्थः शेष इत्यन्वयः क्षीणस्येति वा शीतरहितत्वं शीतलेशशून्यत्वमङ्गानि यथातिचिर-कालेन नयति न शीघ्रं तथा दयितस्य प्रियस्य दुर्नयेन लम्पटत्वादिना तापितं तप्तं नायिकाजनं प्राप्य क्षीणस्य प्रेम्णः शेषः लेशः क्रमेणाङ्गान्यपि प्रेमशून्यत्वं नयतीत्यर्थः एवञ्च पूर्वाभ्यासेनाङ्गचेष्टामात्रं वास्तविकं प्रेम गतमेवेत्याशयः अत्र प्रेमभङ्गकथनेन रसाभासे व्याख्यान्तरं काचित्काञ्चिद्वदति शीतरहितत्वं प्रीत्यभाव-मङ्गानि शरीराणि आनयति नान्तःकरणमित्याशयः मन्दं नयति न शीघ्रमित्य-तोपि ज्ञायते नायकमधीनं कर्त्तुं सर्वमिदं नान्यथा यथा जीर्णज्वरशेषः शनौषधैर्न्न गच्छति यावज्जीवभावी तथास्याः प्रेमापीत्याशयः ॥ ६६५ ॥

**क्षान्तमपसारितो यच्चरणावुपधाय सुप्त एवासि ॥**
**उद्घाटयसि किमूरू निःश्वासैः पुलकयन्नुष्णैः ॥ ६६६ ॥**

नायिका चरणपतितं नायकं त्यक्तमानारताङ्गीकारमाह क्षान्तमिति अप-सारितः भर्त्सनादिना गृहान्निष्कासितः एवञ्चावश्यगमनयोग्यत्वेपि अगमनेन कोपशून्यत्वं व्यज्यते मम चरणौ उपधायोपधानीकृत्यच सुप्तोसि भूमौ सुप्त एव भवसीत्यर्थः एवञ्च चरणग्रहणपूर्वकभूमिजागरणेन मया क्षान्तं त्वदीयानुचित-करणमसह्यमपि सोढव्यमेवेत्याशयः अत एव निःश्वासैरतिलम्बायमानैरित्यर्थः उष्णैरन्तष्करणस्थमदनोष्मसहितैरित्यर्थः ऊरू जानूर्द्ध्वभागौ पुलकयन् मूलपर्य्यन्तं रोमाञ्चयुतौ कुर्वन् किमुद्घाटयसि निवस्त्रौ किं कुरुषे वृथा कुरुषे इत्यर्थः एवञ्चा-निवार्य्योसि यदस्यामवस्थायामप्यतोवधौर्त्येन मां सविकाराङ्करोष्यस्यतो मम शय्यामागत्य यथेष्टं विहरेति व्यज्यते ॥ ६६६ ॥

**क्षुद्रोद्भवस्य कटुतां प्रकटयतो विदधतश्च मदमुच्चैः॥**
**मधुनोधमपुरुषस्य च गरिमा लघिमा च भेदाय॥ ६९७॥**

मदिरासक्तस्येवाधमपुरुषसङ्गिनोपि सर्वथा सर्वदा लाघवमेव न गौरवलेशोपीति कश्चित्कञ्चिदाह क्षुद्रेति मधुनो मद्यस्य नीचपुरुषस्य च गुरुत्वलघुत्वे एव भेदाय परस्परव्यावर्तनाय भवतः धर्मान्तराणां तुल्यत्वादितिभावः तुल्यत्वमेव दर्शयति क्षुद्रेत्यादिना क्षुद्रा मधुमक्षिका तदुत्पन्नस्य तत्संगृहीतस्य क्षुद्रायाः संगृह्य प्रत्यक्षीकृतस्येति यावद्धिमवतः प्रभवति गंगेतिवत् पक्षे क्षुद्रेणातिनीचेनोत्पादितस्येत्यर्थः कटुतां माधुर्य्याधिक्यप्रयुक्तं जिह्वातिशैथिल्यं कटुरसोपि तत्र वर्त्तते इति वा यद्वा वैद्यके रूक्षगुणपाठे मधुनः पाठात् रूक्षतामित्येवार्थः पक्षे तीक्ष्णतां सकलशिष्टानभिमतकर्म्मवचनादिरचनामितियावत् प्रकटयतः प्रत्यक्षं कारयतः पक्षे आचरतः उच्चैर्म्मदं मत्तत्वं पक्षे वृथागर्वं विदधतः कुर्वत इत्यर्थः चकारस्स मुच्चये मधुनः गरिमा आपानौषधादिद्वारेण परहिताचरणाद्गुरुत्वमित्यर्थः यद्वा मधुनोतिगाढत्वात्स्वाभाविकं गुरुत्वम् अधमपुरुषस्य लघिमा मनसा वाचा कर्मणा सर्वथा सर्वस्याहितकरणेन लघुत्वमित्यर्थः चकारो गुणबाहुल्यदोषबाहुल्ये सूचयतस्तेन सर्वथाधमस्य संभाषणमपि वर्ज्जनीयमित्यावेद्यते तेनापि व्रज्यासमाप्तिसमये कथनेनास्य ग्रन्थस्य खलसम्बन्धो न कर्त्तव्य इति सारार्थो व्यज्यते॥६९७॥

इति श्रीमहामहोपाध्यायसन्मिश्रश्रीसच्चलशर्म्मविरचितायां चेतोहारिण्यां गोवर्द्धनसप्तशतीटीकायां क्षकारव्रज्या समाप्ता।

**पूर्व्वैर्विभिन्नवृत्तां गुणाढ्यभवभूतिबाणरघुकारैः॥**
**वाग्देवीं भजतो मम सन्तः पश्यन्तु को दोषः॥ ६९८॥**

वर्ण्यावर्ण्यशृङ्गारप्रायवर्णनेन सुलघुतां परिहरन् गुणाढ्यः महाकथाकर्त्ता भवभूतिर्मालत्यादिकर्त्ता बाणः कादम्बरीकर्त्ता रघुकारः रघुवंशकर्त्ता एभ्यः प्रसिद्धेभ्यो महाकविभ्यः शब्देन स्वस्य ग्रन्थस्य साम्यं व्यञ्जनयाधिक्यं च प्रतिपादयन् ग्रन्थकर्त्ताह पूर्व्वैरिति वाग्देवीं सरस्वतीं भजतः काव्यप्रबन्धकरणेन विवेचयतः इत्यर्थः मम ममापीत्यर्थः सन्तः काव्यरसाभिज्ञाः पश्यन्तु जानन्त्वित्यर्थः को दोषः मम न कोपीत्यर्थः रसिकानभिज्ञापनापि नत्वरसिकानित्यावेद्यते सन्तःपदेन

वाग्देवीं विशेषयति पूर्वैः प्राचीनैः पूर्वपदेन बहुवचनान्तेन सर्व्वाभ्यर्हिता अविगीतशिष्टाचारविषयत्वकथनेन सर्वथा मम दोषाभाव इतिभावः गुणाढ्यभवभूतिवाणरघुकारैरतिशिष्टैरित्यर्थः विभिन्नं विशेषेण भिन्नं वृत्तं छन्दोनुष्टुभादिभेदो यस्यास्तामित्यर्थः एवञ्च नानाछन्दसा नानाबन्धेन भजतामिव न ममापि दोषः इत्याशयः तथात्र यथा गुणाढ्यादयः कवयस्तथाहं यथा तत्काव्यं तथा मदीया सप्तशतीति वाक्यार्थः अथच वचनं वाग्वाचां देवीं वाग्देवीमित्यर्थः कृताभिषेकां काञ्चिद्वदित्यर्थः विभिन्ना प्रतिपुरुषसंगमे विलक्षणं वृत्तं वृत्तान्तो यस्यास्तामित्यर्थः यद्वा गुणाढ्यादिसत्पुरुषैरन्यैः कालिदासादिभिश्च वैदेशिकैरपि विभिन्नं विदारितं वृत्तं शीलं चरितं यस्या इत्यर्थः एवञ्च बहुव्यभिचरितस्त्रीसम्भोगे पापाल्पत्वापराधाल्पत्वेन न मम दोष इति सन्तः पश्यन्तु वस्तुनस्तु न मम दोषः ग्रन्थस्य वृत्तभेदाभावादार्य्यामात्ररूपत्वादतस्संरक्षितैकवृत्तां वाग्देवीं मातरमिव सेवता मम वृत्तं विनाश्यं वेश्यामिव तां वाग्देवीं भजद्भिर्गुणाढ्यादिभिः कथं साम्यं मम ग्रन्थस्य तद्ग्रन्थसाम्यं वा कथमिति व्यङ्ग्यव्यतिरेकालङ्कारेणातिशयो द्योत्यते वृत्तं शीले च वार्त्तायां छन्दस्यपि निगद्यत इति यादवः ॥ ६९८ ॥

**सत्पात्रोपनयोचितशब्दप्रतिबिम्बिताभिनववस्तु ॥**
**कस्य न जनयति हर्षं सत्काव्यं मधुरवचनञ्च ॥ ६९९ ॥**

स्वग्रन्थस्यान्यग्रन्थापेक्षयोत्कर्षमाह सत्पात्रेति सत्काव्यमुत्तमकाव्यमेतद्ग्रन्थरूपमितियावत् मधुरवचनञ्च काव्यानारूढमपि शिष्टवचनञ्चेत्यर्थः न चानयोरभेदः मधुरत्वं विना सत्काव्यत्वस्य कटृक्षरप्रधानवीररसवर्णनकाव्ये सत्वे न काव्यत्वं विना स्त्रीबालशुकोदीरिते मधुरत्वस्य सत्वेन भेदात् यद्वा सत्काव्यं शब्दार्थोभयरूपं मधुरवचनञ्च मिष्टवचनमात्रमिति भेदः कस्य हर्षं सुखं न जनयत्यपितु सर्व्वस्येत्यर्थः एवञ्चार्थशब्दोभयद्वारकसुखजनकं सत्काव्यं श्रवणमात्रसुखदमधुरवचनादप्यधिकमित्यावेद्यते यद्वोच्यते अनेनेति करणे ल्युटा वचनं मुखं मधुरं च तत् मुखञ्चेति समासेन परमसुन्दरं रमणीमुखमित्यर्थः उभयमपि विशेषयति सत्पात्रेषु काव्यरसाभिज्ञेषु य उपनयः प्रापणम् उपचय इतिपाठे उपचयस्संग्रह इत्यर्थः तत्रोचितं योग्यमित्यर्थः तथा च रसिकस्यैव मम काव्येऽधिकारो

नान्यस्येत्युचितपदेन व्यज्यते शब्दे पद्ये प्रतिबिम्बितं व्यञ्जनया लभ्यमभिमतं वस्तुसारं यस्य तच्छन्दप्रतिबिम्बिताभिमतवस्त्वित्यर्थः सत्काव्यमित्याशयः पक्षे सत्पात्रे सुन्दरवदने यूनि य उपनयः योजनं तत्रोचितः समुचितः यः शब्दः तत्र प्रतिबिम्बितं सम्यग् ज्ञातमभिमतं चुम्बनादिवस्तु यत्र तन्मधुरवचनञ्चेत्यर्थः यद्वा सत्पात्राभ्यां श्रोतृप्रवक्तृभ्यामुपनययोग्यः शब्दस्तत्रेत्यादिक्रमेणार्थः सत्काव्यश्रवणे सर्व्वस्य हर्षमिति केचित्तु सत्पात्रोपनयोचितसत्प्रतिबिम्बविभिन्ननववस्तु इतिपूर्व्वार्द्धं पठित्वा पक्षत्रयं कृत्वालापयन्ति तथाहि नवं नवीनं वस्तु पदार्थः सत्काव्यं मधुरवचनं चैतत् त्रितयं कस्य न हर्षं जनयतीतिपूर्व्ववत् वस्तु कीदृशं समीचीनं यत्पात्रं सम्पुटादि तत्रोपनयाय स्थापनायोचितं योग्यमित्यर्थः एवञ्च बहुमूल्यत्वं यत्नेन संरक्षणयोग्यत्वं व्यज्यते सन् स्वच्छः प्रतिबिम्बो यत्र तत्स्वच्छरत्ने प्रतिबिम्बः स्पष्ट एव भवतीतिभावः अविभिन्नमविदारितमेकाकारतया बहुकालस्थायि वा न तु मुक्तादिवदल्पकालस्थायीत्यर्थः तथाच सर्वगुणोपेतं रत्नं वस्तुपदेन कथ्यते सत्काव्यं कीदृशं सत्पात्रे निपुणरसज्ञे सहृदयपदवाच्ये पुंसि य उपनयः प्रापणं तत्रोचितं योग्यमित्यर्थः तेन सहृदयस्यैव सत्काव्यश्रवणेऽधिकार इति भावः सत्सु रसिकेषु प्रतिबिम्बः सम्यग्बोधो यस्य तत्पठनेपि सत्काव्यबोधो रसिकस्यैवेत्याशयः अभिन्नं सर्वसहृदयान् प्रत्येकाकारं मधुरवचनञ्च कीदृशं सत्पात्राय समीचीनाय प्राघुणिकायोपनयेन विनयेनोचितं कर्त्तुं योग्यमित्यर्थः तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचनेतिस्मरणात् समीचीनः प्रतिबिम्बो यस्यैतादृशो यश्चन्द्रः ततोऽभिन्नं तद्रूपमितिभावः एवञ्च मधुरवचसो देवत्वं वचने सुधात्वमावेद्यते पुण्यादिबाहुल्यञ्च यद्वा सतां स्ववाक्ये उच्चारकत्वेन विस्वभूतानां प्रतिबिम्बः प्रतिकृतिः अत एवाभिन्नमभिन्नमिवेत्यर्थः एकवाक्यश्रवणेनैव वक्तुः सकलगुणबोधकं मधुरवचनं भवतीत्याशयः यद्वा मधुं दैत्यं रातिवध्यत्वेनाङ्गीकरोति मधुरः परमेश्वरः तस्य वचनं तत्प्रतिपादकं पुराणादि यद्वा पूर्वोक्तयुक्त्या परमेश्वरस्य मुखं चिन्तितं कस्य न हर्षं जनयतीत्यन्वयः यद्वा मधुरस्य परमेश्वरस्य वचनं वेदरूपं कस्य ब्राह्मणः संसारित्वात् हर्षमद्भुतानन्दं न जनयति संभवन्तोपि पक्षा विस्तरभयान्न लिखिताः ॥ ६९९ ॥

**एकाध्वनिद्वितीया त्रिभुनसारस्फुटोक्तिचातुर्य्याः ॥**
**पञ्चेषुषट्पदहिता भूषा श्रवणस्य सप्तशती ॥ ७०० ॥**

ममार्य्यासप्तशती येन सहृदयेन न श्रुता बहुरत्नभूषितावपि तस्य कर्णौ भूषाशून्यावेव भवत इत्याह एकेति श्रवणस्य सुहृदयश्रोत्रेन्द्रियस्येत्यर्थः तथा च भूषणे अयोग्यमप्याकाशमार्य्यासप्तशती भूषयतीत्याशयः यद्वा कर्णस्य सहृदयकर्णसामान्यस्यैकत्वमविवक्षितमार्य्यासप्तशती भूषा भूषणमित्यर्थः आस्तामितिशेषः एवञ्चानया विना सज्जलकर्णा अभूषिता वेत्याशयः किं भूता सप्तशती एका केवला सजातीयद्वितीयरहिता सर्वविलक्षणेतियावत् यद्वा एका मुख्या गाथा सप्तशतीनां विलक्षणेत्यर्थः श्रवणप्रियत्वेपि कर्णभूषणयोग्येत्याशयः अत एव श्रवणस्य भूषेत्युच्यते सजातीयरहितत्वं मुख्यत्वञ्चाह ध्वनिद्वितीया ध्वनिः ध्वननं व्यञ्जनमेव द्वितीयसहकारिणी यस्याः सेत्यर्थः एवञ्च सम्पूर्णसप्तशतीसहकारित्वमेव ध्वनेरित्थञ्च नैकोपि श्लोको व्यञ्जनारहित इति भावः त्रिभुवने स्वर्गे मर्त्ये पाताले च सारं सफलत्वं ययेत्यर्थः एवञ्चासारमपि त्रिभुवनं पूर्णमिदानीमनया ससारं संवृत्तमिति स्फुटं व्यक्तमुक्तिचातुर्य्यं यस्यां सेत्यर्थः पञ्चेषुर्म्मदनः स एव षट्पदो भ्रमरस्तस्य हिता इष्टा मदनकर्त्तव्यं सप्तशतीं ज्ञात्वा सुखेनैव क्रियते इत्याशयः तथा च सप्तशतीनामको ग्रन्थः सर्वथा सहृदयैः श्रोतव्य इति सहृदयप्रार्थनावाक्यार्थः यद्वा एकस्य केवलस्य त्रिविधभेदरहितस्य ब्रह्मण इति यावत् अध्वनि पथि मार्गे इत्यर्थः द्वितीया सहचारिणीत्यर्थः तथाचार्य्यासप्तशती शृंगाररसप्रत्यक्षद्वारेण मोक्षदात्री रसो वै स इति श्रुतेः ब्रह्मविस्वैव भवतीतिभावः त्रिभुवनं सारं सारभूतं यया तत्वब्रह्मस्यैव ब्रह्माभेदेन स्फुरितस्याखिलस्य संसारस्य सारत्वं सोम्यमेवेदमग्र आसीदितिश्रुतेः तद्भिन्नतया ज्ञातस्य मिथ्यात्वमेवेत्याशयः अस्फुटा अतद्व्यावृत्तबोधिका न साक्षान्नेतीतिश्रुतिरूपेत्यर्थः उक्तिर्व्वचनं तया चातुर्य्यं विज्ञकवेद्यतया बोधकत्वं यस्याः सेत्यर्थः भङ्ग्या परमेश्वरप्रतिपादिकेति समुदायार्थः यद्वा स्फुटोक्तिः प्रव्यक्ततया कथनं तया निर्गुणस्यापि काल्पनिकसगुणत्वकथनचातुर्य्यं यस्याः सेत्यर्थः एवञ्च वाचामगोचरस्य प्रतिपादनेनातिचातुर्य्यमित्याशयः पञ्चेषुणा मदनेन षट्कामक्रोधादयः षट् तेषां पदं गमनं तत्र हिता सहकारिणीत्यर्थः श्रवणस्य श्रवणविधिविहितस्य भूषा भूषणरूपा शृङ्गार

रसप्रत्यक्षेणापि मोक्षदायिकेत्यर्थः ब्रह्मरूपा सप्तशती सतां मोक्षार्थिनां हृदि तिष्ठतु इत्यनेन सप्तशती परिशीलनं तेषां सदा समुचितमिति व्यज्यते एका ध्वनिर्द्वितीया त्रिभुवनसारा स्फुटोक्तिचातुर्य्या पञ्चेषुहिता षट्पदहिता श्रवणभूषेति क्रमेण प्रथमशतमारभ्य प्रतिशतकं नामानि द्रष्टव्यानीति सङ्ख्याक्रमकथनफलं नायिका-परतयालापनं स्फुटत्वाद्विस्तरभयाच्चोपेक्षितमस्माभिः ॥ ७०० ॥

**कविसमरसिंहनादः स्वरानुवादः सुखैकसंवादः ॥**
**विद्वद्विनोदकन्दः सन्दर्भोऽयं मया सृष्टः ॥ ७०१ ॥**

विवादोपकारिण्यपि सप्तशतीत्याह कवीति कवीनां समरे विवादे सिंहनादः अयं सन्दर्भः मया सृष्ट इत्यन्वयः यथा सिंहशब्दं श्रुत्वैव प्रतिपक्षा दर्पहीनाः पलायन्ते तथाऽमुं ग्रन्थं श्रुत्वा प्रतिवादिन इत्यर्थः स्वरा ऋषभादयः ते अनुवादाः यस्य स इत्यर्थः तथा च स्वरश्रवणजसुखतोऽप्येतद्ग्रन्थश्रवणे सुखाधिक्यमित्या-वेद्यते सुधायाः पीयूषस्यैकः केवलः संवादः सादृश्यं यस्य स इत्यर्थः यद्वा सुधायामेकस्संवादस्सादृश्यं यस्य स इत्यर्थः ग्रन्थसदृशी सुधा न तु सुधसदृशो ग्रन्थः सादृश्यप्रतियोगिन एवातिशयादितिभावः तथाच मर्त्यानां सुधाधिकरस-प्रदमदीयग्रन्थशीलनेन देवाधिकत्वमितिगम्यते विदुषां सहृदयानां विनोदस्य चमत्कारस्य कन्दः मूलकारणमित्यर्थः एतेन अविदग्धानां विनोदविरहो लक्षितः अयं प्रत्यक्षः सन्दर्भो ग्रन्थः मया गोवर्द्धनाचार्य्येण सृष्टः कृत इत्यर्थः प्रत्येकमेव श्लोकानां रसास्वादजनकत्वं शृङ्गाररसप्रतिपादकत्वेन च सकलस्यैकप्रबन्धत्वमि-तिवैलक्षण्येन सुखजनकत्वात्सकलग्रन्थविलक्षणत्वं मम ग्रन्थस्येति व्यङ्ग्यम् ॥ ७०१ ॥

**उदयनबलभद्राभ्यां सप्तशती शिष्यसोदराभ्यां मे ॥**
**द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्म्मलीकृत्य ॥ ७०२ ॥**

अथ ग्रन्थे पदाशुद्धिरर्थाशुद्धिर्वा सहसा न केनापि कर्त्तव्येत्याह उदयनेति मम सप्तशती मया सावसाधतया कृता सप्तशतीत्यर्थः उदयनः शिष्यः सोदरो भ्राता बलभद्रः ताभ्यां निर्म्मलीकृत्य सम्यक्संशोध्य प्रकाशिता शिष्यादिद्वारेण नवीनप्राचीनरसिकपण्डितविवेचनेन च सम्यक् प्रचारितेत्यर्थः तथाच बहुधा

बहुयोग्यशोधितत्वेन कुशङ्का न कार्य्येत्याशयः रविचन्द्राभ्यां सूर्य्याचन्द्रमोभ्यां द्यौःप्रभामण्डलेन निर्मलीकृत्य न स्वच्छां कृत्वा यथा प्रकाश्यते तथेत्यर्थः ॥७०२ ॥

**हरिचरणाञ्जलिममलं कविवरहर्षाय बुद्धिमान् सततम् ॥**
**अकृतार्यासप्तशतीमेतां गोवर्द्धनाचार्यः ॥ ७०३ ॥**

हरीति गोवर्द्धनाचार्य्यः निखिलशास्त्रज्ञातेत्यर्थः एतां प्रत्यक्षामार्य्यासप्तशतीमकृत कृतवानित्यर्थः अपरोक्षेपि परोक्षवन्निर्देश औद्धत्यपरोत्यपरिहाय बुद्धिमान् यावच्चन्द्रार्कस्थायिनी कीर्त्तिरन्यथा न भवतीत्याशयः सततं सर्व्वकालं कविवराणां रसिकपण्डितसहृदयानां हर्षाय चमत्काराय रसप्रत्यक्षायेतियावत् हरेः षोडशसहस्त्ररमणीप्रियस्य श्रीकृष्णस्य चरणयोरञ्जलिं करसम्पुटम् अजाकर्णेन विद्वांसं करसम्पुटकेन चेतिस्मरणादमलं स्वच्छं विधायेत्यर्थः यद्वा हरिचरणाञ्जलिं हरिचरणार्प्पणाय कुसुमाञ्जलिं सप्तशतीमकृतेत्यन्वयः यज्जुहोषीत्यादिस्मरणादित्याशयः ॥ ७०३ ॥

न रोधो यद्द्वारे न च खलजनो यस्य सदने
नचास्ते दारिद्र्यं भजति भजतो वा न भजतः ॥
यथा येषां वाञ्छा वितरति तथा कल्पतरुव-
त्तमीशानं तूर्णं जगति परिपूर्णं भज सखे ॥ १ ॥
मधुरं गङ्गाजलमिति तन्मूलं चरणपङ्कजं कीदृक् ॥
इत्यङ्गुष्ठास्वादी मनसि यशोदासुतो वसतु ॥ २ ॥

इतिमहामहोपाध्यायमिश्रश्रीसचलविरचितार्यासप्तशतीटीका
चेतोहारिणी समाप्ता।



# वंशावली


म० म० सचलमिश्र
खगदत्तमिश्र
दत्तमिश्र
देवनाथमिश्र
वैद्यनाथमिश्र
लोकनाथमिश्र
गिरिजानाथमिश्र
कण्ठमिश्र,
यदुनाथमिश्र
तारानाथमिश्र,
भोलानाथमिश्र,
हरिनाथमिश्र,
शक्तिनाथमिश्र
उपनाम केशीमिश्र
आनन्दमिश्र
गोविन्दमिश्र
हरदेवमिश्र
जयदेवमिश्र
शुकदेवमिश्र
रेवतीनाथमिश्र
ललितनाथमिश्र
लक्ष्मीनाथमिश्र
रामनाथमिश्र
जानकीनाथमिश्र
भरथमिश्र
सोमनाथमिश्र

